*IMPRIMATUR:*

| | |
|---|---|
| DANIEL CALCUTTA,<br>T. DEALTRY, L.L.B. *Archdeacon*,<br>G. U. WITHERS, A.M. *Prof. Bish. Coll.* | Ordinary Synd |
| J. W. J. OUSELEY,<br>G. T. MARSHALL, | Associate Synd |

OCTOBER, MDCCCXXXVII.

श्रीपित्रे पुत्रायच सदात्मनेच नमः ॥ शिष्य उवाच ॥ भूमण्डलस्थाः सकला मनुष्या मज्जन्ति पापाब्धितरङ्गमध्ये । केनानुजीवेयुरतो गुरो ते तन्मां विमूढं कृपया वद त्वं ॥१॥ पृष्टा मयान्ये गुरवोऽपि ते तु परस्परं भिन्नमताः समस्ताः । नानोपदेशं कथयन्ति तस्मात् तेषां मते नास्ति रुचिर्मदीया ॥२॥ मद्भाग्यतस्त्वं समुपस्थितस्तु यथार्थशास्त्रैकपथानुयायी । अतो गुरो मे दययादिश त्वमाराधनात्कस्य भवेन्नृमुक्तिः ॥३॥ गुरुरुवाच । साधु पृष्टं त्वया शिष्य सत्यमार्गानुसन्धिना । अतो वक्ष्येऽधुनाहं त्वां परित्राणपथं नृणां ॥४॥ ईश्वरैकसुते ख्रीष्टे विश्वासोऽभेदरूपकः । मुक्त्युपायो नृणामेक ईशेन स्थापितो भुवि ॥५॥ शिष्य उवाच ॥ कोऽसौ ख्रीष्टो नरा यत्र विश्वासान्मुक्तिमाप्नुयुः । यत्राभेदमतिः कार्य्या स चेशैकसुतः कथं ॥६॥ तत्सर्व्वं श्रोतुमिच्छामि संशयच्छेदहेतवे । यस्य प्रत्ययमात्रेण ज्ञानदृष्टिर्भवेन्नृणां ॥७॥ गुरु

रुवाच ॥ अथ यद्यत्त्वया पृष्टमिदानीं शरलात्मना । शृण्वनन्यमना भूत्वा गदतो विस्तरा
न्मम ॥८॥ विश्वादौ संस्थितः शब्दः स चेशेन परात्मना । सहासीन्न पृथक् सो ऽपि स्थितः
सततमीश्वरः ॥९॥ ईश्वरीयगुणाः सर्व्वे तस्मिन्नित्यं हि संस्थिताः । ईश एव स शब्दो
ऽस्ति न च तल्लवो ऽप्यतः ॥१०॥ स तु सर्व्वजगत्स्रष्टाजरो ऽनाश्यो ऽप्यजस्तथा । अविकारो
निराकारो रागद्वेषादिवर्जितः ॥११॥ अदृश्यः समदृष्टिश्च सर्व्वव्यापी विभुस्तथा । रज
स्तमोविहीनः सन्नप्रमेयो दयामयः ॥१२॥ इत्याद्याः पितरीशे ये गुणरत्नाकरे गुणाः ।
अनिर्व्वाच्या अनिर्णेयाः स्वर्गवासिगणैरपि ॥१३॥ ते तथैवेशशब्दे ऽपि तत्सरूपे स्थिता ध्रुवं ।
तद्वस्तुप्रतिमूर्त्तौ तत्तेजउज्ज्वलने ऽपि च ॥१४॥ ईश ईशात्स जातः प्राक् सर्व्वपिष्टपसृष्टितः ।
मत्प्रकाशात्प्रकाशश्च सदीशश्च सदीश्वरात् ॥१५॥ न सृष्टः स हि जातस्तु नित्यकालावधि ध्रुवं ।

स मूर्त्तिः परमेशस्य तच्छक्तिर्बुद्धिरेवच ॥१६॥ तद्युक्तोऽखिलमेतद्वै ससर्जेशश्चराचरं । तद्धीनेन
न सृष्टं तु यत्स्थितं यद्बभूव वा ॥१७॥ यथान्तःकरणाद्वाणी निर्गता तत्र संस्थिता । तथेशात्स-
विनिर्यातस्तस्य चापि हृदि स्थितः ॥१८॥ यथा सौरोज्ज्वलश्चैव सूर्य्याज्जातोऽप्यभिन्नकः ।
तथेशाज्जायमानोऽपि तदभिन्नः स विद्यते ॥१९॥ एतादृशगुणः पुत्रः स्वर्गं पितृनिभस्त्यजन् ।
धरणिस्थान् परित्रातुं स्वस्रष्टाज्ञाविवर्जिनः ॥२०॥ अदृश्यं चैश्वरं रूपं नृरूपेणापि गोपितं । ३
नृभ्यो दर्शयितुं सत्यद्युतिजीवनदायकं ॥२१॥ अवतीर्णोऽभवद्भूमौ स्वसृष्टायामपीश्वरः ।
प्रकाशस्तमसो मध्ये तद्विधृत्यसमर्थिनः ॥२२॥ तदुत्पत्तिं प्रवक्ष्यामि यथाशास्त्रविनिश्चितं ।
मुक्त्यारम्भममुं शिष्य शृणु मे यत्नतोऽधुना ॥२३॥ इति श्रीख्रीष्टसंगीतायां येषूत्पत्तिपर्व्वणि
(योहन्निरचितमङ्गलसमाचारस्य प्रथमसर्गादुद्धृतः) शब्दावतारो नाम प्रथमोऽध्यायः ॥

गुरूरुवाच ॥ यवनादिविजेतॄणां रौम्याणां क्षितिरक्षिणां । सम्राज्यस्य महाराज औगुस्ते कैशरि स्थिते ॥१॥ निवृत्तान्युग्रयुद्धानि सर्वस्मिन् भूमिमण्डले । यदासन् वैक्रमशके ऽब्दे पंचाशत्तमे गते ॥२॥ तदा कन्यां मरीयाख्यां परमेशाज्ञिनीं प्रति । प्रेरितः स्वर्गदूतो ऽग्र्यो गब्रियेलाभिधः सतीं ॥३॥ तद्गेहं नशरेत्पुर्य्यां गलीलानीवृति स्थितं । यहूद्योत्तरदिक्स्थायां विशन्ने तद्वचो ऽब्रवीत् ॥४॥ दूत उवाच ॥ नमस्तुभ्यं मरीये हे प्रसादैः सुपरिष्कृते । ईश्वरस्ते स ४,
हायो ऽस्ति धन्या त्वं स्त्रीगणेषु च ॥५॥ गुरूरुवाच ॥ एवं प्राप्य नमस्कारं सा शङ्काविस्मयावृता । चिन्तयामास किं भूतमित्यथो सो ऽब्रवीत्पुनः ॥६॥ दूत उवाच ॥ मा भैषीर्हे मरीये त्वं प्राप्नो रीशाद्ध्यनुग्रहं । गर्भधारिण्यतो भूत्वाचिरात् पुत्रं सविष्यसे ॥७॥ येषूर्नाम स भावी तु महादरसमन्वितः । भूतले चेशपुत्रः स सदा ख्यातो भविष्यति ॥८॥ तत्पितुर्दाविदस्तस्मै दायी

सिंहासनं विभुः । राजा याकोबवंशस्य भविता स सनातनं ॥९॥ गुरुरुवाच ॥ इति श्रुत्वा कुमारी सा दाविद्वंशोद्भवाय वै । योसेफाख्याय वाग्दत्ताप्यनूढोचे ऽतिविस्मिता ॥१०॥ कथमेतद्भवेत् पुंसः संसर्गो नास्ति मे यतः । इति श्रुत्वा वचस्तस्याः प्रत्यवादीद्विभोश्चरः ॥११॥ दूत उवाच ॥ आयास्यति सदात्मा हि त्वयीदानीमसंशयं । सर्वेश्वरस्य शक्तिश्च त्वां समाच्छादयिष्यति ॥१२॥ अत एव त्वदुत्पन्नं यत्पुण्यं तोकमेव तत् । परमेशात्मजं ख्येयमिति विज्ञतिर्निश्चितं ॥१३॥ आत्मीयालीसबा ते हि या बन्ध्या कथिता जनैः । सापि वार्द्धक्यसमये पुत्रगर्भाधुनाभवत् ॥१४॥ इदानीमेव भूतश्च तद्गर्भः षष्ठमासकः । यत एवेश्वरासाध्या न क्रिया कापि विद्यते ॥१५॥ गुरुरुवाच ॥ मरीया तु ततो ऽवादीदीशदास्यां तथा मयि । संपूर्णं ते वचो ऽस्त्वित्थं दूतस्त्वन्तर्हितस्तदा ॥१६॥ गलीलायास्तदा साधु शिखरैः

परिवेष्टितं । यहूदपुरमभ्यर्च्छत् स्वीयबन्धुदिदृक्षया ॥१७॥ तत्पतेर्जकरीयस्य याज
कस्य निकेतने । निविश्य प्राणमतत्रस्थितां वृद्धामलीसबां ॥१८॥ यदासौ गर्भिणी त्वस्या
नमो ऽश्रौषीत्तदा शिशौ । तद्गर्भे स्पन्दिते ऽनर्द्दुच्चैर्व्याप्ता सदात्मना ॥१९॥ अलीसबो
वाच ॥ धन्यासि स्त्रीगणेषु त्वं धन्यं गर्भफलं च ते । मत्प्रभोर्जननी कस्मादहो मां द्रष्टुमा
गता ॥२०॥ किमाश्चर्य्यमभूदेतत् श्रुत्वा ते हि नमस्कृतिं । समस्पन्दत मद्गर्भे ऽधुना ६
नन्देन बालकः ॥२१॥ ईशोक्तास्तु प्रतिज्ञा या पूरणीयाः सुमन्यते । मङ्गला सास्त्विति श्रुत्वा
मरीया प्रजगौ मुदा ॥२२॥ मरीयोवाच ॥ विभुं प्रशंसन्ति ममासवो तथेश्वरे मदात्मापि
जहर्ष मुक्तिदे । यतो मदीयामतिनम्रतामसौ समालुलोचे महिमप्रदायकः ॥२३॥ अहो इतो
मां सकला हि मङ्गलां मनुष्यवंशाः कथयेयुरुच्चकैः । यतो मदर्थे ऽखिलशक्तिको ऽकरोन्महा

क्रिया एव स पुण्यनामकः ॥२४॥ अतीव तस्मात्त्रसतां गणे ऽखिले समस्तवंशावधि तद्दया स्थिता ।
स बाहुना दर्शितविक्रमो ऽप्यरींस्तदात्मगर्वैष्वनुदत्पृथक् पृथक् ॥२५॥ स एव सिंहासनतो
ऽधिपानधश्चकार नम्रांस्त्वनयत्किलोपरि । बुभुक्षितान् स्वादुतमैरतर्पयत्स चानुदच्छून्यकरान्
धनान्वितान् ॥२६॥ पितॄन् पुरोवाच स नो ऽखिलान्वयार्थमब्रहादीन् प्रति यां तु संविदं ।
सुसंस्मरंस्तां दययाधुना निजं स इस्त्रयेलं भृतकं ह्युपाकरोत् ॥२७॥ गुरूरुवाच ॥ इति स्तुत्वा
प्रहर्षेण स्वबन्धुपतिसद्मनि । ततो ऽलीसबया सार्द्धं मासत्रयमुवास सा ॥२७॥ अथ स्वं प्रत्य
गाद्देहं मरीया धन्यवादिता । तद्बन्धोश्च तदा पुत्रः समुत्पन्नो महात्मकः ॥२८॥ इति श्रीखृष्ट
संगीतायां येषूत्पत्तिपर्व्वणि (लूकरचितमङ्गलसमाचारस्य प्रथमसर्गादुद्धृतो) धन्यनमस्कारो
नाम द्वितीयो ऽध्यायः ॥

शिष्य उवाच ॥ कोऽसौ महात्मकः पुत्रो मातृगर्भे स्थितोऽपि यः । स्पन्दितोऽभूत्प्रहर्षेण
स्वप्रभोर्मातुरागतेः ॥१॥ तदुत्पत्तिर्मरीयायै या दूतेनापि भाषिता । कीदृक् साभूद् गुरो प्रोक्तं
येषूजन्मेव किं न वा ॥२॥ गुरुरुवाच ॥ असादृश्यं बहु ज्ञेयं तयोर्हे शिष्य जन्मनोः । मारीये
यं हि यत्तोक्मोशपुत्राख्यमेव तत् ॥३॥ योऽवतीर्णो मनुष्यत्वं संलेभे क्षितिमण्डले । शब्दो
ऽसृष्टो बभौ तस्मिन् सत्तेजोजीवनप्रदः ॥४॥ पुत्रस्त्वालीसबो नैवं प्रकाशोऽभूदसौ महान् । ८
तत्साक्ष्यार्थं तु नुन्नः स ईशेन नरमात्रकः ॥५॥ तस्माद्भिन्ना तदुत्पत्तिर्नहि शक्त्या सदात्मनः ।
विना पित्रा स कन्यायां जात ईश्वरपुत्रवत् ॥६॥ वृद्धयोरपि पित्रोस्तु स सर्व्वेऽन्ये नरा
इव । तनयोऽभूद्यथा शिष्य कथयिष्यामि तेऽधुना ॥७॥ पुरोक्तसमयात्पूर्व्वं देशे चापि
यहूदिके । तद्राजे चैव हेरोदौ रौम्यनाथहिते सति ॥८॥ यिरूषलेमसंस्थेऽसौ मन्दिरे पर

मात्मनः । पौरोहित्यं यथाभागं जकरीयः समाचरत् ॥९॥ धर्म्मज्ञो धर्म्मशीलश्च सपत्नीको
ऽतिशुद्धितः । ईशस्याज्ञा व्यवस्थाश्च समस्ताः पालयन् सदा ॥१०॥ स्वस्तिके ऽज्वालयद्धूपान्
यथाकार्य्यं पुरोहितैः । एकाकी किंतु सर्व्वौघाः प्रार्थयंस्तद्बहिः स्थिताः ॥११॥ धूपवेदेस्तदा
तेन दक्षिणे समदृश्यत । पार्श्वे तिष्ठन् महेशस्य दूतस्तेजःसमन्वितः ॥१२॥ जकरीयं तु
तद्दृष्ट्या विस्मयापन्नमानसं । बिभ्यतं च समालोक्य वाक्यमभ्यब्रवीदिदं ॥१३॥ दूत ९
उवाच ॥ मा भैषीर्जकरीय त्वं यत्त्वया हि चिरादपि । प्रार्थितं तदिदानीं ते शुश्राव वरदो
विभुः ॥१४॥ अलीसबा हि ते पत्नी या बन्ध्या कथिता जनैः । सा ते सविष्यते पुत्रं देय
योहन्निनामकं ॥१५॥ तव चैव तदुत्पत्तेर्महानन्दो भविष्यति । बहवश्चापि तद्गतेः प्रहर्षि
ष्यन्ति मानुषाः ॥१६॥ परमेशसमीपे हि स महान् भविता ध्रुवं । सुरां द्राक्षारसं चैव न

पास्यति कदाचन ॥१७॥ व्याप्तः सदात्मना भावी स्वमातुर्गर्भितो ऽपि सः। हेत्त्रयेलान् बहूंश्चैवा नेष्यति स्वप्रभोः पथि ॥१८॥ स हि तत्पुरतो गन्ताप्यलीयस्य महागुरोः। पुनः संजीवत इवात्मशक्त्याच्छादितो दृढं ॥१९॥ पितॄणां हृन्दि तत्पुत्रान् प्रत्यावर्त्तयितुं किल। मतौ च धर्म्मशीलानामानेतुं विधिलङ्घिनः ॥२०॥ गणं प्रभुविनीतं च संस्कर्तुमपि यास्यति। इति श्रुत्वा वचस्तस्य प्रत्युवाच पुरोहितः ॥२१॥ जकरीय उवाच ॥ भवदुक्तं तदाश्चर्य्यं कुतो मे। निश्चितं भवेत्। वृद्धो ऽहं हि तथा चापि वृद्धा पत्न्यस्ति मे ऽधुना ॥२२॥ दूत उवाच ॥ गब्रियेलाभिधो ऽहं वै नित्यमीशान्तिके स्थितः। तेन चाप्यधुनैनां ते सुवार्त्तां दातुमीरितः ॥२३॥ स्वकाले भाविनीं तां तु यतो न त्वममन्यथाः। अतो मूको भवेर्यावन्न सा फलवती भवेत् ॥२४॥ गुरुरुवाच ॥ इत्युक्त्वान्तर्हितो दूतः किंतु यज्ञवप्रतीक्षया। व्यूहा वहिःस्थिताः

सर्वे विलम्बाद्विस्मयं ययुः ॥२५॥ वाग्घीनं त्वागतं शेषे तं दृष्ट्वेङ्गनकारिणं । प्रत्यादिष्टः स
ईशेन किंचिदित्यनुमेनिरे ॥२६॥ तथा मूकः स्थितः सो ऽथ पौरोहित्यं समाचरत् ।
समाप्ते ऽस्मिंस्त्वतः स्वीयं नगरं स पुनर्गतः ॥२७॥ ततस्तेनैव तत्पत्नी साहरोणकुलोद्भवा ।
भूता गर्भिण्यथात्मानं पञ्चमासमगोपयत् ॥२८॥ तथेदानीं नृमध्ये मे विभुर्निन्दामपाहरत् ।
इत्यवोचत्तदाप्यस्या अवाचि स्वामिनि स्थिते ॥२९॥ षष्ठमासे तु तद्बन्धुर्यदा तां द्रष्टुमागता । ११
यथाप्रोक्तं मरीया सा कुमारी धन्यवादिता ॥३०॥ पत्न्यां नमः प्रकुर्वन्त्यां स्पन्दिते चापि
तच्छिशौ । नाशक्नोज्जकरीयः स वचो वक्तुं कदाचन ॥३१॥ पूर्णे तु नवमे मासे वृद्धाया अपि
तत्स्त्रियः । प्रसवस्य तदा काले तत्पुत्र उदपद्यत ॥३२॥ प्रदत्तो ऽलोसबायै तु प्रसादः पर
मात्मनः । इति श्रुत्वा तदात्मीयाः समानन्दंस्तया सह ॥३३॥ ते ऽष्टमे ऽह्नि तु बालस्य परिच्छे

दार्थमागताः । जकरीयेति तन्नामाविकीर्षन् पितृसन्निभं ॥२४॥ निषेधन्ती तु तांस्तत्र प्रत्य
वादीदलीसबा । कर्त्तव्यं मच्छिशोर्नाम योहन्निरिति किंतु ते ॥३५॥ ईदृशं नाम वंशे ऽस्य
न बभूव कदाचन । इत्युक्ता बन्धवो ऽपृच्छंस्तत्तातमिदमिङ्गनैः ॥३६॥ स तु मूको ऽर्थिते पात्रे
योहन्न्याख्यो ऽस्तु मच्छिशुः । इत्यालिखदतः सर्वे विस्मयं परमं गताः ॥३७॥ तदा
निमिषमात्रे ऽपि मूकत्वरहितः पिता । जकरीयो महानन्दादस्तावीत्परमेश्वरं ॥३८॥ ततो ।
महाभयो भूतः सर्व्वेषां प्रतिवासिनां । व्याप्तस्तद्वार्त्तया चापि तद्देशः शिखरावृतः ॥३९॥ सर्व्वे
ऽपि तद्वचः श्रुत्वा स्थापयन्तो दृढं हृदि । बालो ऽयं भविता कीदृगित्यवोचन् परस्परं ॥४०॥
ईश्वरस्य तु पाणिस्तमनुजग्राह बालकं । पूर्णः सदात्मना चाथ तत्पिता संस्तुतिं जगौ ॥४१॥
जकरीय उवाच ॥ परिस्तुतो ऽस्माभिरितो ऽस्तु सर्व्वदा स इस्रयेलस्य पतिर्महेश्वरः । समालु

लावे स यतः स्ववर्गकान् ददौ च तेभ्यः परमं विमोचनं ॥४२॥ कुले हि तद्भक्तियुतस्य दाविदो
विमुक्तिशृङ्गं महदुद्दधार सः । यथा समूचे जगदादितोऽपि स सतां मुखैरेव निजप्रवा
चिनां ॥४३॥ विमुक्तिमेवाखिलवैरितो ददौ स नः पितॄन्प्रत्युदितां दयां स्मरन् । स्वसं
विदं पूरयितुं हि सद्गुणां शपं च पित्रे कृतमब्रहाय नः ॥४४॥ अतो वयं शत्रुकरात्समुद्धृता
अभीतितोऽर्च्चेम विमुक्तिदायकं । सनातनं चात्मकजीवनावधीह पुण्यधर्म्मेण तमाश्रयेमहि ॥ १३
४५॥ त्वमेव मत्पुत्र किलोर्द्ध्ववासिनो विभोः प्रवाची भवितास्युदाहृतः । यतः प्रभोस्त्वं चलि
तासि सम्मुखे हितां तदर्थं परिमार्जितुं सृतिं ॥४६॥ त्वमस्य वर्गं ह्युपदेक्ष्यसीशतो विमुक्त्यु
पायं तदघापमृष्टये । विनिःसृतं तद्दयया किलारुणमिवान्तरीक्षात्पतितं प्रगाढया ॥४७॥
तमिस्रमध्ये स तथैव मृत्युदे विमोहगर्त्तेऽप्युपविष्टमानुषान् । विनिःसृतो भासयितुं हि

नाकतःपदश्च नेतुं कुशलायने ऽपि नः ॥४८॥ गुरुरुवाच ॥ इति संस्तुत्य यज्वासावहरोणकुलो द्भवः । विरराम ततो बालो ववृधे तु दिने दिने ॥४९॥ इस्त्रयेलान्तरे यावन्न बभौ प्रभु वाचकः । प्रान्तरे स स्थितस्तावन्महाशक्तिसमन्वितः ॥५०॥ इति श्रीख्रृष्टसंगीतायां येषूत्पत्ति पर्व्वणि (लूकयोहन्निरचितमङ्गलसमाचारयोः प्रथमसर्गादुद्धृतो) महायोहन्निजन्मोपाख्यानं नाम तृतीयो ऽध्यायः ॥

शिष्य उवाच ॥ कस्तु दाविदसौ राजा यदुद्भव्यो महाप्रभुः । सो ऽहरोणाभिधः को वा योहन्नेरादिवंशकः ॥१॥ अब्रहः कः प्रसिद्धः स उभयोर्वंशयोः पिता । संविदीशोदिता तस्मै चेस्त्रयेलार्थमेव का ॥२॥ पूरणीयां हि तामेवोद्भव्यभूपतिकर्म्मभिः । मरीया जकरीयो ऽपि दूतश्चैवावदन् स्फुटं ॥३॥ तस्मात्प्रत्नं तथैवैतत्सर्व्वमिच्छामि साम्प्रतं । अनुसारेण

विज्ञातुं कृपातस्तव हे गुरो ॥४॥ गुरुरुवाच ॥ यथाप्राचीनशास्त्रोक्तं तत्सर्व्वं विस्तरादहं ।
न शक्नोम्यधुना वक्तुं संक्षेपोक्तं तु मे शृणु ॥५॥ मत्प्रोक्तसमयात्पूर्व्वे ऽब्दसहस्रद्वये कलौ । शता
धिकसहस्रान्ते त्यजत्स्वर्च्चां विभोर्नृषु ॥६॥ तदा देशे समुद्भूतं कल्दायाख्ये तमब्रहं ।
सूर्य्येन्दुभार्च्चया व्याप्ते ऽभ्युवाचेश इदं वचः ॥७॥ स्वदेशं त्वं परित्यज्य स्वात्मीयांश्चापि
सर्व्वतः । स्वपितुर्भवनं चापि याहि मद्दृश्यनीवृतं ॥८॥ महावंशाय ते चैनं दास्याम्याशीः
प्रदो ऽखिलं । त्वद्वंशीयाश्च सर्व्वे ऽपि जनाः प्राप्स्यन्ति मङ्गलं ॥९॥ श्रुत्वेदं मन्यमानः स सर्व्व
विश्वासिनां पिता । कनानाख्यं फलेस्तीन्यं स्वाज्ञातं नीवृतं ययौ ॥१०॥ बन्धुवर्गं च सं
त्यक्त्वा विभुवाक्यप्रतीतितः । वृद्धो ऽपि वृद्धभार्य्यश्च पुत्रं समुदपादयत् ॥११॥ तस्मिन्नी
शहके नाम नेतरेषु तु केषुचित् । इष्मयेलादिपुत्रेषु स्वसंविद्दायमादधौ ॥१२॥ तं संजीव

यितुं भूयः शक्तस्येशस्य चाज्ञया । आदिवंशं सुतं होतुं सुप्रियं प्रस्तुतो ऽभवत् ॥१३॥ निरुद्ध
स्त्वीशदयया पुत्रं संलभ्य जीवितं । परं विनयहेतोः स तदा प्रापाशिषं विभोः ॥१४॥
तस्मिंस्तु सुन्दरे देशे स्वोत्पाद्येभ्यः प्रतिश्रुते । उदासीनो ऽवसत्प्रेते पितरीशहकस्तथा ॥१५॥
तत्र सो ऽजनयत्पुत्रौ याकोबैसावनामकौ । तयोर्ज्यैष्ठस्तु न प्राप्नोदेसावः पैतृकाशिषं ॥१६॥
याकोबस्त्विस्त्रयेलाख्यस्तामवाप समन्ततः । तस्य द्वादशपुत्राश्चाभवंस्तद्दायभागिनः ॥१७॥ १८
रौबिनो नाम सिम्योनो लेवीश्चापि ततः परे । यहूदो जबुलूनो ऽपि तथैवेसष्कराभिधः ॥
१८॥ दानश्च नप्थलीश्चापि गाद आसेर एव च । सर्व्वप्रेष्ठौ च योसेफो बिन्यमीनश्च शेषजः ॥
१९॥ इस्त्रयेलीयवंशानां भव्यास्ते पितरस्तदा । अन्यजातेषु मन्देषु न्यवसन् दूष्यवेश्मकाः ॥
२०॥ शिष्य उवाच ॥ आब्रहाय तु यत्प्रोक्तं त्वद्वंशायैव नोवृतं । प्रदास्यामीति पूर्णं

तद्वाक्यं कथमभूद्गुरो ॥२१॥ गुरुरुवाच ॥ त्वत्पृष्टमिदमाश्चर्य्यमधुना कथयामि ते । भ्रात्री
र्षया स विक्रीतो योसेफो मिश्रमभ्यगात् ॥२२॥ देश ऐगुप्तनामा स कीर्त्तितो यवनैः पुरा ।
नानाशास्त्राकरो विप्रैर्मन्त्रज्ञैर्मुण्डितैर्वृतः ॥२३॥ तत्रेशानुग्रहाद्धर्म्मी स स्वदास्यत उद्धृतः ।
राज्ञो ऽपि प्रियतां यातः श्रेष्ठामात्यत्वमेव च ॥२४॥ मनस्स्यफ्रैमनाम्नोश्च जातयोः पुत्रयो
स्ततः । स वृद्धं पितरं स्वीयं भ्रातॄंश्चैगुप्तमाह्वयत् ॥२५॥ ते सपुत्राः सभार्य्याश्चानुगृहीता 17
महीभुजा । तद्वंशोर्व्यां वसन्तश्चावर्द्धन्त क्रमशो भृशं ॥२६॥ याकोबात्तु परे प्रेते योसेफे
तत्सुवित्सु च । मृतेष्वैगुप्तराजेषु राजान्यो दुर्जनो ऽभवत् ॥२७॥ इस्रयेलकुलं सम्यक्
स च ध्वंसितुमिच्छुकः । भारे नियोज्य दुःसह्ये पीडयामास सर्व्वथा ॥२८॥ तेषां प्रार्थयतां
क्लेशादहोरात्रे महेश्वरः । वचः श्रुत्वात्मदयया प्रेरयद्बन्धमोचकं ॥२९॥ मोसिर्नाम प्रपौत्रः

स लेभ्यः क्रूरनृपाज्ञया । हन्तव्यः शैशवे वारो राजपुत्र्योद्धृतो ऽभवत् ॥३०॥ पालितश्च तया सर्वं मैश्रज्ञानं स शिक्षितः । नैच्छदीशद्विषां भागं तद्राज्ये ऽपीशसेवकः ॥३१॥ सहभाग्यै श्ववर्गस्य पीडितस्यापि स स्वयं । भूतो ऽतो दुष्टभूपालभीत्यान्योर्व्यीं पलायितः ॥३२॥ तत्र लब्ध्वा ज्वलत्स्तम्बमध्योत्ताज्ञां विभोस्तु सः । सह भ्रात्राहरोणेन मैश्रं नूत्ननृपं ययौ ॥३३॥ तं वै मोचयितुं दासान् नेच्छन्तं वाक्यतस्तयोः । भीमैः कर्म्मभिरीशस्य दर्शयामासतु १८ र्बलं ॥३४॥ तदर्थं विविधापद्भिरैगुप्ते समभिप्लुते । चरमे निखिलास्तस्मादैस्रयेला वि निर्गताः ॥३५॥ दिने मेघेन तांस्त्वीशो वह्निना निशि चानयन् । विभिन्नं तत्कृते ऽप्यब्धिं शुष्कोर्वीवदतारयत् ॥३६॥ सरथाश्वांस्त्वतो मैश्रान् प्रयहायानुगच्छतः । भूयः संमिलिते तस्मिन्नब्धौ सम्यगमज्जयत् ॥३७॥ भारतप्रथितस्यैव कलेरारम्भणात्परे । पूर्णे सार्द्धसहस्राब्दे

भूतं कर्म्म तदद्भुतं ॥३८॥ तमुत्तीर्य्य तथाब्धिं ते ऽवस्थिताः प्रान्तरे मरौ । अश्रद्धाहेतुतो
देशे नोपातिष्ठन् प्रतिश्रुते ॥३९॥ चत्वारिंशत्समास्तत्र भ्रमन्तो ऽभर्त्सयन् सदा । धीमन्तं ना
यकं मोसिमहरोणं च याजकं ॥४०॥ ईशदत्तं महाशास्त्रं दृष्टवन्तो ऽपि मोसये । सीनाय
पर्व्वते ऽगम्ये विद्युद्धूमाश्मनीवृते ॥४१॥ तत्रापि स्वर्णवत्सं ते मैश्रदैवतसन्निभं । निर्म्माया
पूजयन् मूर्खा अवमत्य महेश्वरं ॥४२॥ नाकतः पतितैर्भोज्यैः पालिताश्चापि ते सदा । १९
मोसिदण्डाहताद्ग्राव्णश्चोत्थितोदकपायिनः ॥४३॥ तथापि विवदन्ते स्म मैश्रभोजनलिप्सवः ।
तस्मात्तेषां महाव्यूहान् प्रान्तरे ऽघातयद्विभुः ॥४४॥ ये मिश्रान्निर्गताश्चापि सर्व्वे ते प्रान्तरे
मृताः । विना विश्वासिनौ वीरौ येषूकालिबनामकौ ॥४५॥ ममार चाहरोणो ऽपि पिता
सो ऽखिलयज्वनां । तत्पुत्रो ऽल्याजराख्यस्तु महायज्वा ततो ऽभवत् ॥४६॥ चरमं तु कना

नस्य समीपे ऽद्रावुपस्थितः । तदा मोसिरपि प्रेत ईशशास्त्रप्रवाचकः ॥४७॥ तत्स्थाने नायको ऽभूत्स येषूरफ्रैमवंशजः । नूनपुत्रः स्ववर्गं चानयद्देशे प्रतिश्रुते ॥४८॥ ये तस्मिन् न्यवसन्पूर्वं तान् हत्वा कुक्रियान्वितान् । द्वादशांशं यथेशोक्तं स्ववंशेभ्यश्चकार तं ॥४९॥ दत्तौ योसेफ वंशाय त्वंशौ द्वौ द्विविधो ह्ययं । लेव्याय नतु दत्तोंऽश इतरैः पालितो ह्यसौ ॥५०॥ यतो
लेव्युद्भवाः सर्वे ऽब्रहजानां पुरोधसः । एतेषु केवलाश्चापि याजका अहरोणजाः ॥५१॥ २०
ईशोक्त्या पुण्यदूष्यं तु प्रान्तरे यद्विनिर्म्मितं । विभुनामाङ्कितस्थानं तदफ्रैमकुले ऽर्पितं ॥५२॥ शिष्य उवाच ॥ एषु सार्द्धसहस्राब्देप्राग्वैक्रम्यशकादपि । भूतेषु किं न पूर्णाभूत् संविदुक्ता ब्रहं प्रति ॥५३॥ गुरुरुवाच ॥ एतैर्मां विद्धि संपूर्णां त्वं कार्य्यैरद्भुतैरपि । मङ्गलं ह्यब्रहादिभ्यो विश्वासिभ्यः प्रतिश्रुतं ॥५४॥ मुक्तिं सर्वारिहस्ताद्धि नाशक्नोद्दातुमच्युतां । स ऽयेषू

नूनजो वीरः कनानीयविजित्वरः ॥५५॥ मृते तस्मिन्मृतेष्वेव तदाश्चर्य्यक्रियेक्षिषु । सर्व्व
वृद्धेष्वथो शेषा व्यस्मरन् परमेश्वरं ॥५६॥ ततः स्वीयं विभुर्वर्गं शत्रूणां परिवासिनां । निघ्नं
मुहुर्मुहुः कुर्व्वन् व्यसृजत्पापदण्डदः ॥५७॥ ततोऽनुतपतां तेषां त्यजतां चान्यदेवताः ।
दययानेकधा वीरान् निदधौ स विमोचकान् ॥५८॥ तेऽहूदो बारकश्चापि मन्त्रितो यो दबो
रया । गिद्योनो यप्तहश्चैव संसोनश्च महाबलः ॥५९॥ इत्याद्याः कुलमीशस्य नयन्तो मोसि २१
शास्त्रतः । रथाश्वहीनमप्युग्रान् व्यजयन्त द्विषः सदा ॥६०॥ महायज्वन एल्यस्तु परे
पुत्रौ कुयाजकौ । मलिनीचक्रतुः सर्व्वानाब्रह्मान् भ्रष्टकर्म्मभिः ॥६१॥ फलेस्तिभिस्तु युद्धेषु
तेषु तौ विभुदूष्यतः । संवित्पात्रं वहिष्कृत्य सेनाग्रे ऽनयतां युधि ॥६२॥ न त्वतस्तौ
जयं प्राप्य ससैन्यगणकौ हतौ । सत्संविद्वासनं चैतज्जगृहुः किल वैरिणः ॥६३॥ तत्पात्रे

त्वर्पिते देवमन्दिरान्तः फलेस्तिभिः । तदग्रे नरमत्स्यो ऽसौ देवो भग्नो ऽपतद्भुवि ॥६४॥
दूष्यस्थाने सिलोनाम्नि श्रुत्वा तद्वैरिभिर्हृतं । ममारैलोमेर्महांश्चाधिरैस्त्रयेलान् समग्रहीत् ॥६५॥
परे तन्नायकं भूतं संवेलं सत्प्रवाचकं । शासनार्थे ऽर्थयन् राज्ञो ऽभिषेवं त्विस्त्रयेलजाः ॥६६॥
तैर्वृतं तु नृपं सौलं बिन्यमीनकुलोद्भवं । अविनीतात्मताहेतोर्व्यसृजत्परमेश्वरः ॥६७॥ ततो
ऽन्यं चोदयामास स्वहृद्याधिपतिं विभुः । युवानं दाविदं नाम यहूदकुलसंभवं ॥६८॥ अरीन् २२
जित्वैशप्रात्रं वानीयातीवमुदा पुनः । नाफ्रैमस्थे सिलव्येवं किंतु शीयोन आर्पयत् ॥
६९॥ अद्रिर्यिरूषलेमस्यासौ दुर्गो ऽस्त्युन्नतो ऽपि च । आदिवासो यहूद्यानां प्रिय ईशस्य
चालयः ॥७०॥ विक्रमात्प्राक् सहस्राब्दे खृष्टपूर्व्वतरे ऽपि च । षट्पञ्चाशत्समधिके दाविदे
ऽभूद्विभोर्वचः ॥७१॥ परमेश्वर उवाच ॥ त्वामन्त्यमाहूय मदीयवर्गे ऽन्यास्यं महाराजमति

प्रशंस्यं । त्वया च तत्सर्व्वरिपून् विनाश्य विश्राममत्यन्तमिहाद्धामि ॥७२॥ नित्यं करि
ष्यामि तवैव वंशे सुमङ्गलं तस्य पिता हि भव्यः । मयापि दण्ड्या यदि पापतः स्युर्नाहं
निसृक्ष्यामि सदा प्रजां ते ॥७३॥ त्वदुद्भवः खल्वधिपेभ्य उर्व्याः सर्व्वेभ्य एवोन्नततरो ध्रुवं
स्यात् । पूर्व्वात्मजो मे स सहापि तेन तिष्ठेदनन्तं मम संविदार्य्या ॥७४॥ इति श्रीखृष्ट
संगीतायां येषूत्पत्तिपर्व्वणि (मोसिरचितपंचशास्त्राद् येषूनूनजचरित्राद् धर्म्मनायकचरित्रात् २३
संवेलग्रन्थद्वयाद् दाविद्गीतेभ्यश्चोद्धृतः) पैतृकसंविदुपाख्यानं नाम चतुर्थोऽध्यायः ॥

शिष्य उवाच ॥ गुरो यद्यन्मया पृष्टं तन्मे प्रत्युदितं त्वया । ईशोक्त्या तु कथं नित्यं दावि
द्राज्यं परे स्थितं ॥१॥ गुरुरुवाच ॥ दण्ड्यास्तद्वंशजा ज्ञेया पित्रा मन्दसुता इव । निःसृष्टा
श्चापि कस्मिंश्चित्काले वक्ष्यामि ते यथा ॥२॥ तद्वचो न तु भग्नं यदेकस्मिन् दाविदः सुते ।

पूरणीयं समाचख्युरखिला भव्यवाचकाः ॥३॥ तं मसीहं किलाब्रह्मैः ख्रीष्टं वाच्यं तु यावनैः ।
ब्राह्मणैरभिषिक्तं तु प्रत्यैक्षन्तेशसेविनः ॥४॥ जकरीयादिभद्राणां स्थिरमेतत्प्रतीक्षणं । तद्गीते
र्वाक्यतो ज्ञेयं प्रोक्तायाः शिष्य ते मया ॥५॥ तत्पूर्त्तिश्चेश्वदूतोक्ता कन्यां धन्यीकृतां प्रति । श्रुता
किंत्वधुना श्राव्यं यद्बभूव तदन्तरे ॥६॥ दाविद्यरिन्दमे तस्मिन् पितृलोकं गते ततः । तत्सुता
नामतिश्रेष्ठः सलोमाभून्नराधिपः ॥७॥ इस्रयेले च सुस्थे स पित्रेष्टं मन्दिरं वृहत् । शीयोने २४
निर्म्ममे संवित्पात्राधारं परात्मनः ॥८॥ पूर्व्वं ख्रीष्टावतारात्तु सहस्रं द्वादशाधिकं । वर्षाणां शिष्य
तद्भूतं सलोम्नः कर्म्म भानुमत् ॥९॥ विद्वत्तमो नृपाणां स धनवांश्चातिकीर्त्तितः । भक्तः किंतु
परे देवार्च्ची स्त्रीमन्त्रणतोऽभवत् ॥१०॥ अतस्तत्तनयान्मूर्खाद्रहुबौमात्पितुः पदे । अभि
षिक्ताद्दशाप्यंशान् राज्यस्यापाहरद्विभुः ॥११॥ बिन्यमीनयहूदौ हि वंशौ नापजहार सः ।

दाविदुद्भवराजेभ्यः संस्मरन् स्वीयसंविदं ॥१२॥ अवशिष्टास्तु वंशास्ते तदाफ्रैमादयो दश ।
यरूबौमाख्यमास्थाप्य भूपं पृथगवस्थिताः ॥१३॥ यिरूषलेमयात्रातः स निरोद्धुं प्रजां निजां ।
स्वदेशेऽर्पयदन्यार्च्चां वत्समूर्त्त्यन्वितां विभोः ॥१४॥ मन्दान्पुरोधसः कृत्वा स्वयं लेव्युद्भवेत
रान् । पापैः परिप्लुतं राज्यमैस्रयेल्यमितोऽकरोत् ॥१५॥ तथैवैतत्परे ये ये नृपा विविध
वंशजाः । तद्राज्यं प्राप्नुवन् सर्व्वे ते महेशपराङ्मुखाः ॥१६॥ तेषां दुष्टतमोऽहाबो भूत ई २५
जबलाभिधां । शीदोनाधिपतेर्व्यूह्य देवीयज्वन आत्मजां ॥१७॥ बेलार्च्चामन्यपापानि चानि
नायैस्रयेलिषु । निषेधन्तं त्वलीयं तमजिघांसन्महागुरुं ॥१८॥ स क्रियाभिस्तु भीमाभि
र्द्दर्शयित्वा बलं विभोः । शेषे ज्वलद्विमानेन तच्छक्त्यारोहितो दिवं ॥१९॥ ततः पूर्णतरश्चापि
तस्य शिष्यः सदात्मना । राज्येऽमुष्मिन् समार्य्याख्येऽलीषायोऽभूत्प्रवाचकः ॥२०॥ यहूस्त्व

हाबवंशघ्नो राजानश्च तदादयः । बेलार्चीक्षेपिणोऽप्यंघो न जहुर्यारुबौमकं ॥२१॥ ञुन
विंशमतस्तेषां नृपं होषेयमीश्वरः । निदधौ सल्मनस्तस्यासुर्य्यराजस्य बन्धने ॥२२॥ असौ
देशाद्बहिष्कृत्येत्त्रयेलदशवंशजान् । दिक्षूत्तरासु च प्रेष्यान्यान्वयास्तमवासयत् ॥२३॥ तद्बहि
ष्करणं घोरं पितृदत्तार्य्यदेशतः । वर्षसप्तशतं खृष्टात्प्राग्विंशत्यधिकं मतं ॥२४॥ यहूद्या
स्त्विदमीक्षित्वा हिजिकीयश्च तन्नृपः । दाविद्वंशोद्भवः सत्यार्च्चामाचेरुः परात्मनः ॥२५॥ २६
ततोऽपि प्रतियुद्धास्तेऽसुर्य्यराजस्य सेनया । सङ्खरीबस्य तां सर्व्वामीशेन ददृशुर्हतां ॥२६॥
शिष्य उवाच ॥ तत्पूर्व्वं दाविदुत्पन्ना ये ऽभवन् वंशयोर्नृपाः । दशांशनृपवत्ते किमासन्नीश
पराङ्मुखाः ॥२७॥ गुरुरुवाच ॥ तदाद्यं वै सलोम्नोऽमुं रहुबौमाभिधं सुतं । विधिलङ्घिन
मीशोऽतोऽदण्डयन्मैश्रकासिभिः ॥२८॥ हेगुप्ताद्धि महाराजः सिसक्को भीमसेनया । आ

गत्य तत्पुरः सर्व्वा मन्दिरं चाप्यलुण्ठयत् ॥२९॥ परे ऽनुतापिनस्त्वस्मात् पुत्राच्चाबीयसंज्ञकान् ।
पौत्र आसा अभूद्राजा दाविद्दद्भिभुसेवकः ॥३०॥ तथैवैतस्य तनयो राढ् यहोषफटाख्यकः ।
अहाबाय हितो ऽप्येवमीश्वराज्ञा अमन्यत ॥३१॥ यहोरामस्तु तत्पुत्रो ऽहाबभाग्नीमुदूढ
वान् । अथल्यामेतयोश्चैव सुतो ऽहज्यो ऽतिदुर्नृपौ ॥३२॥ पितामह्या जिघांसोस्तु यवासो
ऽहज्यजः परे । यज्वना पालितो गुप्तौ वयःस्थो राज्यमाप्तवान् ॥३३॥ तस्थावीश्वा २७
र्च्चको ऽमुष्य यज्वनो जीवने ऽथ तु । अन्यमार्गे ऽचलन्तद्वदमशीयश्च तत्सुतः ॥३४॥ उज्जीय
स्त्वमशीये स्वे हते पितरि भूमिपः । अधिकारं विना यष्टुमिच्छुः कुष्ठीकृतः क्षणात् ॥३५॥
योथामस्तत्सुतो धर्म्मं न जहौ किंतु तत्सुतः । अहाजो नाम बेलादिदेवार्च्चामानयद्भुवि ॥
३६॥ राज्ञा तु हिज्किीयेनाघं तत्परिहृतं पितुः । यहूद्या अखिलाश्चैवाहूता ईशार्च्चनं पुनः ॥

३७॥ ततश्चागत्य कतिचिञ्जबुलूनमनस्सिजाः । आसेरजाश्च तं देशं विभुमन्दिरशोभितं ॥
३८॥ यहूदीयक्षितौ तस्यां लैव्या इव पुरोधसः । यथोक्तं मोचनं प्रापुरसुर्य्यरिपुहस्ततः ॥
३९॥ तस्य सिद्कस्य राज्ञस्तु मनस्सिर्नामतः सुतः । पित्रा परिहृतं पापं स्वदेशे ऽस्थापय
त्पुनः ॥४०॥ अतः स विजितो ऽसुर्य्यैः क्षमां प्रार्थयदीश्वरं । किंतु तत्पुत्र आमोनो नानु
तेपे कदाचन ॥४१॥ तस्य पुत्रस्तु योसीयो ऽतियुवा राज्यमाप्तवान् । मनस्सिस्थापिता २८
मूर्त्तीर्वेदीश्चापि व्यनाशयत् ॥४२॥ प्रशासंश्चाखिलं राज्यं मोसिशास्त्रानुसारतः । ईशस्याति
प्रियो भूतः स दाविद्विजिकीयवत् ॥४३॥ निकौस्त्वैगुप्तशार्द्दूलः समागत्योग्रसेनया । तं
हत्वा च नृपं शुद्धं जग्राहार्य्यपुरीमपि ॥४४॥ सोऽपि कल्दायभूपेन नबुकद्रशरेण तु । प्रति
युद्धो जितश्चापि मिश्रं प्रति पलायितः ॥४५॥ तत्कृतं योयकीमं तु पितुः स्थाने यहूदपं ।

दुष्टं तुल्यं सुतं चैव तस्य पश्चान्नृपीकृतं ॥४६॥ कोनीयं नाम संगृह्य कल्दायानामसौ नृपः ।
श्रेष्ठान् बद्धांश्च लोप्रं च बाबिलं पुरमानयन् ॥४७॥ तन्महाबन्धने ख्रृष्टात्प्राग्भूते षट्शताब्दके ।
त्यक्तो यिरूषलेमे ऽन्यो योसीयस्य सुतो ऽधिपः ॥४८॥ यः परे शिदिकीयाख्यस्तदेकादशहा
यने । श्रद्धां विच्छिद्य काल्दाय्यवीरस्य व्यच्छिनद्युगं ॥४९॥ अतः क्रोधात्समागत्य नबुकद्र
शरः पुरं । दग्ध्वा समन्दिरं शेषान् बद्धीचक्रे यहूदिनः ॥५०॥ शिष्य उवाच ॥ दावि २९
त्सलोमवासे तु घोरं तज्ज्वलनं गते । चिरं महाभिषिक्तात्प्राक् तन्मध्ये किमभूद्गुरो ॥५१॥
गुरुरुवाच ॥ बद्धा बाबिल्यभूमध्ये ऽवसन् याकोबजाः स्थिते । नबुकद्रशरे ऽस्यापि पुत्रे
दौहित्र एव च ॥५२॥ अस्मिंस्तु स्वैर्हते राज्यं लेभे काल्दायमन्यजः । हितस्त्वेतेषु सर्व्वेषु
दान्येलो ऽभूद्यहूदकः ॥५३॥ स कोनीयादिभिः सार्द्धमानीतो बाबिलं शिशुः । साम्राज्य

स्यादिवासं तं ज्योतिर्ज्ञैः पण्डितैर्वृतं ॥५४॥ अन्यदेवार्च्चिनां मध्ये तत्रापि सुमहानभूत् । अमात्यश्चैव बुद्ध्या स ईशहार्द्दः प्रवाचकः ॥५५॥ राज्यं पश्चात्तु काल्दाय्यं फलेस्तीसूरजित्वरं । पारसोकाधिपो वीरः कूरोनामा व्यनाशयत् ॥५६॥ हिज्कीयस्य काले यो ऽपोषायेण प्रवाचिना । नामोक्त इस्त्रयेलानां बन्धमुक्तिं स आदिशत् ॥५७॥ तस्याज्ञयाथ निर्गत्यैस्त्रयेलैर्बहुभिः सह । लेव्यैर्यहूदकाद्यैश्च दाविज्जो जरूबाबिलः ॥५८॥ वंशात्स हि न जातो ऽपि सलोम्नो भ्रातुरस्य तु । नाथ्नः किंत्वभवद्राज्ञां दायभागी यहूदिनां ॥५९॥ तत्पिता हि सलत्येलो दाविज्जत्वादसूनुना । बद्धभूभुक्कोनीयेन दत्तपुत्रीकृतो ऽभवत् ॥ ६० ॥ दाविद्वंशावरोहो ऽसौ क्षितिं यैरूषलेमिकां । गतो निर्म्मातुमारेभे समन्दिरपुरं पुनः ॥६१॥ यत् संदहनकाले ऽपि यिरिमीयः प्रवाचकः । तथैवानुषितं स्थेयं सप्तत्यब्देष्ववाचत ॥६२॥

तत्कर्म्म त्वन्यलोका ये सल्मनस्राघसुर्य्यपैः । सामार्य्ये स्थापिता देशे व्यरुन्धंस्ते ऽतियत्नतः ॥
६३ ॥ एतेषां चापवादेन कूरसो महतः परे । अर्तक्षेरूर्दीर्घबाहुर्न्यषेधीदपि कर्म्म
तत् ॥६४॥ यत्पित्रा क्षेरूषा राज्ञा दार्य्युःपुत्रेण सुन्दरी । यहूदिन्येस्तरा व्यूढा सूसाख्ये
राजवेश्मनि ॥६५॥ सर्व्ववर्गममुञ्चत्स्वं शत्रुसंकल्पिताल्लयात् । तांश्चापि मार्द्दकायादीन्प्रा
पयद्गौरवं महत् ॥६६॥ किन्त्वार्तक्षेरूषः पश्चाद्दार्य्यूर्नामापरो नृपः । कूरा इव विनिर्म्माणं ३१
सत्पुरस्याशत् पुनः ॥६७॥ तथा निर्म्मितमीशौको दान्येलो यत् पुरावदत् । सप्ताब्दे सप्तति
गुणे भव्यं प्राग् यज्ञसिद्धितः ॥६८॥ ततो ऽर्तक्षेरूषो ऽन्यस्य राज्ये यज्वाज्रनामकः । तत्परे
नहमीयश्च नुन्नो निर्गत्य बाबिलात् ॥६९॥ ज्ञातीन् स्वोर्वीस्थितान् शक्तेर्निर्भयीचक्रतुर्द्विषां ।
पुरं च मन्दिरं चापि स्थापयामासतुर्दृढं ॥ ७० ॥ पारसीकास्तु तद्राज्यं मिश्रसूरादि

*

जित्वरं । ये ये संलेभिरे सम्यग्यहूदिभ्यो ऽभवन् हिताः ॥७१॥ दार्य्युषं चरमं त्वेषा मलेक्षन्द्रो महाबलः । यावनः सेनया जित्वा तत्साम्राज्यं व्यनाशयत् ॥७२॥ आसिन्धु नदमप्येनां चापि भारतीयां स नीवृतं । आगत्य पौरवं चैव कंचिज्जित्वा नराधिपं ॥७३॥ तस्मिन् नात्यविशत् किंतु चक्रवर्त्ती स बाबिले । त्रिशते ख्रृष्टपूर्व्वे ऽब्दे चतुर्विंशाधिके मृतः ॥ ७४॥ कल्दायपारसीकाभ्यां तत्साम्राज्यं महत्तरं । सेनान्यो यावनास्तस्य चतुर्धा व्यभजं ३२ स्तदा ॥७५॥ प्राग्दिश्यं सौर्य्यमापांशं पारसीकादिधारकं । शिलूको जित्वरो नाम स प्राप्तो भारतान्तिकं ॥७६॥ यो मौर्य्यचन्द्रगुप्तस्य मगधेशस्य सन्निधौ । दूतं पाटलिपुत्रे ऽपि निवृत्ता योधनो ऽनुदत् ॥७७॥ दक्षिणं मैश्रकं त्वंशं प्तुलिमायो नृपो ऽग्रहीत् । तस्य तद्वंशजानां च वशी भूता यहूदिनः ॥७८॥ सुपालितास्तदग्रैश्च स्वशास्त्राण्यपि मैश्रके । अलेक्षन्द्रीयनगरे ऽध्यापयन्

यवनांस्तदा ॥ ७९ ॥ गतेष्वब्देष्वनेकेषु त्वलेक्षन्द्रमृतेः परे । देशो यहूदकां ऽशो ऽभूत्
मौर्य्यराज्यस्य नीवृतः ॥ ८० ॥ तस्मिंस्तु निर्द्दयो राजान्तियुको नाम भानुमान् । अपरि
ष्कारयामास मन्दिरं परमात्मनः ॥ ८१ ॥ तदाद्यैश्च तथा दुष्टैर्यावनैः मूरपैस्ततः । पीडिता
बहुदुःखौघात्तद्देवार्च्चीपराङ्मुखाः ॥ ८२ ॥ तद्बलाद्बहवश्चैव लैव्या ईश्वरमत्यजन् । तदनुग्रह
तस्त्वन्ये ऽभवन् सद्गणनायकाः ॥ ८३ ॥ मक्कबायाभिधानास्ते ऽतिवीरा भ्रातरस्त्रयः । यहूदो ३३
योनथा चैव सीमोनश्चापि याजकः ॥ ८४ ॥ क्रमेण ह्यधिपा भूत्वा सेना ईश्वरवैरिणां । वहि
श्चक्रुः स्ववासांश्चैत्त्रयेलांश्चक्रिरे पुनः ॥ ८५ ॥ हुर्क्कानाख्यश्च योहन्निः सीमोनस्य सुतो बली ।
ततो ऽन्ये च तथाब्रह्मानानयन्नहरोणजाः ॥ ८६ ॥ तदन्ते ऽन्यतु साम्राज्यं महीयो यावनादपि ।
रौम्यं प्रत्यग्दिशः प्रादुर्भूय जिग्ये बलाज्जगत् ॥ ८७ ॥ ततो यिरूषलेमं च सेनानीरग्रहीन्म

हान् ‌। पम्पीयो नाम रोमीयो विक्रमादित्यके शके ॥८८॥ तत्परे रोमसिंहेन यूल्यसंज्ञेन कैशरा । हेरोद्याख्य इदूमीयः कृतो भूपो यहूदिनां ॥८९॥ अतिष्ठत्स च तद्राजो ऽप्यौगुस्ते कैशरि स्थिते । हेसावादपि वंशात्स उत्थितो नैस्त्रयेलकात् ॥९०॥ किंतु तत्पितरो धर्म्ममवालम्बन्त मौसिकं । मन्दिरं सो ऽप्यलंचक्रे विभोर्नूत्नमिव व्ययात् ॥९१॥ क्रूरात्मा स त्वभूद्राजा सपत्नीपुत्रनाशकः । दाविद्राज्यास्थितिंचातो व्यलपन्नैस्त्रयेलिनः ॥९२॥ विरतांश्च चिराज्ञमा 34
वोशवाक्यप्रवाचिनः । सदात्मव्याप्तमनसः शतवर्षचतुष्टये ॥९३॥ हतं च धर्म्मशास्त्राणां सत्यार्थं शिक्षकैरपि । पाषण्डैर्विविधैश्चापि विभ्रान्तं नीतिदर्शनं ॥९४॥ सर्व्वमेतत्स्मरन्तस्ते दुःखेन महता वृताः । अब्रहादिभ्य उक्तं यत् तस्य पूरणमार्थयन् ॥९५॥ इति श्रीखृष्टसंगीतायां येषूत्पत्तिपर्व्वणि (राजचरित्राद् राज्यकालवाक्याद् इषाययिरिमीयदान्येलभव्यवाक्येभ्यो

ऽज्रनहमीयचरित्राभ्याम् इस्तराचरित्रात् मक्कबायचरित्रात् फ्लाव्ययोसेफादिरचितप्रबन्धे
ऽभ्यश्चोद्धृतो) दाविद्वंशावलिर्नाम पंचमोऽध्यायः

शिष्य उवाच ॥ दाविद्धेरोदिराजोर्यन्मध्येऽभूदखिलं गुरो । अलीयस्य वचश्चैव दशवंशाल्
यो ऽपि च ॥१॥ काल्दाय्यं पारसीकीयं यावन्यं रौम्यमेव च । क्रमशः पृथिवीजेतृ
तत् साम्राज्यचतुष्टयं ॥२॥ श्रुतमेतन्मया सर्व्वं त्वदारब्धं तु यत्पुरा । संवित्पूरणमुत्पेदे ३५
दाविद्वंशे कथं तदा ॥३॥ कथं तस्मै हि खृष्टाय पैत्रं सिंहासनं ददौ । ईशो हेरोदि
समये गुरो तन्मे ऽधुना वद ॥४॥ गुरुरुवाच ॥ नमस्कृता मरीया सा जकरीयनिके
तनात् । यथोक्तं ते मया पूर्व्वं स्वदेशं पुनरागमत् ॥५॥ गलीलाख्यो हि देशो ऽसावन्य
जैरुषितः पुरा । तदा तु बहुभिश्चैवमन्त्यैरपि यहूदिभिः ॥६॥ तत्रैव नशरेन्नाम्नि योसेफो

न्यवसत्पुरे । जरुबाबिलवंश्यो ऽपि सामान्यः स नृपोद्भवः ॥७॥ आत्मने तु स वाग्दत्तां कन्यां
संदृश्य गर्भिणीं । न तु विज्ञाय तद्धेतुं सदात्मातुल्यशक्तिकं ॥८॥ स्वसंसर्गविहीनां तां निश्चि
त्यातः स गोपने । कलङ्कख्यापनानिच्छुर्वर्जितुं समकल्पयत् ॥९॥ एतच्चिन्तयमानस्तु व्याकु
लात्मा स धार्म्मिकः । स्वप्ने दृष्ट्वा विभोर्दूतं तस्यैतदशृणोद्वचः ॥१०॥ दूत उवाच ॥ दाविदः
पुत्र योसेफ मा भैषीर्धार्म्मिको ऽपि नु । त्वं पत्नीमात्मनो नेतुं मरीयां तामदोषिणीं ॥११॥ ३६
अस्यां हि यत्समुत्पद्यमिदं ज्ञेयं सदात्मनः । येष्वाख्यः स्यात्स पापेभ्यः स्ववर्गं हि विमोक्ष्यते ॥
१२॥ गुरुरुवाच ॥ इत्यैशदूतवाक्येन निर्म्मलां तां व्युवाह सः । नासजत्तु तया सार्द्धं प्रसव्ये
श्वरपुत्रया ॥१३॥ अतस्तद्विद्धि निर्णीतमिषायस्याद्भुतं वचः । यत् प्राक् सप्तशताब्दे ऽपि राज्ञे
ऽहाजाय भाषितं ॥१४॥ इषाय उवाच ॥ अहो ते ऽङ्कमाश्चर्य्यमीशः प्रदाता कुमारीह काचिद्भवेद्गर्भ

धात्री । ततोऽपि प्रसोतैव पुत्रं महान्तं किलास्मत्सहस्थायकेशाभिधेयं ॥१५॥ शिष्य उवाच ॥
स्पष्टमीशावतारस्य प्राचीनं तन्नभूद्वचः । इदानीं जननं तस्य विस्तराद्वद मे गुरो ॥१६॥
गुरुरुवाच ॥ तदा कैशर औगुस्तादाज्ञापत्रं विनिर्गतं । स्ववशीभूतदेशेषु करादानाय
सर्व्वशः ॥१७॥ हेस्रयेलास्ततश्चापि स्वे स्वे वंशपुरे सकृत् । स्वनामानि वसून्येव लेखितुं
सकला गताः ॥१८॥ समरीयस्तु योसेफः स ततो दाविदः पुरे । वंशादिलेखनायैव ययौ ३७
बेथ्लहमाभिधे ॥१९॥ यत्रोत्पेदे महान् दाविन्नत्पिनेर्सास्तथैव च । तत्पितामह ओबेद्व बो
जस्य धनिनः सुतः ॥२०॥ तद्वंशीयस्तु शात्त्रेण योसेफः संमतो द्विधा । नाथन्नश्च दाविदः
पुत्रात्सलोम्नश्चान्यथा नृपात् ॥२१॥ एवं हि जारुबाबिल्यो वंश उक्तो यथा मया । तथा
स्मादपि योसेफः समुद्भूतो द्विधोच्यते ॥२२॥ ततो मरीयया सार्द्धं पूर्णे तद्वंशजैः पुरे ।

तुल्यार्थमागतैः स्थानं पान्थशालेऽपि नाप सः ॥२३॥ तच्छालमन्दुरायां तु स्थानं संप्राप्य
गर्भिणी । तत्रापि भव्यवक्त्रोक्तं कुमारी सुसुवे सुतं ॥२४॥ वस्त्रैश्चाराजकैस्तं वै सर्व्वाधार
मवेष्टत । पशुभोजनपात्रे च सर्वभूतेशमार्पयत् ॥२५॥ क्षेत्रे तन्निकटस्थे तु कतिचिन्मेष
पालकाः । रात्रौ जागरिणः स्वाधीनरक्षन् यत्नतस्तदा ॥२६॥ तत्रैतेषु महातेज ऐश्वरं
पर्य्यभासत । बिभ्यत्सूपस्थितश्चापि दूत ऐशो ऽब्रवीदिदं ॥२७॥ दूत उवाच ॥ अहो मा ३८
भैष्ट धन्यं हि समाचारं ददामि वः । सर्व्ववर्गार्थमेवातो महानन्दो भविष्यति ॥२८॥ युष्म
दर्थं समुत्पेदे ह्यद्य यो दाविदः पुरे । एको विमुक्तिदाता स ख्रीष्ट एव महाप्रभुः ॥२९॥
तस्यैतल्लक्षणं ज्ञेयं वराशिपरिवेष्टितं । शयानं बालकं यूयं मन्दुरायामवाप्स्यथ ॥३०॥
गुरुरुवाच ॥ इत्थं ब्रुवति तस्मिंस्तु तत्क्षणादप्युपस्थिता । स्वर्गात्सेनैव दूतानामेतां संगायतां

स्तुतिं ॥३१॥ दूता ऊचुः ॥ महेश्वरायोर्द्धतमेष्वपि ध्रुवमितोऽस्तु लोकेषु यशःप्रकीर्त्तनं ।
क्षितौ तु सन्धिः कुशलान्विता भवेदनुग्रहो नृष्वपि साधुकांक्षिषु ॥३२॥ गुरुरुवाच ॥ इति
गीत्वैशदूतास्ते ऽन्तरीक्षे ऽन्तर्हितास्तदा । ईशदत्तोपदेशं तु मेनिरे मेषपालकाः ॥३३॥ अतो
बेथ्लहमं गत्वा तन्महाकर्म्मदृष्टये । मरीयां तत्पतिं बालं चापश्यन्मन्दुरान्तरे ॥ ३४ ॥
तत्सच्चिह्नं तु संप्राप्य हृष्टास्तद्देशवासिषु । खृष्टजन्मोपदिश्यातो ऽकारयन् विस्मयं परं ॥ ३०
३५॥ पुनर्गत्वा च भद्रास्ते श्रुतदृष्टौघहेतुतः । प्रशशंसुः स्तवैरीशं स्वप्रसादाच्छुलक्ष्मदं ॥३६॥
सर्व्वं तु सुविचार्य्यैतन्मरीया धन्यवादिता । ईशानुग्रहतः पूर्णं हृद्येवास्थापयद्दृढं ॥३७॥ पूर्णं
चान्यदभूद्वाक्यं तस्याः संकल्पनाद्विना । गतायाः करमात्रार्थं नशरेतः पुरात्स्वकात् ॥३८॥
यत्सप्तशतपूर्व्वाब्दे मीकेनेशप्रवाचिना । प्रोक्तं यथा बुधैर्ज्ञातं जन्मस्थानप्रचारकं ॥३९॥

मीक उवाच ॥ अयि बेथ्लहमाभिधेफ्रते पुरि यद्यप्यधुना यहूदिषु । त्वमनेकपतिष्वणुः
स्थिता न तथा स्याः कथिता सनातनं ॥४०॥ य इतो हि भवेत्त्वदुद्भवः स नयेन्मत्कुलमैस्त्र
येलकं । अपि तस्य विनिःसृतिः प्रभोश्चिरकालावधिरस्त्यनादिका ॥४१॥ शिष्य उवाच ॥
जन्मस्थानं शिशोः स्पष्टं तेनोक्तं भव्यवाचिना । ईशत्वमवतारं च संबुध्ये ऽव्यक्तमप्यतः ॥४२॥
गुरुरुवाच ॥ अतिस्पष्टं न किमपि पुराणैर्भव्यवक्तृभिः । गीतं पूरणमात्रात्तु बोधनीयं
समन्ततः ॥४३॥ तस्मात् स्पष्टतरं त्वन्यो ऽहाजाय प्रोक्तवान् पुरा । कन्याप्रसवनं पश्चा
दिदमप्यद्भुतं जगौ ॥४४॥ इषाय उवाच ॥ गलीलादिदेशे तमोव्याप्तमार्गे भ्रमन्तो नृवर्गा
अपश्यन् महोजः । अधो मृत्युगर्ते ऽन्धिकाच्छादिते ऽपि समासीनमर्त्यान् प्रकाशो ऽध्यभास्त ॥
४५॥ त्वया वर्द्धितास्ते त्वदग्रे च हृष्टा फलादातृहृष्ट्येव नष्टापदोघाः । विभक्ताग्रलोप्त्रा हि

मद्यानवह्निद्रयुगोत्क्षेपतुष्टा विभग्नारिदण्डाः ॥४६॥ त्वमीशाचरः कर्म्म गिद्योनवतन्न योधा इवान्ये तुमूलामृगाद्रीः । त्वदीयाज्ञायाञेव वर्म्माणि तेषां सुरक्तानि यान्तीध्मवह्नोतिहोत्रं ॥४७॥ इदानीं हि पुत्रः प्रजातोऽस्मदर्थे प्रदत्तश्च नः स्कन्धधेयाधिराज्यः । स नाम्नाङ्कुतो मन्नदः शक्तिकेशो युगोत्पादकः सन्धिनाथोऽपि च स्यात् ॥४८॥ तदैश्वर्य्यसन्ध्योः प्रवृद्धिर्ह्यनन्ता स्ति सिंहासने दाविदः खल्वितोऽपि । भवेन्न्यायधर्म्मेण तत्स्थापनं चेतिवाक्यं विभूत्साह ४१ संपूरणीयं ॥४९॥ इति श्रीखृष्टसंगीतायां येषूत्पत्तिपर्व्वणि (लूथाचरित्रात् संवेलशास्त्रादिषाय भव्यवाक्यनां सप्तमनवमसर्गाभ्यां मीकभव्यवाक्यानां पञ्चमसर्गान् मत्थायरचितमङ्गलसमाचारस्य प्रथमसर्गाल्लूकरचितमङ्गलसमाचारस्यद्वितीयतृतीयसर्गाभ्यां चोद्धृतः) कुमारोप्रसवनं नाम षष्ठोऽध्यायः ॥

गुरुरुवाच ॥ तथा प्रागेफ्रते ख्याते ततो बेथ्लहमे पुरे । कन्येष्टमेस्त्रयेलैस्तं निर्म्मलासूत
निर्म्मलं ॥१॥ पुरा यत्रेस्त्रयेलस्य राखिला पत्न्यतिप्रिया । कनीयोबिन्यमीनस्य सूतिकष्टा
न्मृतिं गता ॥२॥ यस्मिंश्च स्वपितुः स्थाने यहूदीयकुलोद्भवः । दाविद्राजा महेशार्थं मन्दिरं
समकल्पयत् ॥३॥ संकल्पानुक्रमात्तु नासौ योद्धा विनिर्म्ममे । सलोमेशवृतस्तस्मै दाविदजः
सन्धिसंवृतः ॥४॥ शक्तिकेशाभिधो ऽत्रैव दाविदजः सन्धिपार्थिवः । मन्दिरं परमं लेभे नर 42
देहं किलात्मकं ॥५॥ अस्मिन्नन्यनृणां सम्यक्कुलहीने हि जन्मतः । सद्गुणे ऽन्यवसद्गुप्तमै
श्वर्य्यं स्वस्तिके यथा ॥६॥ कुमार्य्यास्त्वपि गर्भे यो नावमेने महाप्रभुः । धर्म्माण्यन्यनृणां
सो ऽपि नावमन्यत कानिचित् ॥७॥ तस्माल्लेभे स्वसंस्कारं परिच्छेदं दिने ऽष्टमे । ईश्वराय
प्रतिष्ठां च चत्वारिंशे ऽह्नि मन्दिरे ॥८॥ शिष्य उवाच ॥ संस्कारो मह्यमाचार्य्य कस्मात्तावि

त्वयेलजैः । जन्मतोऽह्वोस्तयोर्लभ्यो विशेषात्कथयाधुना ॥९॥ गुरुरुवाच ॥ शेषो ऽग्र
त्वकपरिच्छेदश्चिह्नं यो विभुसंविदः । पुंनामकरणं चाद्यो धर्म्मसंस्कार एव सः ॥१०॥ यं च
कारेश्वरादिष्टो ऽब्रहो विश्वसिनां पिता । बाळमीशहकं स्वीयांश्चेष्मयेळादिकाखिलान् ॥११॥
इष्मयेलोद्भवास्तस्मादारबास्तेभ्य एव च । जातो मुहम्मदः पश्चात्खृष्टीयाहितशास्त्रकृत् ॥
१२॥ अतश्चाप्यखिला वर्गास्तदसत्याध्वगामिनः । संस्कारं संलभन्ते ऽमुं पोगण्डा इष्मयेल ४३
वत् ॥१३॥ संविद्यायांशिनस्त्वेनं स्वपितेशहको यथा । अष्टमे ऽह्नि तथा प्रापुः सच्छ्रद्धा
धर्म्मलक्षणं ॥१४॥ तद्वंशीयादतो ऽप्यग्न्याद्यस्मात्प्राप्यं हि मङ्गलं । अब्रहाद्याः सुविश्वासाः
सर्व्ववंशेषु मेनिरे ॥१५॥ सो ऽप्यमुं प्राप संस्कारं वरधर्म्मप्रसिद्धये । मलहीनो ऽपि लक्ष्मोग्रं
कामादिच्छेदनस्य तत् ॥१६॥ तथान्येषां हि दोषार्थं सहित्वा रक्तपातनं । निर्द्दोषः स

तदा लेभे येषूनाम विमोचकं ॥१७॥ मातुर्यत्प्रजनात्पूर्व्वं ईशदूतोदितं पुरा । नाम्नां
स्वादुतमं ह्येतत्सर्व्वभूतैः प्रकीर्त्तितं ॥१८॥ यस्या हि प्रतिमामात्रं मुक्तेर्नूनमुतो ददौ । देश ईश
प्रतिज्ञाते ऽब्रहज्जान् किल नीतवान् ॥१९॥ स्थितो मोसिपदे येषूस्तां पूर्णां शाश्वतीं सतीं ।
दायी विश्वासिनामेष आस्वर्गमपि नायकः ॥२०॥ यां नान्ये नायकाः केचिन्न मोसिरपि
शास्त्रदः । संसारप्रान्तरभ्रान्तनृभ्यो दातुमशक्नुवन् ॥२१॥ येष्वि सर्व्वारिजित्येवं संस्कृते ४४
ऽस्मिन् महीयसि । तन्मातुस्तत्परे मासे ऽतिष्ठच्छास्त्रादशौचिता ॥२२॥ तच्छेषे तु सती
सैच्छत् पतिबालसमन्विता । स्वशुद्ध्यर्थं समुत्स्रष्टुं कपोतौ विभुमन्दिरे ॥२३॥ चत्वारिंशे
यत्तो ऽह्न्येनं बलिं दातुं प्रसूतितः । आज्ञां प्रोवाच मातृभ्यो मोसिरीश्वरशास्त्रदः ॥२४॥
तं चैव प्रथमोत्पन्नं प्रतिष्ठापयितुं तदा । येषूमीशाय मातैच्छद्धर्म्मशास्त्रोदितं यथा ॥२५॥

किंतु संस्कारयोर्मध्ये या बभूव नवा क्रिया । तां प्राक् ते कथयिष्यामि मोक्षैश्वर्य्यप्रकाशिकां ॥ २६॥ इति श्रीखृष्टसंगीतायां येषूत्पत्तिपर्व्वणि (मोसिरचितपंचशास्त्राद् नूनजयेषूचरित्राद् धर्म्मनायकचरित्राद् राज्यकालवाक्याद् दाविद्गीतेभ्यो लूकरचितमङ्गलसमाचारस्य द्वितीयसर्गाच्चोद्धृतो) मोक्षनामकरणं नाम सप्तमो ऽध्यायः ॥

गुरुरुवाच ॥ नहि भद्रैः समन्तात्सो ऽज्ञातो दूरस्थितैरपि । अन्यजैः सत्प्रकाशस्य यहूद्योर्व्व्यां ४५
किलोदयः ॥१॥ तदा यिरूषलेमे हि प्राग्दिशः समुपस्थिताः । पण्डिताः पारशीकाया ज्योतिर्ज्ञा ईशचोदिताः ॥२॥ ते ऽतिदूरपथं गत्वा स्वाज्ञाते सत्पुरे विभोः । तत्राश्चर्य्यमिदं वाक्यमब्रुवन्निस्त्रयेलजान् ॥३॥ पण्डिता ऊचुः ॥ राजा समुत्पेद इहाधुना यो यहूदिनां कुत्र स संस्थितो ऽहो । प्राच्यां हि नक्षत्रमवेक्ष्य तस्य तदर्च्चनायात्र समागताः स्मः ॥

४॥ गुरुरुवाच ॥ इत्यन्यजैरपि प्रोक्तं हेरोदिः श्रुतवान् नृपः । सर्वे यैरूषलेमीयाश्चात्यन्तां
क्षुब्धिमाप्नुवन् ॥५॥ ततो यिरूषलेमस्थान् प्रधानान् यज्वनो विभोः । शास्त्रोपदेशकांश्चापि
समाहूयाब्रवीन्नृपः ॥६॥ हेरोदिरुवाच ॥ गुरवो ज्ञातुमिच्छामि युष्माभिः शिक्षितो बुधैः ।
यः खृष्टो ऽभीष्यते ऽस्माभिः क्व समुत्पाद्य एव सः ॥७॥ शास्त्राध्यापका ऊचुः ॥ महाराजेन यत्पृष्टं
तद्वक्ष्यामो ऽतियत्नतः । स्पष्टं तद्ध्यब्रवीन्मीको ऽहाजकाले प्रवाचकः ॥८॥ अयि बेथ्लहमेत्यादि ४६
वाक्याज्जन्मस्थलं प्रभोः । अस्मज्ज्ञातं यहूदीयपुरं बेथ्लहमं ध्रुवं ॥९॥ तस्माल्लघोरपीष्टं
तमैस्रयेल्यौघनायकं । भव्यं मन्यामहे काले ऽनादिनिःसरणान्वितं ॥१०॥ गुरुरुवाच ॥
एवं ज्ञापितवन्तो ऽमुं भव्यवक्तुरिमां स्फुटां । खृष्टोत्पत्तिस्थलोक्तिं ते याजकाध्यापका ययुः ॥
११॥ अतितुष्टस्तु धूर्त्तः स तच्छ्रुत्वा परदेशिनः । आहूय पण्डितान् गुप्त्या वचस्तानेतद

ब्रवीत् ॥ १२ हेरोदिरुवाच ॥ यदर्थ ह महाभागा मद्भूमिं यूयमागताः । सर्व्वं मयोपकार्य्यं
तद्बुभुजा वित्त निश्चयं ॥१३॥ युष्मदर्थेऽत्र इच्छामि संश्रोतुमतिविस्तरात् । कथं तज्जन्म
नक्षत्रमाविर्भूतं कदा च वः ॥१४॥ गुरुरुवाच ॥ इदं राज्ञो वचः श्रुत्वा शरलाः पण्डिता
स्ततः । तत्पृष्टं विस्तरात्सर्व्वं ज्ञापयामासुरेव तं ॥१५॥ तस्मिन्समाप्त आख्याने यत्नै
र्जिज्ञासितं वचः । तत्तथाज्ञापयद्भूत्तो यथायज्वोदितं नृपः ॥१६॥ हेरोदिरुवाच ॥ ४७
अविज्ञां मत्प्रजामेतद्रहस्यं कार्य्यमद्भुतं । ज्योतिर्ज्ञा ईशनीता हे मा पृच्छत कदाचन ॥१७॥
मूर्खत्वाद्यदसौ वर्ग ईर्ष्यायाश्चैव याजकाः । नावोचन्नधुना तद्वो ज्ञापयिष्याम्यहं मुदा ॥
१८॥ शास्त्राणि नः पुरादेशाद्रचितानि सदात्मनः । युष्मत्पृष्टं जनिस्थानं ह्याहुर्बैथ्लहमं
स्फुटं ॥१९॥ पुरं क्रोशत्रये तत्तु दक्षिणस्यामतः स्थितं । गत्वातो मृगयध्वं तं महायत्नेन
†

सच्छिशुं ॥२०॥ प्राप्य त्वन्यानिदं कांश्चिन्मा ज्ञापयत मां विना । ज्ञापितोऽहं च तत्रेत्वा
राजानं प्रार्चितास्मि तं ॥२१॥ गुरूरुवाच ॥ इति श्रुत्वातिसंतुष्टास्तेऽङ्गीचक्रुर्वचस्तदा ।
जिघांसुत्वमजानन्त ऋजवो धूर्तभूपतेः ॥२२॥ मुमुक्षूनपि तान् प्राग् हि नक्षत्रं राजलक्षणं ।
यिरूषलेममात्रान्तमानयद्विभुनार्पितं ॥२३॥ यस्मात्तत्रेशशास्त्रज्ञान् परमात्मालये किल ।
प्रच्छनीयमभूत्स्थानं सर्व्वलोकेष्टजन्मनः ॥२४॥ तत्त्विष्टमैस्त्रयेलीयशास्त्रात्प्राप्योपदेशनं । ४८
न तत्पुण्यपुरेऽतिष्ठत् हेरोदिवचनात्परे ॥२५॥ किंतु बेथ्लहमं यत्नाच्छिशोराज्ञो दिदृक्षया ।
अगच्छन्नेव सहिता न कैरपि यहूदिभिः ॥२६॥ तदर्थं निर्गतैस्तैस्तु भद्रचित्तैर्महा
पुरात् । प्राग्दृष्टं प्राचि नक्षत्रं यत् तदेवेक्षितं पुनः ॥२७॥ तेऽत्यनन्दंस्तु तद्दृष्ट्वा राज्ञो जातस्य
लक्षणं । तदग्रेऽप्युपदेशार्थं चलद्बेथ्लहमावधि ॥२८॥ तस्मिन् ग्रामे यदा ते तु विष्टा

दावित्पुराभिधे । तदादृश्यत नक्षत्रमेकगेहोपरि स्थितं ॥२९॥ ततस्तस्मिन् प्रविश्यान्त
रीशनीतिविदो बुधाः । सच्छिशुं ददृशुर्मात्रान्वितं धन्यमरीयया ॥३०॥ दण्डवत्तं प्रणेमुश्च
ते चिरोत्कर्षपूरकं । लोकानां दण्डधातारं सर्व्वपुण्येष्टमुज्ज्वलं ॥३१॥ नमष्कृत्योपहारांस्ते
तस्मै तु ददुरुत्तमान् । आनीतान्दूरदेशात्स्वान्तसमुत्सृष्टये मुदा ॥३२॥ सुवर्णं किल राज्ञे
ते शक्तिकेशाय कुन्दरं । आदत्तनरभावाय त्वयच्छन् रसगन्धकं ॥३३॥ एवं तं द्रव्यदानैस्ते ४९
ऽस्मत्सहस्थेश्वराभिधं । कुमार्य्या मातुरङ्कस्थमपि संसेव्य निर्ययुः ॥३४॥ अथ स्वौकः पुन
र्गन्तुमिच्छुतस्तत्पुरेऽपि तु । शयानांस्तर्ह्युपातिष्ठत्साधूनेशमिदं वचः ॥३५॥ श्रीपरमेश्वर
उवाच ॥ आदिष्टा अपि हेरोदिं माभियाताततायिनं । पथान्येन तु देशं स्वं याता
वाप्तवराः पुनः ॥३६॥ गुरुरुवाच ॥ तथादिष्टा विभोर्वाण्योत्तरं येरूषलेमकं । मार्गं

नारुह्य देशं स्वमैन्द्रेण प्राचलन्पथा ॥३७॥ तथा महापुरीं तां ते ऽनभिज्ञातात्मराजकां । त्यक्त्वा दूरे ययुः प्राक्स्थे स्वदेशे पारसीकके ॥३८॥ सर्व्वांश्चाज्ञापयंस्तत्र विमुक्त्यासक्तमानसान् । यहूद्याधिपमुत्पन्नं सर्व्वलोकतमोनुदं ॥३९॥ यत्प्रचार्य्यमहामुक्त्या त्रिंशदब्दात्परे त्वितः । आह्वया अन्यजाः सर्व्वे पुण्यखृष्टीयमण्डले ॥४०॥ किंतु सेवितवत्स्वेषु पुर्य्यामीसोजदाविदः । खृष्टमग्र्येषु सर्व्वेषां तथैवानैस्त्रयेलिनां ॥४१॥ वाक्यानीशप्रवक्तॄणां पूरणारम्भमाप्नुवन् । गायतां खृष्टकालीयक्रियाः शक्त्या सदात्मनः ॥४२॥ गुप्तार्थवचसो ऽप्यज्ञवर्गे ते दाविदादयः । कार्य्यां तद्राजपुत्रस्यार्च्चां प्रोचुः परगोत्रजैः ॥४३॥ तदेकं खल्विषायेण शिष्यप्रागुदितेन ते । गीतं शृण्वन्यजातीनां भव्याह्वानविवर्णनं ॥४४॥ इषाय उवाच ॥ समुत्पत्स्यते नूनमीस्यः शिफातो महादण्डयुक्तो ऽवरोहो ऽत्युदारः । तमाच्छादयेत्त्वीश्वरस्यार्य्य

आत्मा सुधीमन्त्रशक्तीशभक्तिप्रदाता ॥४५॥ सदात्मावृतं नूनमीसीशिपोत्थं पृथिव्यां स्थितं
सर्व्ववर्गध्वजं तं । समीक्ष्यान्यराष्ट्रोद्भवो ऽन्वेषितारो ऽतितेजोयुतं चाप्नुयुस्तद्विरामं ॥४६॥
तथाहेश्वरो गर्भतो ऽप्यर्हमेनं सृजन्नात्मवर्गैस्त्रयेलस्य मुक्त्यै । इदं चेन्नु न स्यादपीशस्य साक्षा
त्वदैश्वर्य्यदातुर्भवेदग्रतेजाः ॥४७॥ लघीयो हि याकोबमात्रोद्भवां ते कुलानां पुनःस्थापनं
बन्धमोक्ते । परोद्गाविनामप्यहं त्वां तमोघ्नं करिष्यामि सन्मुक्तये सर्व्वभूमौ ॥४८॥ नरै ५१
रप्यवज्ञात वर्गावगीतातिदूरान्नृपास्त्वां समेत्यार्च्चितारः । जगत्येव प्रत्यन्तभूम्यस्त्वया
प्याप्तदार्हेण मत्संविदः स्थापयित्रा ॥४९॥ तमोगर्त्तबद्धा निशम्य त्वदाज्ञामुदेष्यन्ति रम्य
स्थलेष्वेव नेयाः । नगेष्वप्यहं मार्गमेभ्यः करिष्ये विमुक्तेभ्य एवाखिलाशाभ्य उर्व्याः ॥५०॥
प्रगायान्तरीक्ष प्रनन्दैव पृथ्वि ह्यपुत्राभवद्या महेशार्य्यभूमी । इदानीं सुतान् साखिलोर्व्व्याः

समेतांस्त्वदयध्वजं प्रत्यवेक्षेत हृष्टा ॥५१॥ इति श्रीखृष्टसंगीतायां येषूत्पत्तिपर्व्वणि (मोसि पंचशास्त्राद् इषायभव्यवाक्यानामेकादशोनपंचाशत्तमसर्गाभ्यां मत्थायरचितमङ्गलसमाचारस्य द्वितीयसर्गाच्चोद्धृतः) सन्नायकनक्षत्रोदयो नामाष्टमोऽध्यायः ॥

गुरुरुवाच ॥ तदा यिरूषलेमे तु बुधानां पुनरागतिं । दुर्नृपोऽपेक्षमाणः स निरन्तरमचिन्तयत् ॥१॥ मया संप्राप्तराज्येन विनाश्यमतियत्नतः । दाविदुन्नव्यराजस्य ५२
मन्निन्नस्य प्रतीक्षणं ॥२॥ प्रत्नवाक्येभ्य उत्पन्नं तत् समस्ता यहूदकाः । विशेषाच्छास्त्रवेत्तारः पालयन्ति सनातनं ॥३॥ स खृष्टः पर उन्नव्य इति मह्यं भयादमी । आहुः किंतु तमुन्नत माशंसन्तेऽन्तरे दृढं ॥४॥ अचिरादपि भावीतो दान्येलोक्ताब्दसंख्यया । निर्णीतः पुरनिर्म्माणात्खृष्टकाल इति श्रुतं ॥५॥ यद्यल्पे खृष्टमाहुर्मां किंवा मद्वंशसंभवं । पाषण्डा

स्ते समाख्याताः शेषैः शास्त्रोपदेष्टृभिः ॥६॥ सर्व्वैर्मे ज्ञायते जातिर्भिन्नवंशसमुत्थिता । अनु
जन्माख्यधर्म्मेणैत्तयेल्यस्यापि शाश्वतः ॥७॥ मद्वंशादिरिदूमो ऽस्ति न याकोबो ऽब्रवीत्तु सः ।
यहूदस्य कुले भव्यं स्वसूनोर्दण्डमैश्वरं ॥८॥ ततो ऽमुमधुना जातं ज्योतिर्ज्ञैश्चापि मार्गितं ।
विघ्नं न कुर्व्वंति मयि प्रवक्ष्यन्त्यखिला नृपं ॥९॥ ख्रीष्टे स्वश्रद्धया ते न बलाद्गेष्यन्ति
कैशरः । सिंहासनात्क्षिपेयुश्च मां रोम्यहितमप्यतः ॥१०॥ तस्मान्मद्देशराजं यं बालकं ५३
परदेशिनः । आहुः स खलु हन्तव्यो मद्विरोधिध्वजात्मकः ॥११॥ मद्धन्तव्यशिशुप्राप्त्यै
प्रेरिताः पण्डिताः कुतः । विलम्बन्ते ऽथवा किं तं नापुर्वेथ्लहमे ऽधुना ॥१२॥ गुरुरुवाच ॥
एवं सो ऽचिन्तयद्धूर्त्तो नत्वन्विष्टशिशुं स तं । अवेत्स्वनगरानीतं मन्दिरे ऽपि प्रतिष्ठितं ॥
१३॥ शिष्य उवाच ॥ एनं संस्कारमाचार्य्य चत्वारिंशे ऽह्नि जन्मतः । कथं यिरूषलेमे

स प्राप्नोतच्छ्रोतुमिष्यते ॥१४॥ गुरूरुवाच ॥ पण्डितानां गतेः पश्चाद्दिनेषु शिशुसेविनां ।
कतिष्वशौचशेषो ऽभूद्धन्यमातुर्यथाविधि ॥१५॥ ततः पत्यन्विता बालं चत्वारिंशद्दिनायुषं ।
निन्ये बेथ्लहमादीशवेद्यग्रे सा महापुरे ॥१६॥ तथा हि ज्येष्ठपुत्राणां मातृस्तत्समये ध्रुवं ।
निवृत्ताशौचका मोसिरैशशास्त्रद आदिशत् ॥१७॥ श्रीपरमेश्वर उवाच ॥ पुंसो जरायु
परिमोचिन हेस्रयेल्यान् शुद्धीकरोमि नरजान् पशुजांश्च सम्यक् । यस्मात्किलोदधरमुग्यलया ५४
दहं तान् युष्मत्कृते प्रथमजान् विनिहत्य मैश्रान् ॥१८॥ गुरूरुवाच ॥ इदमीशवचो
मत्वा मोस्युक्तं बलिदित्सुका । पत्या सह मरीया तं शीयोने ऽभ्यानयन्नगे ॥१९॥ द्वितीयं
मन्दिरं यत्र जरूबाबिलनिर्म्मितं । रचितं तु परे नूत्नमिव हेरोदिना श्रमात् ॥२०॥ तस्मिं
स्तीर्त्वोरु वाद्यं तौ परदेश्याजिराभिधं । अङ्गनं किल विष्ट्वा च ततो भास्वति गोपुरे ॥

२१॥ तीर्त्वा दाननिधिस्थानं चापि नार्य्यजिराभिधं । द्वारे ऽप्यारुह्य नारोभिरवेद्ये बल्य
दित्सुभिः ॥२२॥ हेस्त्रयेल्ये ऽजिरे ऽस्थातां यस्यान्तरपि संस्थितः । यज्वेतरैरनाश्रेयः पुण्य
एवालयो विभोः ॥२३॥ तदाजिरे ऽविशत्तस्मिन्नीत एव सदात्मना । वृद्धो यैरूषलेमीयः
सिम्योनो नाम धार्म्मिकः ॥२४॥ चिरादपेक्षमाणायास्मै सान्त्वं ह्यैस्त्रयेलकं । न मर्त्तव्यं
त्वयादृष्टखृष्टेनेतीश्वरोदितं ॥२५॥ पूर्व्वं प्रतिश्रुतस्यैतस्येदानीं वीक्ष्य पूरणं । स्वाङ्के ५५
कृत्वा स सद्बालं विभुं तुष्टाव तुष्टहृत् ॥२६॥ सिम्योन उवाच ॥ त्वदर्च्चिने ऽद्येश्वर
सन्धिसंयुतं त्वदुक्तितो निःसरणं ददासि मे । स्वलोचनाभ्यां ह्यधुनेक्ष एव ते विमुक्तिवीजं
वरदात्र संस्थितं ॥२७॥ यदन्यलोकेषु तमोनुदुज्ज्वलं त्वदिस्त्रयेलस्य तु कीर्त्तनं वरं । समीप
एवाखिलभूमिवासिनां समर्पयामासिथ सांप्रतं भुवि ॥२८॥ गुरुरुवाच ॥ इति गीत्वैष

बालस्य पितरौ चैव विस्मितौ । आशाप्य तत आश्चर्य्यं मरीयामब्रवीद्वचः ॥२९॥ सिम्योन उवाच ॥ बहूनामिस्त्रयेलेषु पातायोत्थापनाय च । बहूनां चापि गुप्तानामाविष्कृत्यै हि चेतसां ॥३०॥ निन्दनान्वितलक्ष्मैव स्थितो ऽयं बालकस्तव । यस्मात्त्वद्धृदयं चापि दुःखं व्यत्स्यति शूलवत् ॥३१॥ गुरूरुवाच ॥ इति भव्यवचः सत्यं वृद्धेनोक्तं यदाद्भुतं । तदा सदात्म संव्याप्ता काचिद्वृद्धाप्युपस्थिता ॥३२॥ हन्ना यासेरवंशीया सप्ताब्दान् सधवा पुरा । स्थित्वा ५६
चतुरशीत्यब्दानजीवद्विधवा सती ॥ ३३ ॥ प्रार्थनाभिः सदा युक्तोपवासैश्चैव मन्दिरे । अहोरात्रे ऽपि भक्ता सा परमात्मानमार्च्चयत् ॥ ३४ ॥ सापि तुष्टाव तद्दृष्ट्वाज्ञापयच्चार्च्चिनः परान् । ये ये यिरूषलेमस्थाः प्रत्यैच्छन्मुक्तिमीश्वरात् ॥३५॥ येष्वस्तु पितरौ सर्व्वं शास्त्रोक्तं सुसमाप्य तौ । मन्दिरादजिरे रम्यैः संवृतान्निर्गतौ पुनः ॥३६॥ तथारब्धं तु विद्यात्र यद्गव्यं

खृष्ट आगते । द्वितीयमन्दिरोज्ज्वालं प्रोदितं भव्यवक्तृभिः ॥३७॥ तद्विनिर्म्मितिकाले ऽपि प्राङ्नृपानुग्रहे गते । भर्त्सयत्स्वरिषूग्रेषु व्यूहे प्राप्ते ऽप्यतो भयं ॥३८॥ कनीयः शुभमप्येतत् प्रदग्धात्पूर्व्वमन्दिरात् । इति शोचत्सु वृद्धेषु प्रवाच्येतद्वचो ऽब्रवीत् ॥३९॥ हग्गाय उवाच ॥ युष्मासु वृद्ध इह को ऽस्त्यवशिष्ट एतत् पूर्व्वौजसावृतमवेक्षितवान् सदोकः । तत्सांप्रतं तु कथमीक्ष्यत आ न किं वः साक्षाद्विनष्टमिव खल्विति पृच्छतीशः ॥४०॥ त्वं हे पते तु जरुबाबिल हे महिष्ठयज्वंश्च योशदकपुत्र नु येष्वभिख्य । स्तं कर्म्मणि स्थिरमती उभकौ तथापि देशस्थसर्व्वसहितौ नवमन्दिराग्रे ॥४१॥ युष्माभिरेव सह संस्थित ईश्वरो ऽहं मिश्रापयानकृतसंविदनुक्रमेण । आत्मा मदीय इह सन्ततमेव वो ऽन्तस्तिष्ठत्यतः क्वचिदहो न बिभीत यूयं ॥४२॥ काले गते ऽल्प इत एव दिवं भुवं च साब्धिस्थलां विभुरहं परि 57

धूनयिष्ये । सर्वान्वयानपि तथा विचलीकरिष्ये ऽथागाम्यशेषकुलवांछित ओजसात्र ॥
४३ ॥ एवं प्रदीप्तिभिरिदं द्युबलेश ओको व्याप्स्यामि तद्रजतहेमचयाधिपो ऽहं । पूर्वान्
सलोमरचिताङ्गृहमुत्तरं च कर्त्तास्मि दीप्ततरमत्र हि सन्धिदायी ॥४४॥ गुरुरुवाच ॥ इति
प्रंचशताब्दात्प्रागगीतं यद्गव्यवाचिना । आगते सन्धिनाथे तद् बालेऽप्यारब्धपूर्त्यभूत् ॥४५॥
यं सिम्योनो जगौ तत्रैस्त्रयेलवरकीर्त्तनं । नत्वेतन्मात्रदीपं किंत्वखिलोर्व्वीतमोनुदं ॥४६॥ ५८
शिष्य उवाच ॥ हग्गायेन तथा गीतं यत् सर्वान्वयवांछितं ॥ सद्वृद्धेन तथा चापि तदुपस्थिति
वादिना ॥४७॥ कथं संपूरणीयं तदस्मिन् शीयोनमन्दिरे । इस्त्रयेलीयमात्रार्थं निर्म्मिते
तत्कुलोद्भवैः ॥४८॥ तस्मिन् किं भिन्नवंशीयाः केचिदप्यार्च्चयन् विभुं । प्रार्थयन् वा समु
त्पद्यां विमुक्तिं दाविदः कुले ॥४९॥ गुरुरुवाच ॥ प्रथमं शिष्य तत् स्मार्य्यमब्रहायोदितं

वचः । त्वद्वंशीयाञ्जनाः सर्व्वे शुभं प्राप्स्यन्ति खल्विनि ॥५०॥ ततो ऽन्यजैरपीष्टो यैः
संभागो ऽस्या हि संविदः । धर्म्ममाचरतो मौस्यं नावामन्यत तान् विभुः ॥५१॥ रखाबा
यादृशी ख्याता यिरीखूवासिनीश्वरं । सुविश्वस्यैस्त्रयेलानां स्वपुरप्रतियुध्यतां ॥५२॥
तस्मिन् सम्यग्घते येष्वा नूनजेनेशवाक्यतः । ससर्व्वबन्धुका मुक्तिं भागं चापैस्त्रयेलिषु ॥
५३॥ रूथा वा यादृशी भद्रा पुरा ख्याता मवाबिनी । देशं सदैवतं त्यक्त्वा पुरे बेथ्लहमे ५९
स्थिता ॥५४॥ बोजेन धनिना तत्र यहूदीयकुलोद्भवा । व्यूढाभूतो ऽभून्महाराजदाविदः प्र
पितामही ॥५५॥ अन्यजाः पुरुषाश्चैव बाबिल्याद्बन्धनात्परे । परिच्छेदादिधर्म्माणि लेभिरे
ऽनेकदा मुदा ॥५६॥ प्रथमं जलसंस्कारेणानुजन्मावलम्ब्य ते । तत्परे धर्म्मशास्त्रेणाब्रहजा
इव संमताः ॥५७॥ शिष्य उवाच ॥ संन्यस्तस्वकुलानेतान् पुनर्जन्मावलम्बिनः । दत्तपुत्रान्

विनान्ये किं नैच्छन् सन्धिमिमं जनाः ॥५८॥ गुरुरुवाच ॥ विना पूर्व्वोदितान् शिष्य ताव
ड्धर्म्मावलम्बिनः । अभवन्नीशविश्वासा अन्ये ऽपि परदेशिनः ॥५९॥ परिच्छेदादिहीनास्ते
न चाब्रह्मगणाश्रिताः । ईशभक्तास्तथाप्यासन् द्वारगाख्या यहूदिषु ॥६०॥ यतो वहिः
स्थिते द्वारे मन्दिरस्यागता अमी । परदेश्याजिरे प्रोक्ते परमात्मानमार्च्चयन् ॥६१॥ प्रेर
यन् स्वांस्तु यज्वभ्यो बलीन् भास्वति गोपुरे । न तु शक्तास्तदन्तस्ते सेवितुं मोसिशास्त्रतः ॥ ६०
६२॥ तद्वत्पुरापि कीनीया रिकाबीयाश्च कीर्त्तिताः । उत्पन्नाः श्वशुरान्मोसेरारब्याद् यित्रु
संज्ञकात् ॥६३॥ ऐस्रयेल्यहिताः सत्याद्वितीयेश्वरसेविनः । न त्ववर्जन् स्वरीतीस्ते न वा
दधत मौसिकाः ॥६४॥ किंतु तद्दिष्टधर्म्मेभ्यो महाज्ञाः केवलं दश । सम्यक् पालयितुं द्वारा
श्रिता भक्ता नियोजिताः ॥६५॥ शिष्य उवाच ॥ महत्यस्ता दशाज्ञाः का याः सम्यङ् मन्तु

मन्यजाः । भक्ता आब्रह्मसंस्काररहीना अपि नियोजिताः ॥६६॥ गुरूरुवाच ॥ सीनाय
पर्व्वते ऽगम्ये विद्युज्झमाशनीवृते । मोसये ता यथेशोक्तास्तथाज्ञाः शृणु सांप्रतं ॥६७॥ श्रीपर
मेश्वर उवाच ॥ विभुस्त्वदीशो ऽस्म्यहमेव मिश्रात्वां नीतवान् बन्धनवेश्मतो ऽत्र । अतो
मदाज्ञा प्रथमेयमीशं कंचिन्न विद्याः खलु मां विनेति ॥६८॥ मूर्त्तिं तु कस्यापि दिवि क्षितौ वा
पृथिव्यधःस्थाम्भसि वा सतस्त्वं । स्वार्थे न कुर्य्याः प्रतिमात्मकां तत्प्रणामकृत्ये नच सेव ६१
नाय ॥६९॥ विभुस्त्वदीशो ऽस्म्यपरासहिष्णुः प्रचण्डचित्तेश्वर एव यस्मात् । मां द्रुह्यतां
चाप्यघदण्डदायी तत्पौत्रपौत्रावधिवंशजेभ्यः ॥७०॥ मां स्निह्यतां त्वेव नृणां मदाज्ञासुपालिनां
चापि सतां कृते ऽहं । दयालुतां भूरिसहस्रवृन्दे प्रदर्शयंस्तत्प्रियहृत् सदेति ॥७१॥
विभोस्त्वदीशस्य मृषैव वक्त्रे सन्नाम भीमं न नयेः कदाचित् । यतो विभोर्नाम मृषा नयेद्यस्तं

पापहीनं नहि वेत्स्यतीति ॥७२॥ सप्ताहशेषं किल विश्रमाख्यं स्मरैव पुण्योकरणाय वारं ।
सर्व्वं हि षट्पूर्व्वदिनेषु कर्म्म श्रमात् समाचर्य्य निजं प्रवृत्त्या ॥७३॥ विश्राममीशस्य विभो
स्तदार्य्यं रक्षेरकर्म्मा तव चात्मजो ऽपि । पुत्री च दासो भृतकः पशुश्च द्वाराश्रितस्ते ऽप्यतिथि
र्विदेशी ॥७४॥ विभुर्दिवं हि क्षितिमर्णवं तत्स्थितं च सर्व्वं षडहे ससर्ज । अतः स्वविश्राम
दिने न्यधात्स वराशिषं पुण्यमयीं किलेति ॥७५॥ त्वमेव मातापितरौ स्वकीयौ समाद्रियेथाः ६२
सततं नतात्मा । अतस्त्वदीयेश्वरदत्तभूमौ भवेद्वयो ऽतीवचिरं तवेति ॥७६॥ नरं न हन्याः
खलु कंचनेति न वा प्रकुर्य्या व्यभिचारमित्थं । त्वं नापि चोरेरिति नापि मिथ्यासाक्ष्यं
नयेः स्वप्रतिवासिनीति ॥७७॥ निकेतनं स्वप्रतिवासिनो न त्वं नापि दारान् खलु तस्य
गृध्येः । न तस्य दासीं भृतकं च गावं खरं च किंचिद्वसु तस्य चेति ॥७८॥ गुरुरुवाच ॥ इति

प्रोक्ता दशाज्ञास्ते भक्ता द्वाराश्रिता दृढं । त्यक्ततद्विपरीतात्मसर्व्वाचारा अपालयन् ॥७९॥
एषु त्वल्पेषु मा विज्ञोस्त्रयेलाचारवेदिषु । संपूर्णाः परदेशीयविषयोक्तीः प्रवाचिनां ॥८०॥
परं ह्यागामिनं कालमिषायाद्याखिला अमी । चिरादू वुर्यदा न स्यात् किलैतद्द्वारबन्धनं ॥८१॥
स तस्मिन्सर्व्वलोकेष्टे प्रोढ आविष्कृतो भवेत् । नाव्यक्तस्त्वधुना सम्यग्बालके ऽपि यथोदितं ॥
८२॥ ततश्चापि तमेवास्मत्सहस्थेश्वरसंज्ञकं । इस्रयेलजमात्रा न प्रणेमुस्तुष्टमानसाः ॥८३॥ ६३
अन्यजास्त्वपि तं बालं यहूदक्षितिसंभवं । आगताः सेवितुं हर्षाद्बुधा मत्प्रोदितं यथा ॥
८४॥ इति श्रीखृष्टसंगीतायां येषूत्पत्तिपर्व्वणि (मोसिरचितपंचशास्त्रस्य निःसृतिलेव्यसंख्या
स्कन्धेभ्यो येषून्नजचरित्राद् रूथाचरित्राद् दाविद्गीतेभ्यो हग्गायभव्यवाक्यानां द्वितीय
सर्गान्मत्थायलूकयोर्द्वितीयसर्गाच्चोद्धृता) ऽस्मत्सहेश्वरप्रतिष्ठा नाम नवमोऽध्यायः ॥

शिष्य उवाच ॥ ज्ञायते ते गुरो वाक्यैर्यहृद्योतरमन्दिरे । दर्शितव्यो महान् भूमौ प्रकाशो मुक्तिदायकः ॥१॥ नैतन्मतावलम्ब्यल्पनृमात्रार्थं पुरेव सः । किंतु सर्व्वान्वयोत्पद्य सद्यो धरणिमण्डले ॥२॥ नृणां त्वेतत्सुकालात्प्रागैत्त्रयेल्याविदां दशा । कासीत् तद्विषये शङ्का गुरो मे हृदि संस्थिता ॥३॥ गुरुरुवाच ॥ अतो विश्वनरेभ्यो यत् पुरैतन्मुक्तिगोचरं ।
आदिष्टं शृणु तच्छिष्य मद्वाचं पुण्यशास्त्रतः ॥४॥ नराभ्यामादिसृष्टाभ्यां महानागकुमन्त्रणात् । ६४
पापान्धौ पतिताभ्यां वाग्दययैषा विभूदिता ॥५॥ सपत्या अधुना नार्य्या दण्डितायाया मया श्रुतः । हन्यान्नागशिरः पूर्व्वं तेनाप्याहतपार्ष्णिकः ॥६॥ नरैस्ताभ्यां समुद्भूतैरग्र्यैरेषा तु वाक् श्रुता । पुण्यैरल्पैरपोष्टा च जगत्यङ्घःपरिप्लुते ॥७॥ महामायोर्म्मिभिर्यापि देव बाहुल्यहेतुभिः । घूर्णितेषु मनुष्येषु न सम्यग्विस्मृताभवत् ॥८॥ तस्याः संपूरकं विद्धि

वाचः शब्दं किलेश्वरं । अवतीर्णं तथा चैव नारीमात्रसुतीकृतं ॥९॥ स ह्याहतशरीरो ऽपि
महामायाधिकारिणा । नागेनान्ते जगद्व्यापिशक्तिं तस्य हनिष्यति ॥१०॥ शिष्य उवाच ॥
वाक्यं त्वेतद् गुरो भूमौ सत्येशप्रत्ययान्वितं । कथं परंपराप्राप्तमाद्यसृष्टनरावधि ॥११॥
गुरुरुवाच ॥ आदमः प्रथमो नृणां हवा चाप्यस्य पंजरात् । सृष्टा पापात्परे ऽव्यक्तं सान्त्वं
तत्प्रापतुर्विभोः ॥१२॥ तयोः पुत्रप्रभृतिषु धार्म्मिका हाबिलादयः । तदरक्षन्नवज्ञातमपि ६५
केनादिभिः शठैः ॥१३॥ वर्धमाने त्वधर्म्मे ऽतो ऽसुरवद्दुष्क्रियैर्भुवि । व्याप्तायां तदृतं धर्म्मो
नृन् हनोक उपादिशत् ॥१४॥ शेषे तूर्व्वीस्थिताघौघे ऽतिक्रान्ते सहनं विभोः । आगतं
सलिलं घोरं मग्नभूशैलवेश्मकं ॥१५॥ केवलः प्रलयान्नोहः ससप्तपरिवारकः । विभोर्निर्मि
तयाज्ञातो नावा धर्म्म्यः प्ररक्षितः ॥१६॥ यो मनुर्ब्राह्मणैः प्रोक्तो नूत्नसृष्टोर्व्यधीश्वरः ।

भुवने ऽद्ध्यः पुनर्जाते त्रिकुलानां पिता नृणां ॥१७॥ यापिताञ्ज्येष्ठपुत्राद्धि तुरूष्का यवनाः
शकाः १ अन्ये ऽपि च कनिष्ठात्तु खामान्भैश्रकनानकाः ॥१८॥ मध्यमात्तु प्रियात्पुत्रात्सेमनाम्नः
समुत्थिताः १ कल्दायारबसूराद्या मिश्रात्प्राग्दिश्यवस्थिताः ॥१९॥ एतद्गोत्रोद्भवो ऽप्यासी
न्नागमूर्द्धविमर्द्दिनः १ आदिवंशो ऽब्रहो भावी श्रेष्ठो विश्वासिनां पिता ॥२०॥ द्युसेनार्च्चानि
मग्नेषु त्ववशिष्टेषु तत्कुले १ सत्येशं मेनिरे के ऽपि दत्तमोक्तृप्रतिश्रवं ॥२१॥ अब्रहभ्रातृजो ६६
यद्वल्लोटो भ्रष्टपुरे स्थितः १ घुमूरसुदुमादीनां रक्षितः पापदण्डतः ॥२२॥ यद्वद्राजा कनाने
ऽपि परमेश्वरयाजकः १ एकाकी धर्म्मराजार्थमल्कीशदकनामकः ॥२३॥ यिरूषलेमदेशे
यो ऽब्रहायाप्यरिसंजिते १ ददावाशिषमुत्कृष्टां यथा श्रेयान् कनीयसे ॥२४॥ यद्वदीशार्च्चे
को ऽप्युक्तो यित्रुर्मद्यानयाजकः १ दत्तवान्स्वां सुतां मिश्रनिःपलायितमोसये ॥२५॥ यद्देशे

स विभोः प्रापाज्ञां ज्वलत्स्तम्भमध्यतः । पुनर्यातुं स्ववर्गं चोद्धर्तुं मिश्रकबन्धनात् ॥२६॥
तादृशश्चापि तद्देशे ऽरब्ये ऽयोबो धनी शुभः । धार्म्मिको ऽकैन्दुताराच्चीं नाचरत्स्वगणा इव ॥
२७॥ यो महानागशक्यैर्वोग्राभिरापद्भिरावृतः । हतश्रीपरिवारो ऽपि देहदुःखैश्च पीडितः ॥
२८॥ अतिक्लिष्टो ऽपि नेशं स व्यस्मरत् किंतु मुक्तिदं । द्रक्ष्ये मृत्योः परे भूस्थेशं स्वाक्षे
णेत्युवाच ह ॥२९॥ विना तत्सन्निभानल्पांस्त्विष्मयेलोद्भवे ऽन्वये । गते कुपथमेसावो ६७
द्भवे चैदूम्यके तथा ॥३०॥ लोटादुद्भूतयोश्चापि मवाबाम्मोनसंज्ञयोः । कुलयोर्न्याप्तयोरेव
क्रूरदैवतसेवया ॥३१॥ तदाब्रहविभिन्ने ऽपि शेषे सेममहान्वये । ज्ञायते सत्प्रबन्धेभ्यः
स्थितिः सत्येश्वरार्च्चिनां ॥३२॥ स्थित ईशप्रवक्तापि सूरदेशे प्रकीर्त्तितः । बल्यामो विभु
वाक्श्रोता वञ्चितस्त्वृकथलिप्सया ॥३३॥ स्वदेशात् स समाहूतो दुर्नृपेण मवाबिनां । ऐस्र

येल्यान् भयात्सर्व्वान् शपितुं प्रान्तरे स्थितान् ॥३४॥ शपितुं यतितोऽप्येतान् विधर्म्मभृति
लिप्सुकः । नाशक्नोद्विभुवाग्रुद्धः साक्षात्त्वाशासत द्विषां ॥३५॥ नक्षत्रं चैव तद्वर्गात्सर्व्वजिद्दण्ड
लक्षणं । उदेयं दर्शनीयं चेत्यूचे व्याप्तः सदात्मना ॥३६॥ यदुदेयं परे तस्माद्बहुवर्ष
शतान्तरे । दाविदस्तनयः ख्रष्टो यदा प्रादुर्भवेद्भुवि ॥३७॥ तत्ख्यातोक्तिप्रवक्तारं
बल्यामं मन्दमप्यमुं । विनान्येऽप्यभवन्नीशवाक्यज्ञा इत्यसंशयं ॥३८॥ शिष्य उवाच ॥ ६८
ये त्वयोक्ता गुरो सर्व्वे ते सेमस्य कुलोत्थिताः । मनुप्रियसुतस्येशविशिष्टालयवासिनः ॥३९॥
मनुजानां द्वयोस्त्वेवमवशिष्टांशयोर्द्दशा । कासीद्यापतखामाख्योद्भवयोः क्षितिपूरिणोः ॥
४०॥ गुरुरुवाच ॥ हवोत्पन्नाखिलेभ्यस्तं नागहन्तृप्रतिश्रवं । एतैर्मा केवलं विद्धि मोऽस्युक्तं
रवलम्बितं ॥४१॥ सत्प्रकाशो हि योऽशेषनृभ्यो दत्तः परात्मना । स न निर्व्वापितः कैश्चित्स

र्वत्रापि तु रक्षितः ॥४२॥ अयोब इव शास्त्रस्यैतत्रयेल्यस्याविदोऽपि ये। न व्यमन्यन्त तज्ज्ञानं स्वहृदभ्यन्तरे स्थितं ॥४३॥ न सर्व्वभूतकर्त्तारं विश्वव्यापिनमीश्वरं। नृनिर्म्मितासु तेऽर्च्चासु सममन्यन्त संस्थितं ॥४४॥ न वा कार्य्ये प्रपंचे तेऽनन्तं कारणमादधुः। नापि कर्त्तॄन् बहूनार्च्चन् मायालहरिकल्पितान् ॥४५॥ भूरयोऽपि यदा धीरा ऐगुप्तयवनादिषु। ऐशावतारबाहुल्यं मूर्त्यर्च्चां चाप्युपादिशन् ॥४६॥ ब्राह्मणा भारतोर्व्यां च विश्वसृष्टिस्थिति क्षयान्। अवदंस्त्रिगुणोत्पन्नानीशसत्त्वावखण्डिनः ॥४७॥ ईशोत्पन्ननृजातेश्चैकस्या एव विभिन्नतां। चतुर्धा सृष्टितोऽप्यूचुः स्वीयजात्यभिमानिनः ॥४८॥ यदा चैतन्मतामित्राः सौगता मगधोत्थिताः। स्वस्वसंकल्पनात्प्राप्यमूचुर्विश्वपराक्रमं ॥४९॥ अर्हतान् गौतमादींश्च नॄन् निर्व्वाणं तथागतान्। केवलानूचुरर्च्यांस्ते परमेशावमानिनः ॥५०॥ यदा चैतद्विरोद्धारो

T

ब्रह्मविष्णुशिवार्च्चिनः । असुरादिवधार्थाष्टावतारख्यायिनः पुरा ॥५१॥ बुद्धावतार
मप्यूचुर्विष्णोर्नवममेव तं । नास्तिकत्वोपदेशाय नृधर्म्मोल्लंघनाय च ॥५२॥ एवमार्य्यस्य
पातुस्ते ऽघनाशागन्तुरेव च । मिथ्यावक्तृत्वमप्यूचुर्यदा भ्रान्तात्मका विभोः ॥५३॥ तदापि
ख्यातदेशे ऽस्मिन् केचिदल्पे ऽपि धार्म्मिकाः । इयन्मायाब्ध्यमग्नाः स्युरिति तर्को ऽस्ति
शिष्य मे ॥५४॥ ईशशब्दस्य ये पातुः सततं सत्यवादिनः । ऐशरूपद्वितीयस्य नृवंच ७०
यितृनाशिनः ॥५५॥ अवतारं जगत्येकं प्रत्यैक्षन्तोपदिष्टये । नराणां मुक्तिमार्गस्य
दयया परमात्मनः ॥५६॥ मेनिरे च परे भव्यं तदनुग्रहहेलिनां । नृणां पापकृतां दण्डं
विश्वपातृसमाहितं ॥५७॥ निहिताशाश्च तत्रैव न वा ब्राह्मणदर्शनैः । भ्रामिता विपरी
तार्थैर्मीमांसान्यायसांख्यकैः ॥५८॥ न वा शक्त्यर्च्चिनां तत्रापूनतन्त्रैर्मलीकृताः । न वार्वा

कादिशास्त्रैर्वा नास्तिक्यावटपातिताः ॥५९॥ शिष्य उवाच ॥ एतत्त्वद्वाक्यमस्मद्भूनिवासि
विषयं गुरो । सत्यं स्थापयतु ज्ञानदययोर्योनिरीश्वरः ॥६०॥ तद्वद्विश्वासयुक्तानां नृणां
भावस्य तु त्वया । किं वितर्कप्रमाणं मे दत्तं मिथ्यामतान्तरे ॥६१॥ गुरुरुवाच ॥ यद्वद्
भ्यन्तरे शिष्य सत्प्रभास्ति स एव तां । बहिःस्थामप्युपैत्युद्र्यामवतीर्णां महाप्रभां ॥६२॥
वरं तद्वत्प्रभायुक्ता देशेष्वन्येषु संस्थिताः । ज्ञाता भ्रमतमोव्याप्तेष्वपि भारतभूमिवत् ॥६३॥ ७१
पारसीके तदभ्यर्णे मजाख्या विप्रसन्निभाः । यदा स्वं ह्यादिशन् धर्म्मं जरातष्टुः किला
नुगाः ॥६४॥ मूर्त्तिहीनाग्निमित्रादिसेवां प्रत्ययमेव च । धर्म्माधर्म्मेशयोस्तुल्यज्ञानशक्त्योर
पूर्व्वयोः ॥६५॥ तदापीयत्तमोमध्ये बुधा आसन्मजेष्वपि । धर्म्मबीजैकलानादीश्वरविश्वास
रक्षिणः ॥६६॥ विभुनाप्युपदिष्टा ये ऽभीष्टं विश्वासिभिश्चिरात् । बल्यामप्रोक्तनक्षत्रोदय

मैक्षन्त दूरतः ॥६७॥ यं सर्वनरमुक्त्यर्थं समस्थापयदन्तरे । शकयोर्विक्रमादित्यशालिवाहन
योर्विभुः ॥६८॥ पण्डितानां मृतिस्तेषां राजोत्पत्तिस्थलं प्रति । यथा मत्कथिता शिष्य तत्स
द्विश्वासलक्षणा ॥६९॥ शिष्य उवाच ॥ सर्वदिग्भ्यः समेतानां दाविदुत्थध्वजं प्रति ।
आद्यास्ते पण्डिता आयन् पारसीकादिति श्रुतं ॥७०॥ अभ्युक्तं पूर्वसृष्टौ यत् किं नान्ये ऽमून्
विना तु तत् । नागघातवचः पूर्व्यं तदानुममिरे क्वचित् ॥७१॥ गुरुरुवाच ॥ पारसीकार ७२
बाद्येषु नूत्नराज्यप्रतीक्षणं । प्राचीसंस्थेषु यन्नूनं स्मृतं नानाप्रबन्धकैः ॥७२॥ एतत्पण्डित
दृष्टान्तनिर्णीतं किल शिष्य यत् । तत्तुल्यं विद्धि दूरायां प्रत्यग्दिश्यपि संस्थितं ॥७३॥ यतो
ऽस्मिन्नेव समये नूत्नसत्ययुगाधिपं । उद्भव्यं मेनिरे विज्ञा अज्ञाते तत्स्थलेऽपि तैः ॥७४॥ ईत
ल्योर्व्यां हि कूमाख्यपुरे गह्वरवासिनी । तं पुरोक्तवती भव्यमौगुस्तसमये ऽधिपं ॥७५॥ अथ

तद्राज्यसद्धर्म्मं सर्व्वदिग्व्यापिसन्धिकं । इषायनिभवाक्यैः सा शिबुल्लोवाच मन्नदा ॥७६॥ इदं
रौम्यादिभिः ख्यातमीतल्यक्षितिवासिभिः। आर्य्यभव्यवचो ऽज्ञातैस्त्रयेल्यैश्वरशास्त्रकैः ॥७७॥
तत्पूर्त्तिनिकटे काले लिखितं विस्तरात्तया । वोर्गिल्येनैव कविना मित्रेणोगुस्तकेशरः ॥७८॥
गीतं कूमाशिबुल्लाया न तु वक्ष्यामि विस्तरात् । न ह्येनतुल्यमखिलं प्रोक्तमप्यैशवादिनां ॥७९॥
अलं तेन त्विषायस्य वचसा पण्डितागतौ । पूर्त्तिचिह्नमवाप्तेन पश्चात्पूर्य्येण सर्व्वशः ॥८०॥ इति ७३
श्रीख्रीष्टसंगीतायां येषूत्पत्तिपर्व्वणि (मोसिरचितपंचशास्त्रस्य योनिनिःसृतिसंख्यास्कन्धेभ्यो ऽयोब
ग्रन्थाद् भारतपारसीकयावनरौम्यनानाग्रन्थेभ्यश्चोद्धृतो) नरमुक्तिप्रतिश्रवो नाम दशमो ऽध्यायः ॥

शिष्य उवाच ॥ यावच्छक्ति त्वयाचार्य्यापनीते संशये मम । विश्वास्यश्चितबालस्याधुना
शेषकथां वद ॥१॥ गुरुरुवाच ॥ सर्व्वं तद्विषये शास्त्रादिष्टं कृत्वा महापुरे । सपत्नीको

ऽथ योसेफो गलीलां गन्तुमैहत ॥२॥ किंतु प्रस्थानतः पूर्व्वं स्वपुरं प्रति धार्म्मिकः । सुप्त
ईश्वरदूतेनाभाषीदं सोऽद्भुतं वचः ॥३॥ दूत उवाच ॥ क्षिप्रमुत्तिष्ठ योसेफ हेरोदिर्दुर्नृपो
यतः । निहन्तुं शिशुमार्य्यं ते मृगयत्यतियत्नतः ॥४॥ तस्मात्समातृकं नीत्वा तं द्रुवैगुप्त
नीवृति । तत्र स्थेयं त्वया यावन्नादेक्ष्ये पुनरागतिं ॥५॥ गुरुरुवाच ॥ इत्यादिष्टः स उत्थाय
मरीयां शिशुमेव च । नीत्वा निशि महायत्नात्प्राचलन्मैश्रके पथि ॥६॥ हेरोदिर्हि जिघांसु ७४
स्तान् प्रतीक्ष्य विरतो बुधान् । यथा मत्कथितं व्यग्रो बभूव क्रामशः परे ॥७॥ तेषु बेथ्लहमातत्रा
नागतेष्वशृणोदपि । मन्दिरान्तरबालान्वीविषयं किंचिदस्फुटं ॥८॥ यतः सिम्योनहन्ना
घास्तच्छुंकुं क्रूरतान्वितं । सुज्ञायार्य्यशिशोः सेवां यत्नतोऽगोपयन्नृपात् ॥९॥ अतोऽनेक
दिनेष्वेव तद्वार्त्ता कर्म्मतः परे । हेरोदिश्रुतिमागच्छत्तदा चाप्यस्फुटा स्थिता ॥१०॥ कैश्चिन्न

ज्ञापितः खृष्टजन्म तान् पण्डितान् विना । अतः सोऽप्रतियातेषु तेषु व्यग्रोऽत्यचिन्तयत्॥
११॥ तैः परिव्राजकैर्धूर्तैर्वञ्चितो हन्त किं न्वहं । करिष्ये ते शिशुस्थानं नोपदिश्य हि
निर्गताः ॥१२॥ तदायुर्मात्रमादिश्य जन्मनक्षत्रनिश्चितं । मह्यं प्रागधुना हन्त मत्क्रोधात्ते
पलायिताः ॥१३॥ तान् ग्रहीतुं न शक्नोमि मया यस्तु विशेषतः । हन्तव्यो मन भूमध्ये
सोऽज्ञातोऽपि मरिष्यति ॥१४॥ इति संकल्प्य घोरां स आज्ञां प्रोवाच निर्द्दयः । द्विवर्षोन ७५
शिशून् सर्वान् हन्तुं बेथ्लहमान्तिके ॥१५॥ राखिलायाः शवस्थाने तस्मिन्सर्व्वक्षितावपि ।
दावित्पुरान्तिकायां तत्कर्म्म भीममथाभवत् ॥१६॥ प्रार्थिनीनां प्रसूतीनां घातुकांस्ते
ऽदयान् मृषा । अङ्केभ्योऽप्यनघाः पेतू रक्ताद्रैरसिभिर्हताः ॥१७॥ तथा बहुषु बालेषु यहू
दीयेषु केषुचित् । बिन्यमीनोद्भवेष्वेव स्वराजार्थं हतेष्वतः ॥१८॥ संपूर्णं बिन्यमीनोर्व्वी

वासिनो यज्वनो वचः । तक्षितिस्थान् वधतस्त्वेव नबुकद्रशरादिषु ॥१९॥ यिरिमीय उवाच ॥ गिरिचित्रभुवि श्रुतो रवः कद्रुरोदैः परिदेवनैर्युतः । रुदतीव सुतेषु राखिला हत सान्त्वा तदभावहेतुतः ॥२०॥ इदमाह तु ते महेश्वरो न विलापस्त्वयि नाश्रु वा वसेत् । तव कर्म्म फलं किलाप्नुयात् प्रतिनीतेषु सुतेष्वरिक्षितेः ॥२१॥ यत एव तवायजप्रियात्मकयोसेफ कुलोद्भवाः प्रजाः । अरिणापि पुरा वहिष्कृताः पुनरेष्यन्ति शुभां स्वनीवृतं ॥२२॥ तव पौत्र इह श्रुतो मया विभवे ॰फ्रैम इदं ब्रुवन् वचः । प्रथमं तव दण्डमाप्नवं गलयुग्मासहगौरिवो त्क्रमः ॥२३॥ अधुना तु सुशिक्षितस्त्वपां बहुधाप्नोमि पुराकृताघतः । प्रतिवर्त्तनतस्तवा प्यहं प्रतिवृत्तो भवितास्मि मत्पते ॥२४॥ अत आह विभुर्निजं सुतं प्रियमफ्रैममतिस्मरा म्यहं । अनुतप्तमतोवदण्डतस्त्विह नेतास्मि पुनर्दयान्वितः ॥२५॥ समये कियतोत्त्वयेलि रे ७६

कुसुते हीनसदालया भ्रमेः । भुवि पुंपरिवेष्टिनीं स्त्रियं नवसर्गेण किलासृजद्विभुः ॥२६॥
नगरेषु यहूदिषु ह्यतः परिमुक्ता अतिकष्टबन्धनात् । सुकृतालय पुण्यपर्व्वतेति वदिष्यन्ति
कृताशिषो मुदा ॥२७॥ दशवंशसुतैरहं सहापि च कनीस्मि यहूदिभिः सह । नवसंविदमग्रया
न तूपमितां मिश्रविनिःसृतौ यथा ॥२८॥ विनिराकृतयामुया हि मद्गुणितैस्तै रसमा भवेदियं ।
स्वविधीन् न तदोपलेष्वहं नरहृत्स्वेव तु लेखितास्मि हि ॥२९॥ भवितास्मि कुले ७७
ऽहमीश्वरः सकले मद्विदि वर्य्यनीचके । तदघक्षम एव भाव्यहं सततं विस्मृततत्कुकर्म्मकः ॥
३०॥ गुरुरुवाच ॥ तथा प्राग्भव्यवाचेष दाविद्राज्ये हते ऽरिभिः । स्वकुलस्योक्तवान् मुक्तिं
भव्यां बाबिल्यबन्धनात् ॥३१॥ प्राग्बद्धानामपि प्रोचे मुक्तिं दशकुलोद्भवां । सान्त्वय
न्निव योसेफबिन्यमीनप्रसूं गिरा ॥३२॥ तयोः कनीयसः सा हि राखिला सूतिकष्टतः ।

यथामदुदितं शिष्य पुरा बेथ्लुहमे मृता ॥३३॥ अन्यवंशाद्यहूद्यास्तु बिन्यमीनीयसंयुताम् ।
आश्रितेशालयाद्भावि तत्संत्यक्तुघमोचनं ॥३४॥ तन्नवं चिरतो ऽप्युक्तं कुमार्युत्पाद्यपूरुषात् ।
उद्धव्यं सततं सान्त्वं सर्व्वदुःखेषु धर्म्मिणां ॥३५॥ तदङ्कोमुक्तिकर्त्रर्थं बहवश्चैव तत्परे ।
सर्व्वावस्था अपि मृतिं ययूरक्तावृतां मुदा ॥३६॥ आद्यास्त्वज्ञा इमे बाला घात्यस्याखिल
मुक्तये । स्थिता येष्वः पदे तत्र राज्ञेशद्वेषिणा हताः ॥३७॥ किंतु बालवधात्सर्व्वां राखिला ७८
न्तस्थलान्तिकां । व्यापिनः परितो भूमिं शिशुर्य्येषूः पलायितः ॥३८॥ मार्गमाणे हि सर्व्वत्र
तद्भयव्याप्तनीवृति । सपुत्रे राज्ञि यत्रासीत् खृष्टजन्मप्रकीर्त्तनं ॥३९॥ बहून् स्वनिकट
स्थांश्च फरीष्यादीन् यहूदिनः । घ्नंति शङ्कुरचित्ते तत्प्रतीक्षामात्रहेतुतः ॥४०॥ संररक्षात्मजं
त्वष्टा नारीमात्रोद्भवं भुवि । न तदोर्द्धं नु दुर्नागदशनाघात्यपार्ष्णिकं ॥४१॥ पालको ह्यस्य

तन्मातुः कुमार्य्याः पतिरेव च । दूतादेशेन योसेफो ऽनीतबेथ्लहमो ऽभवत् ॥४२॥ अत्याशु
चलनाच्चाथ यहूद्यैगुप्तमध्यमं । प्रान्तरं देशमागत्य कष्टां तत्रावलत्सृतिं ॥४३॥ तद्ग्राम
दिश्यवातिष्ठत्स मरुप्रान्तरो महान् । चत्वारिंशत्समा यत्राभ्रमन् प्रत्नैस्त्रयेलकाः ॥४४॥ किय
त्यये तथैवासीद्ग्रामदिश्यब्धिरूर्म्मिमान् । यस्मिंस्ते शुष्कवत्नेरूर्म्मग्नास्त्वैगुप्तका द्विषः ॥४५॥
स तु तस्योत्तरे गत्वा प्रत्यग्दिग्गतवर्त्मनि । शेषे बालेन पत्न्या चान्वितो मिश्रमुप ७९
स्थितः ॥४६॥ यत्रार्च्चिता मठेषूच्चेष्वनन्ता देवमूर्त्तयः । वृषाद्या मुण्डितैर्विप्रैः प्रत्नशास्त्रोप
देशकैः ॥४७॥ यत्रैव सर्व्वभूप्लावी नक्रभीमो महानदः । नीलो नामादृतो मैश्रैः शुभतीर्थ
समन्वितः ॥४८॥ नोचके तत्र तद्ग्रामे ऽलेक्षन्द्रीयपुरान्तिके । उदासीनस्तदोवास येषू
नन्मातृपालकः ॥४९॥ यथाद्यो ऽपि स योसेफ इस्रयेलसुतः प्रियः । बन्धुजीवनरक्षार्थे

मिश्रमाशवशाद्गतः ॥५०॥ ततो वर्गी विनिःसृत्य गतदीर्घविपच्चयाः । तद्वंशायेन येऽत्वातो देशं नीताः प्रतिश्रुतं ॥५१॥ तत्रास्थीन्यपि ते निन्युर्योसेफस्य यथैव सः । निःसृतिश्रद्धया मिश्रे म्रियमाणः पुरादिशत् ॥५२॥ तथायमपि योसेफः सूत्रधारोऽपि भाग्यवान् । संरक्षार्थेऽखिलनरमोक्तुर्मिश्रं गतस्तदा ॥५३॥ ततो बालोऽपि निःसृत्य स येषूरीश्वरात्मजः । दुःखौघसहनेनातः स्वर्गमेवानयेत्स्वकान् ॥५४॥ एतत्सर्वं सदात्मा तु तद्द्यो दृष्टवांश्चिरात् । सार्द्धसप्तशताब्दात्प्राक् प्रवक्तारमवाचयत् ॥५५॥ होषेय उवाच ॥ यदेस्रयेलः शिशुरेव संस्थितस्तदा मयाप्रीयत विश्वकारिणा । अतोऽप्युदासीनमहं स्थितं प्रियं निजात्मजं मिश्रत आह्वयं वहिः ॥५६॥ गुरुरुवाच ॥ एवं सोऽफ्रेमवंश्यानां भिन्नतच्छासने स्थिते । ईशत्यागं विनिन्दंस्तान् प्राक्प्रेमास्मारयद्विभोः ॥५७॥ यन्मिश्रान्निःसृतावीशो दृष्टान्तं श्रेयसोऽकरोत् ।

प्रेम्नो भव्यस्य पुत्रे स्वे यिरिमीयोदितं यथा ॥५८॥ पूर्व्वस्याः संविदो ऽमुष्या भव्यां हि श्रेयसीं जगौ । सो ऽधमोक्तीं तथा चास्याः स्म हेतुमपि शंसति ॥५९॥ यिरिमीय उवाच ॥ इदमाह विभुः पराण्यहान्यहमानाय्यपनीतदुर्नृपः । शुभमप्यवरोहमुद्धरन् मुशिफाया अभिषिक्त दाविदः ॥६०॥ अधिपः कुशलान्वितो ऽप्यथो भुवि सन्न्यायमसौ करिष्यति । दशवंशसुता द्विवंशका अपि चाप्स्यन्ति ततो विमोचनं ॥६१॥ अत एव यहूदिकाद्यया प्रजया सो ऽधिप ८१
ऐस्रयेल्यया । अतिपालितया भवेत्तदाभिहितो ऽस्मत्परिशुद्धिकृद्विभुः ॥६२॥ य इहापनिनाय मिश्रतो विभुरस्मान् वरदः स जीवतु । इति तेषु दिनेषु न क्वचिद्वचनीयं शपकर्तृभिर्मुहुः ॥६३॥ दलितांस्तु य उत्तरादिदिग्गतो नो ऽनयदैस्रयेलकान् । पुनरात्मभुवीति तैस्तदा कुशलैर्वाच्यमितः शपोक्तिषु ॥६४॥ इति श्रीखृष्टसंगीतायां येषूत्पत्तिपर्व्वणि (होषेयभव्यवा

क्यानामेकादशसर्गाद् यिरिमीयभव्यवाक्यानां त्रयोविंशतितमैकत्रिंशत्तमसर्गाभ्यां मत्थायलूक
योर्द्वितीयसर्गात्तदादिभ्यश्चोद्धृतो) ऽनघशिशुवधो नामैकादशोऽध्यायः ॥

शिष्य उवाच ॥ दाविदीययिफोत्थेयोऽवरोहः शुद्धिमानिति । मया संश्रुतमुक्तिभ्य
इषाययिरिमीययोः ॥१॥ स महैश्वर्य्ययुक्तस्तु येषूर्भावीति लक्षणैः । ऐश्वर्यैरपि संसिद्धं तद्वर्गे
चान्यजेषु च ॥२॥ रहस्यमपि तन्मन्ये प्रकाश्यं क्रमशो गुरो । प्रच्छनीयं त्विदानीं स कथं ८२
मिश्रात्पुनर्गतः ॥३॥ गुरुरुवाच ॥ न दीर्घं तत्परे शिष्य सोऽजीवद्वालहिंसकः । ईशारि
रभिषिक्तस्य तत्सूनोश्च जिघांसुकः ॥४॥ महाहेरोदिसंज्ञः स पुरा निहतवांस्तथा । स्वपत्नी
मात्मजौ चापि शङ्कक्रूरत्वकृष्टहृत् ॥५॥ शेषे तु घोररोगेण सर्वाङ्गव्यापिना भृशं । दुःश्वा
सः स्फोतपादोऽभूद्दुर्गन्धस्तापवांश्च सः ॥६॥ पीडौघान्मृत्युकामोऽपि क्रूरहृत् संस्थितो

ध्रुवं । स्वान्तकाले ऽजिघांसत्स यिरोखूपुरसन्तमान् ॥ ७ ॥ पुत्रमप्यन्तिपत्राख्यं खृष्टेना
शेच्छुमात्मवत् । हन्तुमाज्ञाय तद्दानात्परे प्रेतो ऽह्नि पंचमे ॥ ८ ॥ अथ तद्दानपत्रेणानुमत्या
चापि कैशरः । तद्राज्यश्रेष्ठमापांशमर्खिलौर्नाम तत्सुतः ॥ ९ ॥ गलीलां त्वन्तिपाः प्राप
त्रखोणीं तत्परः सुतः । फिलिप्पः पादभुक्संज्ञो न पितेव नृपौ तु तौ ॥ १० ॥ नार्खलाव
मपि प्रोच औगुस्तो भूमिपं तदा । स्वपितुर्दानपत्रेण यहूद्यैश्च तथा मतं ॥ ११ ॥ भूमिभाग ८३
प्रवृत्त्या तु विस्मृते खृष्टकर्म्मणि । तद्देशदूत हेगुप्ते स्वप्ने योसेफमब्रवीत् ॥ १२ ॥ दूत उवाच ॥
बालं समानृकं नीत्वा स्वदेशे त्वं पुनर्व्रज । हेस्रयेल्ये ऽधुना यस्मात्प्रमीतास्तज्जिघांसवः ॥ १३ ॥
गुरुरुवाच ॥ स्वप्नवाण्या तथादिष्टो मरीयां बालमेव च । मिश्रात्प्रत्यानयद्दृष्टो येन दुःख्य
विशत्पथा ॥ १४ ॥ पितॄणां च समाप्याशु द्विविंशत्यब्दपद्धतिं । ईशाहूतः सुतः प्रेष्ठो

मिश्रात्स्वं देशमाययौ ॥१५॥ तन्नैर्ऋतदिशा विष्टाविनां तत्पितरौ तदा । स्थितं यिरू
षलेमे ऽमुमर्खिलावं पितुः पदे ॥१६॥ यहूदिपं नृपं चैव समार्य्येदूमवासिनां । पितृतुल्य
तमं ज्ञात्वा हेरोदितनयेषु तं ॥१७॥ अतस्तद्दुर्म्मनोभीत्याक्रान्तौ ख्रृष्टस्य पालकौ । न तन्म
हापुरं यातौ देशे ऽप्यस्मिंश्च न स्थितौ ॥१८॥ तीर्त्वा त्वाशु यहूद्यां तौ समार्य्यां चापि नीवृतं ।
उत्तरं देशमायातां तत्सोदर्य्यान्तिपांशकं ॥१९॥ गलीलायाञ्च तद्भूमेस्तस्यां तौ पुर्यव ८४
स्थितौ । यतः प्राक् केशराज्ञातो दक्षिणाशां विनिर्गतौ ॥२०॥ तथा क्षुद्र ऽपि नगरे नशरे
दभिधे त्वितः । अवरोहेति यन्नामोच्यते संस्कृतभाषया ॥२१॥ गुरुत्वावध्यतिष्ठत्स
तथोचुर्भव्यवाचिनः । इषायायिरिमीयौ यं जकरीयो ऽपि चाद्दवः ॥२२॥ शिष्य
उवाच ॥ किमतिष्टदियद्दीर्घमागुरुत्वमपि प्रभोः । यिरूषलेममध्ये तद्धेरोदिसुतशासनं ॥

२३॥ गुरुरुवाच ॥ नेयत्कालमतिष्ठत्सा पूर्णांस्तु नववत्सरान् । महाहेरोदिमरणात्परे
शास्तिर्दुरात्मिका ॥२४॥ यन्नूनं वैक्रमे विद्धि त्रिपंचाशत्तमे शके । सार्द्धसप्तशताब्दे तु महारो
माविनिर्म्मिते: ॥२५॥ एतन्नृतीयवर्षे तु वैक्रमो यः शिवेषुकः । यो ऽप्यष्टसप्ततितमः प्राक्तनः
शालिवाहनात् ॥२६॥ तस्मिन् समार्पयन्नेव शकं खृष्टानुचारिणः । पूर्णवत्यपि तत्काले
चतुरब्दवयः प्रभौ ॥२७॥ खृष्टशाके ऽष्टमे ऽतो ऽपि द्वादशाब्दे तदायुषः । दशमे ऽपि च ८५
हेरोदेर्मृत्योः खृष्टाततायिनः ॥२८॥ तदैव दुष्टराज्यं तत् परमेशो व्यनाशयत् । साम्राज्यं
चान्यजातीनां स्वपुरे ऽस्थापयद्ध्रुवं ॥२९॥ दूरीकृते ऽर्खिलाण्युग्रे ऽथ येष्वः पितरौ शुभौ ।
आश्रितेशगृहौ नूनं प्रत्यब्दं त्राणपर्व्वणि ॥३०॥ तमप्यनयतां बालं प्रत्यब्दं स्वगृहात्तदा ।
यिरूषलेममत्रासौ रोम्यगोपेन शासितं ॥३१॥ शिष्य उवाच ॥ तन्नवं शासनं तत्र स्वपुत्रे

बालके स्थिते । हतहैरोद्यशास्तिर्नु कथमस्थापयद्विभुः ॥३२॥ गुरुरुवाच ॥ ईशपुत्राच्युतै
श्वर्य्यस्याविष्कार्य्यस्य तत्परे । विघ्नो नाभूत्तदा शिष्य स रौम्याणां पराक्रमः ॥३३॥ येनापि
खृष्टशत्रूणां शासनं दुर्यहूदिनां । ईशो व्यनाशयत्तत्र यथा पृष्टो वदामि ते ॥३४॥ क्रूरता
मखिलावस्ते ससमार्य्या यहूदिनः । अशक्ता अधिकं सोढुं नवाब्दान् सहितामपि ॥३५॥
निवेद्य कैशरे रौम्यैर्भूमिपैः पालिषीमहि । धृतस्वधर्म्मशास्त्रा नु वयमित्यर्थयन्नमुं ॥३६॥ ८६
अथौगुस्तोऽखिलावं तद्देशतः प्रैरयत् क्रुधा । व्येन्नापुरमतिप्रत्यग्गलतीयभुवि स्थितं ॥
३७॥ क्विरीणं नाम रौम्यं च सुर्य्याध्यक्षं समार्पयत् । सर्व्वपर्य्यन्तदेशस्यैकधा संस्थापनाय
हि ॥३८॥ नियुक्तं तेन चाप्यन्यं कोपोन्याख्यं समैरयत् । गोपं यहूदिकादीनां तदिच्छा
पूरको हि सः ॥३९॥ क्विरीणस्त्वागतो देशेऽसौ गलीलायहूदिके । द्वादशाब्दे पुरादिष्टं

यथोक्तं करमग्रहीत् ॥४०॥ यो हेरोद्यखिलावोस्तु काले लिप्यापि निश्चितः । नादीयंत
तनादातुं समारभत यत्नतः ॥४१॥ तेन तु व्यरुणत्तत्र कश्चिद्धर्म्मोन्मदो नरः । गलीलीयो
यहूदाख्यो वृतो बह्वनुचारिभिः ॥४२॥ नान्यदेवार्च्चिने देयो विभुनामाश्रितैः करः । इत्ये
वादिश्य सोऽज्ञांस्तान्महाकलहमानयत् ॥४३॥ वरमुन्मदमात्रैः सोऽन्वितो योद्धा गलीलकः ।
अचिरक्षुब्धितः पश्चात् क्विरीणेन पराजितः ॥४४॥ सर्व्वे दत्तकरास्ते च कोपोऽन्यस्यैव ८७
शासनं । न प्रेम्ना विपदां भीत्या त्वमन्यन्ताविरोधिनः ॥४५॥ करं येऽमुं तु रौम्यार्थं स
मगृह्णन् यहूदिनः । ते शेषैरधमा ज्ञाताः स्वधर्म्मत्याजका इव ॥४६॥ प्रत्यैच्छन् गर्व्विणो
ह्येते दाविदुद्भव्यनायकं । योऽभिषिक्तो बलं रौम्यं भीमरूपं विनाशयेत् ॥४७॥ ईदृशं ते
ह्यबुध्यन्त सर्व्वान्खृष्टप्रवाचकान् । यदाद्योऽपोस्त्रयेलस्तां यहूदायाशिषं ददौ ॥४८॥ याकोब

उवाच ॥ नाम्ना प्रशंस्य इतरैस्तनयैर्यहूद त्वं मेऽर्च्चितोऽप्यरिगलोपरिदेयहस्तः । त्वं सिंह
शाव इव वै मृगयोत्थितोऽसि तं त्वानताङ्गमपि जागरयेद्धरिं कः ॥४९॥ दण्डोऽग्रिमो
ह्यपसृतो न भवेद्यहूदाङ्गोत्रान्नवास्य विरमेदपि चाक्षदर्शी । यावन्न तत्सदधिकार उपस्थितः
स्यात् तं प्रत्यतोऽपि च समानयनं कुलानां ॥५०॥ गुरुरुवाच ॥ इति खृष्टात्सहस्राब्दे पूर्व्वे
सर्व्वैस्रयेलिनां । पिता द्वादशपुत्राशीर्वादेऽयां प्रोच आशिषं ॥५१॥ दाविदारिजिता ८८
राज्ये प्रारब्धे ह्यैस्रयेलके । धन्ये यहूदिना प्राप्नोत्पूरणारम्भणं तु सा ॥५२॥ तत्परे
ऽपि च तद्राज्यं हतेऽप्यफ्रैमकेऽरिभिः । गतेषु तज्जनेष्वेव स्वप्रशंस्यभुवि स्थितं ॥५३॥
सर्व्वेषां चैस्रयेल्यानां ये ये बाबिल्यबन्धनात् । पुनर्दधुः क्षितिं तेषां ख्याताः श्रेष्ठा
यहूदिकाः ॥५४॥ न वा यिरूषलेमेऽस्य वंशस्यादिपुरे तथा । विभुमन्दिरसंस्थाने विर

रामाक्षदर्शकः ॥५५॥ दाविद्दण्डे तु संगुप्ते ऽप्युपस्थेयं तदा बुधाः । एतत्सदधिकारं
तं प्रत्यैच्छन् पितृवाक्यतः ॥५६॥ यं खृष्टं ते यहूदीयाग्र्यसिंहमिति मेनिरे । संनेतारं
कुलानां चारिगलाक्रान्तहस्तकं ॥५७॥ इदानीं गर्व्विणश्चातः फरीष्याद्या यहूदिनः । रौम्या
णां मुद्गरं भव्यं तं प्रत्यैक्षन्त रिक्थदं ॥५८॥ न त्वबुध्यन्त संमूढा इषायाध्यायिनो ऽपि
ते । कुलानां तां समानीतिं यहूदीत्थध्वजं प्रति ॥५९॥ स ह्युदारो ऽन्यराष्ट्राणामपि तद्ध्वज ८९
मार्गिणां । नारिवन्नाशकः किंतु तेजोयुक्तविरामदः ॥६०॥ तज्जयं चापि दुष्टानां
भग्नदण्डं युगोच्छिदं । नैति योधा इवान्ये स तुमूलासृग्वृताङ्ककः ॥६१॥ सन्धिनाथा
भिधः सो ऽपि तमोघ्नो वर्गनायकः । समारेभे प्रवाचुक्तां गलीलातः क्रियामिमां ॥६२॥
इति श्रीखृष्टसंगीतायां येषूत्पत्तिपर्व्वणि (मोसिरचितपंचशास्त्रप्रथमस्कन्धस्योनपंचाशत्तमसर्गाद

इषायर्यिरिमीयजकरीयभव्यवाक्येभ्यो मत्थायलूकरचितमङ्गलसमाचारयोर्द्वितीयसर्गात् फ्लाव्ययोसेफरचितयहूदिपुरातनप्रबन्धात्तद्रचितयहूदयुद्धोपाख्यानाच्चोद्धृतो) राज्यविकारो नाम द्वादशोऽध्यायः ॥

गुरुरुवाच ॥ येषूत्पत्त्यन्विता ये ये वृत्तान्ता अतिविस्मिताः । आसन्नीशार्पिताः सद्भिः ख्यातास्तदनुचारिभिः ॥१॥ समाप्तान् द्वादशाध्यायेष्वेषु मे विद्धि शिष्य तान् । तथा पञ्चा द्व्याब्देऽपि यत्कृतं तत्र कैशरा ॥२॥ किंत्वितश्चिरमप्यासीन्मन्नद्रस्याद्भुतस्य यत् । शक्तेशस्य गुरुत्वं सद्विरामानन्ददायकं ॥३॥ अत्याश्चर्य्यं चरित्रं च रोगपापविनाशकं । मृत्युयुक्तं च माहात्म्यं मृत्युनाथशिरोहणं ॥४॥ समस्तभव्यवाक्यानां पूरकं ख्रीष्टकर्म्म तत् । विस्तरात्ते प्रवक्ष्येऽहमन्याख्याने न सांप्रतं ॥५॥ इदानीं त्वपि तेऽव्यक्तं पुरोक्तेषु बभूव यत् । प्रथमं

चेत्त्वया पृष्टमुत्तरं तन्ममाप्स्यति ॥६॥ शिष्य उवाच ॥ बहून्याचार्य्य मे ऽज्ञत्वात्प्रष्टव्यानि प्र
सादक । ईशमन्दिरसंस्थानात्त्वयो मय्यस्ति संशयः ॥७॥ यदि सर्वैस्त्रयेलार्थं तदेकं मन्दिरं
स्थितं । यहूदीनानां महाङ्को ऽभूदफ्रैमादिकुलोद्भवां ॥८॥ कथं दूरस्थिता धर्म्म्या आवरन्नि
स्त्रयेलजाः । तन्मतालम्बिनश्चैवं योग्यमीश्वरपूजनं ॥९॥ किमेकधैव ते ऽब्दे ऽब्दे ऽभ्येतुं शी
योनपर्व्वते । योग्या यथा गलीलातस्तौ येषूपितरौ गतौ ॥१०॥ गुरुरुवाच ॥ महापर्व्वसु ९१
संतुष्टा अतिदूरालया अपि । तथैवाब्रहजा याता धर्म्म्यं तत्पर्व्वतं सदा ॥११॥ मोसिनिर्म्मित
दूष्ये प्राक् प्रान्तरेऽङ्गे यथा ह्यभूत् । तथा मन्दिर एवार्च्चं संविद्यात्रीश्वरासनं ॥१२॥ ततो
यावन्न शक्रेशो नररूपे प्रतिष्ठितः । पूर्णयज्ञो ऽर्पयेदर्च्चां श्रेष्ठां सर्वेष्ट उज्ज्वलः ॥१३॥ तावत्
केवलमेतस्मिन् विभोर्यज्ञादिपूजनं । प्रकर्त्तव्यं यथामुष्मिन् मन्दिरे ऽग्रे सलोमके ॥१४॥

तदापि तु मठा नानास्थानेषु भुवि संस्थिताः । अध्यक्षैर्ज्येष्ठवर्गैश्च परिचारैश्च संयुताः ॥
१५॥ येष्वधीतं महामोसेः शास्त्रं प्रतिशनैश्चरे । वाचश्चेशप्रवक्तॄणां शेषे ग्रन्थाश्च पुण्यकाः ॥
१६॥ न तु यज्ञादिका सेवा तत्र लेव्यैरपि क्वचित् । अहरोणोद्भवैश्चापि कर्त्तव्या मोसि
शास्त्रतः ॥१७॥ शिष्य उवाच ॥ मोसेस्तच्छास्त्रमाचार्य्य वाचश्चेशप्रवाचिनां । शेषांश्च
कृपया ग्रन्थाननुसाराद्विवर्णय ॥१८॥ गुरुरुवाच ॥ पूर्व्वसंस्थः समस्तानां ग्रन्थानां योनि ९२
रेव च । ईशबुद्धेः स पंचांशः शास्त्राख्यो मोसिना कृतः ॥१९॥ योन्याख्यादिमतत्स्कन्धे
सर्व्वभूतगणस्य हि । सृष्टिरुक्तादमादीनां चादिमानां कथा नृणां ॥२०॥ तत्पापपतनं भद्राव
घोषस्त्वीश्वरप्रियः । विप्लवाच्च परे नोहोत्पन्नमानववर्णनं ॥२१॥ ततो ऽब्रहेमहकयो
र्याकोबस्य च कीर्त्तनं । तन्मिश्रगतिपर्य्यन्तं सर्व्ववंशाशिषोऽपि च ॥२२॥ निःसृत्याख्ये

द्वितीये तु स्कन्धे कथितमद्भुतं । निर्द्दयान्मिश्रभूमीशात् सङ्गस्य विमोचनं ॥२३॥ मुक्ता
नामपवादश्च प्रान्तरेऽपि च पालनं । ईशदत्तं महाशास्त्रं सीनायाद्रौ च मोसये ॥२४॥ लेविकाख्ये
तृतीये तु स्कन्ध आदिश्यते स्फुटं । किं कार्य्यं यज्वभिः सर्व्वैः पुरोधोभिश्च लेविकैः ॥२५॥
किं पूतं किमपूतं च भोजनाद्येषु कर्म्मसु । बलिहोमाध्वरादीनि चाचर्य्याणीस्रयेलजैः ॥२६॥
संख्यानाम्नि चतुर्थे तु स्कन्धे सेनैस्रयेलिका । मरुस्था वर्ण्यते सर्व्वा स्वस्ववंशप्रधानिका ॥ ९३
२७॥ ईशदूष्यप्रतिष्ठार्थेष्टोर्य्यन्तिक उपस्थितिः । विरोधा विविधाश्चैव दण्डाश्चाप्यप्रती
तिनां ॥२८॥ जयाश्च वैरिणां राज्ञामहरोणे मृते मरौ । लेवीपौत्रेऽथ बल्यामस्याशी
रीश्वरचोदिता ॥२९॥ चरमे त्वनुवाक्याख्ये स्कन्धे सोऽग्रः प्रवाचिनां । मोसिरीशकृतं
सर्व्वं वर्गार्थे वक्त्यनुक्रमात् ॥३०॥ श्रेष्ठाज्ञाश्च ततोऽप्याह स्मार्य्यगीतसमन्विताः । आशिषं

तद्विनीतेभ्यो विरोधिभ्यस्तथा शपं ॥३१॥ परं चात्मनिभं भव्यं परे प्रोचेशवादिनं ।
कनानं शिखराद्दृष्ट्वा मृतो ऽदृश्यशवो नरैः ॥३२॥ हेस्त्रयेल्यमिदं शास्त्रं तनस्त्वीशप्रवाचिनां ।
प्रबन्धाः प्रथमस्त्वेषां येषूचरितसंज्ञकः ॥३३॥ स प्रतिश्रुतदेशस्य पयःक्षौद्रप्लुतस्य हि । पुर
दुर्गवृतस्याह जयं नूनभुवा कृतं ॥३४॥ द्वितीये तु प्रबन्धे तन्मृत्योः पश्चाद्बभूव यत् । धर्म्म
नायकसंज्ञानां वर्गशासनमुच्यते ॥३५॥ तैश्च संसोनपर्य्यन्तैर्नानारिविजयः कृतः । तदा नाना ९४
पराधाश्च कलहाश्चैस्त्रयेलिनां ॥३६॥ ततः क्षुद्रे प्रबन्धे तु रूथाचरितमुच्यते । यदुत्पन्ना
शुभा पश्चादोसेबैथ्लुहमे शिफा ॥३७॥ ततो ग्रन्थास्तु चत्वारो ऽनेकोक्ता राजकाः समं । तेषां
त्वाद्यौ यहूद्येषु स्थितौ संवेलनामकौ ॥३८॥ जन्म तत्प्रथमे ह्युक्तं संवेलस्येशवादिनः । तत्कृत
श्चाभिषेको ऽपि क्रमतः सौलदाविदोः ॥३९॥ द्वितीये मृतयोर्भूतं सर्व्वं संवेलसौलयोः । दावि

दो राज्ञ ऐश्वर्य्यं नानाकर्म्म च कीर्त्तितं ॥४०॥ तृतीये तु यहूद्योक्ते राजग्रन्थादिमे किल ।
दाविन्मृत्युः सलोम्नश्च राज्यमुक्तं सगौरवं ॥४१॥ तत्सूनोः समये चापि राज्ययोर्भेदनात्परे ।
आमृत्यु राडहाबस्य राड्‌यहोषफटस्य च ॥४२॥ चतुर्थे तु यहूद्योक्ते द्वितीये चरमे त्वपि ।
ग्रन्थानां राट्‌चरित्राणां कथितास्तत्परे क्रियाः ॥४३॥ लोपो ‘फ्रैमोयराज्यस्य तत्परे शेष
एव च । दाविद्राज्यलयो वर्गबन्धनं चापि बाबिले ॥४४॥ ग्रन्थचतुष्टयं त्वेतत् सयेषूधर्म्मने ९५
तृकं । षट् प्रबन्धा यहूद्योक्ताः प्राक्तनेशप्रवक्तृकाः ॥४५॥ पुण्यग्रन्थास्तु तैरुक्ता रूथाचरित
वत् स्थिताः । प्रबन्धा इतरे पंच वर्णनीया मयाधुना ॥४६॥ नूत्नमन्दिरकाले ते रचिता
नादिमा इव । यद्यौ कालवाक्याख्यौ कृतौ तत्सत्पुरोहितैः ॥४७॥ तयोस्तु प्रथमे वंशा
आदमावधयो नृणां । दावित्पर्य्यन्तकाः ख्यातास्ततस्तद्राज्यवर्णनं ॥४८॥ द्वितीये तु

तदुत्पन्ना नृपाः प्रोक्ता यहूदिकाः । आराज्यान्तं न सामार्य्यास्त्वेवं राजचरित्रवत् ॥४९॥
अथोक्ता यज्वनोऽत्रस्य ग्रन्थे बाबिलनिःसृतिः । जरूबाबिलिका स्वा च प्रतिष्ठेशोत्तरौक
सः ॥५०॥ ततोऽप्यत्रापरग्रन्थे नहमीयो ब्रवीत्यपि । स्वपुरं प्रति निष्क्रान्तिं पारसीक
नृपाज्ञया ॥५१॥ चरमे त्वेस्तराग्रन्थे राजपत्न्या तया कृतं । जिघांसोर्हामनात्स्वीयवर्ग
मोचनमुच्यते ॥५२॥ इत्थं सदितिहासोऽस्ति काव्यरूपास्तु तत्परे । पंच ग्रन्थाः स्थिता अन्ये ९६
पुण्या विश्वासिभिः स्मृताः ॥५३॥ तेषां प्रत्नतमो ग्रन्थो मोसिनाख्यवासिना । रचितः
सद्योबस्याह दुःखसहनं शुभं ॥५४॥ द्वितीयस्त्वैश्वरीयाणां गीतानां संचयो महान् । सार्द्धै
कशतसंख्यानां कृतानां दाविदादिभिः ॥५५॥ यासु भात्यैश्वरी भक्तिर्विश्वासप्रेमरूपिका ।
सुखदुःखान्तरेऽप्युक्तानन्दविक्रमशान्तिदा ॥५६॥ पूर्वेषां चेस्रयेलार्थैं स्तुतिरीश्वरकर्म्मणां ।

कार्य्याणां चापि खृष्टेन दाविज्जेन प्रतिश्रवः ॥५७॥ तृतीयस्तु सलोम्नो ऽस्ति मन्त्रणावाक्य
संचयः । संसारार्थप्रवृत्तेभ्यो हितधर्म्मोपदेशदः ॥५८॥ चतुर्थस्त्वस्य राज्ञो ऽपि वृद्धस्या
खिलदर्शिनः । ग्रन्थो मण्डलगुर्वाख्यः संसारासत्त्वशिक्षकः ॥५९॥ पंचमः श्रेष्ठगीताख्यः
शुभशृङ्गारवर्णकः । तद्ग्रन्थः खृष्टमण्डल्योः सत्प्रेमप्रतिविम्बकः ॥६०॥ इति ते पुण्यका
ग्रन्था यत्परे भव्यवाचकाः । चत्वारस्त्वग्रिमास्तेषां क्षुद्राश्च द्वादश स्मृताः ॥६१॥ तत्स ९७
र्वेषु यहूद्योक्तेषूत्तरेशप्रवक्तृषु । अग्र्यः संस्थापितः सर्वैरिषायो ऽमोशजः कविः ॥६२॥
स राजोज्जीयमृत्यब्दे दर्शितेशप्रभूज्ज्वलः । दूतेनाग्न्युष्णवेद्युत्थाङ्गारस्पृष्टौष्ठसंस्कृतः ॥६३॥
तत्कालाच्चामनस्स्येव विविधं विस्तराज्जगौ । भव्यखृष्टस्य माहात्म्यं नानाभूमन्त्रणान्वितं ॥६४॥
यिरिमीयो द्वितीयस्तु सद्योसीयमृतेः परे । भूयिष्ठामतवाक्यो ऽपि सोढनित्याधिरेव च ॥

६५॥ सुन्दरोक्तोस्तदापि स्वाः प्रोचेऽरिवृतसत्पुरे । भव्यापद्वाचका नित्यसान्त्वनादेशसं
युताः ॥६६॥ किंतु तद्भव्यवाक्यानां महाग्रन्थात्परेऽपरः।क्षुद्रो विलापसंज्ञोऽस्ति सत्पुरीनाश
हेतुतः ॥६७॥ तद्बन्धनस्य मध्येऽपि तृतीयोऽग्रप्रवाचिनां । गुप्तदर्शी हिजिक्येलोऽद्भुतं
स्वं प्रजगौ वचः ॥६८॥ तूरमिश्रादिवर्गाणां स्वस्य चाप्यघमुक्तवान् । लयमङ्कोरतानां च
पराशां चानुतापिनां ॥६९॥ दान्येलस्तच्चतुर्थस्तु बाबिलेऽपि स्थितः सुधीः । काल्दा ९८
य्याधिपमन्त्री तद्भाषया निजयापि च ॥७०॥ प्रवक्ति विभुनादिष्ट आजगच्छेषमप्यृतं ।
कश्चतुर्ष्वेव साम्राज्येषूद्भव्यः कर्म्मसंग्रहः ॥७१॥ इत्यग्रा भव्यवक्तारः सपुराणयहूदिभिः ।
ख्रृष्टीयैः किल संख्यातास्ततो द्वादश चेतरे ॥७२॥ तेषामाद्यस्तु होषेयः प्रागिषायादपि
स्थितः । पापमर्क्रम्यराज्यस्य निन्दन्नूनं विशेषतः ॥७३॥ तद्द्वितीयस्तु योवेलो शलभा

त्मकवैरिणां । आक्रान्तिं प्रोच्य तत्सान्त्वं भव्यमूचे सदात्मनः ॥७४॥ आमोसस्तृतीयस्तु
तत्प्रत्नतम एव च । गोपालो बहुवर्गाघं भव्यमुक्तिमुवाच च ॥७५॥ ओबदीयश्चतुर्थस्तु
तेष्वल्पोन्नितमोऽपि च । दण्डमैदूम्यदर्पस्याह भव्यं समये प्रभोः ॥७६॥ योनस्तत्पंचम
स्त्वासीन्नीनवीपुरवासिनां । निन्दाय विभुना नुन्नोऽसुर्य्याणामब्धिविप्लुतः ॥७७॥ षष्ठो
मीकस्त्विषायस्य स्थितः काल उपादिशत् । तद्वद्वर्गानुतपनं भव्यसम्राजजन्म च ॥७८॥ नहूमः ९९
सप्तमस्त्वाह नीनव्यन्तं ततोऽष्टमः । मनस्सौ राज्ञि काल्दाय्यं हबकूकोऽब्रवीद्बलं ॥७९॥
तत्क्लेशसान्त्वनोज्ञोतातत्परे योसीयशासने । नवमः शफनीयोऽन्तं वर्गस्याप्यन्तिकं जगौ ॥
८०॥ तदन्ताद्धिरिमीयादिकाले भूतात् परे नृणां । बाबिलात्प्रतिनीतानां त्रय एवैशवा
चकाः ॥८१॥ अन्त्यानां भव्यवक्तृणां दशमैकादशौ किल । हग्गायो जकरीयश्चाद्दुपुत्रबर

कीयजः ॥८२॥ तौ हि मन्दिरनिर्माणे जरूबाबिलसंयुतौ । श्रेष्ठां तत्त्वरमाहेषूङ्गव्यां मुक्ति

मवोचतां ॥८३॥ द्वादशानां तु चरमो मलाकीयः प्रवाचिनां । नहमीयात्परे खृष्टात्प्राक्

शताब्दचतुष्टये ॥८४॥ वर्गस्य यज्वनां चापि लोभाद्याधर्म्मनिन्दकः । न तादृङ्मुक्तिदं भव्यं

तदिष्टमवदत्प्रभुं ॥८५॥ भव्यवाक्येन तस्यैव खृष्टयोहन्निदेशिना । परे ·लीयात्समुत्थानां

पूर्णा वाचः प्रवाचिनां ॥८६॥ द्वादशाधिवतस्त्रस्ताः पुण्यग्रन्थास्तथैव षट् । मोसिदाविस १००

लोम्ना ये यिरिमीयेण वोदिताः ॥८७॥ द्वादशापि प्रबन्धास्ते प्रोक्ता येष्वादिनामकाः ।

सर्वाग्रं मौस्यशास्त्रं च पंचस्कन्धधरं तथा ॥८८॥ एते सहस्त्रवर्षेषु सद्भिर्विरचिताः क्रमात् ।

सर्व्वे ग्रन्थाः समादेशोत्पन्ना ज्ञेयाः सदात्मनः ॥८९॥ इत्येतानखिलान्दधुः फरीष्याद्यैस्त्रये

लकाः । ये ये पाषण्डिनश्चापि विभुमन्दिरमाश्रिताः ॥९०॥ तस्माच्चाखिलवर्गा ये प्रभुखृष्ट

ध्वजानुगाः । तद्विपक्षा यहूद्याश्चोभयास्तान्दधिरे सदा ॥९१॥ ये ऽपि मन्दिरहीनानां पापं
दशकुलोद्भवां । समार्य्यवासिनो दध्रुः सल्मनस्तार्पिताः पुरा ॥९२॥ यहूदिभ्यः पृथक् तैर्हि
पंचांशं केवलं धृतं । मोसिशास्त्रं न तु ग्रन्था दाविदादिप्रवाचिनां ॥९३॥ शिष्य उवाच ॥
मोसिशास्त्रधरास्तस्मात्सह खृष्टानुचारिभिः । यहूद्याश्च समार्य्यांश्चैवान्यो ऽन्यं ते विरोधिनः ॥
९४॥ तच्चतुस्त्रिंशद्ग्रन्थानां सहस्राब्दान्तरे क्रमात् । कृतानां रक्षिणः सन्ति सखृष्टीया यहूदिनः॥ १०१
९५॥ इति बुद्धं परे त्वेषां तच्छताब्दचतुष्टये । किं मलाकीययोहन्न्योरन्तरे न प्रवाच्य
भूत् ॥९६॥ गुरुरुवाच ॥ न ह्यभूच्छिष्य किंत्वासंस्तदा विश्वासिनो बुधाः । येषां यहूदि
भिर्ग्रन्था अलेक्षन्द्रीयकैर्धृताः ॥९७॥ पूर्व्वैः सहार्पितास्ते ऽपि ग्रन्थैर्यावन्यभाषया । न त्वैस्त्र
येल्यया तद्वन्न चैशात्मोत्थिता मताः ॥९८॥ तेषां खृष्टार्च्चकैरेवं धृतानां तत्परे ऽखिलैः ।

प्रथमो वक्ति कर्म्माणि नप्थलीवंश्यटोबितः ॥९९॥ यो हृतः सह वंशेन सल्मनस्रादिभिर्नृपैः ।
धार्म्मिको ऽतिष्ठदार्य्यात्मा नित्यं सपरिवारकः ॥१००॥ यूदीथाख्यो द्वितीयस्तु वीरायाः कर्म्म
विस्मितं । कस्याश्चिदात्मवर्गार्थे कथारूपो ऽपि शंसति ॥१०१॥ तत्परे तु सलोमीयबु
द्ध्याख्यो नीतिरूपकः । कृतो यावन्यसाम्राज्ये सौम्यवाचा यहूदिना ॥१०२॥ सलोमीयो
पमतरस्त्वन्यो मण्डल्यनामकः । सीराखतनयेनैव येष्वा विरचितः सता ॥१०३॥ तत्प १०२
रश्च बरूकाख्यो बाबिलस्थयहूदिनां । भ्रातृन् प्रति लिपीः काश्चिद्दत्ते पश्चात्तु कल्पितः ॥
१०४॥ मक्कबायाभिधौ चात इतिहासात्मकौ स्थितौ । प्रथमस्तु तयोः श्रेयान् पूर्व्वपुण्यप्रबन्ध
वत् ॥१०५॥ यस्मिंस्तेषां त्रिवीराणां सुतानामेकयज्वनः । यहूदमक्कबायाद्याख्यानां माहा
त्म्यमुच्यते ॥१०६॥ तत्कृता वर्गमुक्तिश्च राज्ञामीशद्विषां बलात् । तच्छेषोत्पन्नयोहन्निह्व

कीनोदय इव च ॥१०७॥ द्वितीयो ऽन्यकृतस्त्वेषामाह व्युत्क्रमतः क्रियाः । वैरमन्तियु
कादीनां सङ्गीर्य्यं चेश्वरार्च्चिनां ॥१०८॥ तैर्ग्रन्थैस्तु विना केचिद्द्वान्येलैस्तरयोर्मताः ।
निविष्टा ग्रन्थयोरंशा इव यावन्यभाषया ॥१०९॥ तथा पूर्व्वोक्तशास्त्राभ्यामप्यज्ञनहमीययोः ।
भिन्नमज्ञाभिधं किंचिद्यावन्येष्वपि विद्यते ॥११०॥ तच्छास्त्राणां न सत्यांशास्तान् वै पश्चा
त्तु कल्पितान् । विदुर्धर्म्म्यकथारूपानीशशास्त्रविपश्चितः ॥१११॥ रिपुबद्धनृपस्यापि मन १०३
स्सेः प्रार्थना मता । अनुतापयुता पापात् किंत्वेषा कल्पिता परे ॥११२॥ इत्युक्ताः
खृष्टकाले ये ऽतिष्ठन् ग्रन्था यहूदिनां । धर्म्मरूपाः सुपाठ्याश्च तथा खृष्टानुचारिभिः
॥११३॥ आदृता ये तु सर्व्वाग्रे नाम्ना शास्त्रप्रवाचिनां । सदात्मरचिताः प्रोक्तास्ते
पाठ्याः सद्बुधैः सदा ॥११४॥ इति श्रीखृष्टसंगीतायां येषूत्पत्तिपर्व्वणि (सर्व्वपुरातनपुण्य

पुस्तकेभ्यो यिरोणुमरचितान्मुकुटरूपोपन्यासानन्दादिभ्यश्चोद्धृतः) शाल्वोपाख्यानं नाम त्रयोदशोऽध्यायः

शिष्य उवाच ॥ मोस्यादीनां सभास्वेते ग्रन्थाः प्रतिशनैश्चरे । पाठ्या यहूदिभिस्त्वत्तोऽतितुष्टेन श्रुता मया ॥१॥ स वारस्तु गुरो कस्माद्वृतस्तत्पुण्यकर्म्मणे । न चान्ये सूर्य्यवाराद्याः कृपया तद्विवर्णय ॥२॥ गुरुरुवाच ॥ सप्तमे दिन ईशः प्राक् सर्वं सृष्ट्वा चराचरं । विश्रम्य १०४
कर्म्मणः शंस्याद्वरामाशिषमादधौ ॥३॥ अरूपे हि विराड्भूते शून्ये च क्षितिमण्डले । तमोऽव्याप्ते च तद्गर्ते पृक्तवाष्पजलावनौ ॥४॥ ततः सूर्य्याह एवेशस्तत्राप्युत्थातुमादिशत् । रूपदं सर्ववस्तूनां प्रकाशं शब्दसंयुतः ॥५॥ सोमवारे महाव्योम मण्डलेऽब्धिभुवौ तथा । बुधे समयभेदक्षीण्यण्डजांस्तु वृहस्पतौ ॥६॥ शुक्रे सर्वान् पशूंस्तेषां चाधिपं चरमे नरं । समञ्जाथा

खिलं कृत्वा विशश्राम शनैश्चरे ॥७॥ यदा च सृष्टिरप्येषा हीनाशीर्नरपापतः। मायायां पीडिता बन्धैर्मुक्तीच्छुस्तु श्रमाच्चिरात् ॥८॥ तदा वर्गं वृतं मोक्तुः सोऽवतार्य्यस्य जन्मने। आब्रह्मं बन्धनान्मैश्चाड्ढहिर्निन्ये शनैश्चरे ॥९॥ तद्धेतुभ्यां मरौ मोसिः सृष्टितो मुक्तितोऽपि च। दशैशादेशमध्ये तद्दिनं प्रोचे यथोदितं ॥१०॥ तदातः सर्व्वकर्म्मभ्यो न्यवर्त्तन्तेस्रयेलजाः। सपुत्रभृत्यगोऽश्वाद्याः सान्यजातिथयोऽपि च ॥११॥ तन्न वर्गी धरन्त्यन्ये धृत १०५
वन्तोऽपि सर्व्वतः। सृष्टेः सूर्य्यादिवाराणां भागं सप्तविधं सदा ॥१२॥ एवं विश्रामवारः सोऽब्दानामपि तु सप्तमः। विश्रामाब्दाभिधो यस्मिन्न वाप्या भूमिरेव तैः ॥१३॥ पूर्णे सप्तगुणे त्वस्मिन् सप्ताब्दे शङ्खवत्सरः। स पंचाशत्तमो यस्मिन् सर्व्वान् भृत्यानमोचयन् ॥१४॥ शिष्य उवाच ॥ श्रुतमाचार्य्य तद्वाक्यं किंतूक्तेषु त्वया पुरा। यत्पर्व्वस्वाश्रिता धर्म्म्या मन्दिरं

कानि तान्युत ॥१५॥ गुरुरुवाच ॥ नानापर्व्वाणि तिष्ठन्ति किंत्वब्दे ऽब्दे विशेषतः । आश्रेयं

त्राणपंचाशद्दूष्यनामोत्सवत्रयं ॥१६॥ पर्व्वणां सत्तमं त्वेषां तद्विद्धि त्राणसंज्ञकं । मोसि

ना स्थापितं स्मृत्यै मिश्रतो ऽद्भुतनिःसृतेः ॥ १७ ॥ पौर्णमासी स्थिता ह्याद्या या महा

विषुवात्परे । वैशाखी भूरिवर्षेषु चैत्री त्वत्रैव केषुचित् ॥१८॥ ऐस्त्रयेल्ये सदाब्दे सा

पौर्णमास्यादिमा सती । तत्पित्रुपरि तद्वोरनिःसृतावध्यभास्त हि ॥१९॥ अतस्तच्छुक्ल १०६

पक्षस्य चतुर्द्दशदिने सदा । सायं पूतावमेधेनारब्धं तैस्त्राणपर्व्व तत् ॥ २० ॥ प्रोक्ष्य

तस्यासृजा द्वाराण्युष्णं मांसमभुंजत । अरसान्नयुतं शूलाकृतमोशस्मरा निशि ॥ २१ ॥

तथा हि पितरः कृत्वा मिश्र ईशाज्ञया निजान् । ज्येष्ठपुत्रान् वधात्सर्व्वैगुप्तानां पर्य्यमोच

यन् ॥२२॥ तद्द्वारो ह्यश्वरो दूतो दृष्ट्वा मेषासृगुक्षिताः । ज्येष्ठबालांस्तदन्तःस्थान् नावधी

न्मैश्चकैः सह ॥२३॥ तद्धेतोर्निर्द्दयो राजा यः पूर्व्वाः षड्भयानकाः । विमेने ह्यापदः सो ऽतो
वर्गं प्रास्थापयद्भयात् ॥२४॥ तेषां तद्देशनीतानां वर्त्मार्न्धिं प्रति यत्नतः । एतदाश्चर्य्य
सर्व्वर्य्यां ते ऽस्मरन् पर्व्वकारिणः ॥२५॥ परे ऽह्नि कृष्णपक्षादौ सकलाहाय्यिमे स्थिते । तदब्धे
रङ्गतोत्तारं मग्नांश्चापि द्विषो ऽस्मरन् ॥२६॥ आद्यशस्यसमुत्सर्गो नीराजनयुतस्तदा । वेद्यग्रे
करणीयस्तैस्तन्महात्राणलक्ष्मणे ॥ २७ ॥ पर्व्वारम्भात्तु षष्ठाहपर्य्यन्तं पर्व्वणि स्थिते । न रस १०७
स्फीतमत्तुं तैर्योग्यं गौधूम्यपिष्टकं ॥२८॥ त्राणाग्राहात्तु सप्ताहे गते सप्तगुणे ऽप्यतः । तत्पंचा
शत्तमे ऽह्न्येव महापर्व्व द्वितीयकं ॥२९॥ शस्यपाककृतेः कार्य्यो धन्यवादो ऽतिहर्षतः । स्मृति
श्चेश्वरशास्त्रस्य तदा दत्तस्य मोसये ॥३०॥ द्वितीयविषुवान्त्वादौ पौर्णमास्यां ततो ऽपि च ।
अष्टाहे ऽन्यन्महापर्व्व ते ऽकुर्व्वन् दूष्यवासिनः ॥३१॥ स्मृत्यै तद्भ्रमणस्योग्रे प्रान्तरे ऽरण्यके

पुरा । दीर्घस्य त्यक्तवेश्मानो बहिर्ज्याकारिणो मुदा ॥३२॥ एवं त्रीणि महापर्वाण्याश्रेयं
सकलैर्यदा । तत्समर्थैस्त्रयेलीयैः परमेश्वरमन्दिरं ॥३३॥ तेषां महोपवासस्तु प्राक्तने
दूष्यपर्व्वणः । षष्ठे ऽहि स्थापितो नूनं प्रायश्चित्तदिनाभिधे ॥३४॥ यस्मिन् दम्यमखं कृत्वा
महायज्वा स्वपापतः । अजमेधं तथाघेभ्यो ऽकरोत् सर्व्वैस्त्रयेलिनां ॥३५॥ आनयन्तद
सृक् सो ऽन्तः पुण्यपुण्यतमे स्थले । सर्व्वान्याहेष्वप्रवेश्ये ऽस्मिंश्चापि स्वेतरैर्दिने ॥३६॥ संवि १०८
त्पात्रपिधानं चासृजा सिक्त्वा मुहुर्मुहुः । महाजवनिकां भूय उत्तुल्यार्च्चस्थलाद्गतः ॥३७॥
वेदिं दम्याजयोश्चासृना पुण्यवाते सयूपिकां । सिक्त्वा ततस्तयोर्देहौ वहिरज्वालयत्पुरात् ॥३८॥
द्वितीयाजस्य शीर्षे ऽपि दत्तहस्तः समर्प्य सः । सर्व्वाघान्यैरयद्वेघास्तं त्याज्यं दुर्गमे वने ॥
३९॥ एतन्मासस्य खल्वन्तःस्थिताम्भोविषुवस्य तु । भूरिवर्षैर्ब्विहोर्ज्जस्याश्विनस्य त्वपि

केषुचित् ॥४०॥ दर्शाहे सप्तमस्यैव त्राणपर्व्वीयमासतः । तूरोपर्व्वाचरन् हृष्टा धमनैर्हीमि
कारिणः ॥४१॥ मोस्यादिष्टमिदं सर्व्वं तत्परे ऽपि तु यच्चिरं । उत्तरे मन्दिरे चापि
स्थापितं पर्व्व तच्छृणु ॥४२॥ राजपत्न्येस्तरायाः हि मार्द्दुकायेन बन्धुना । भागपर्व्वार्पितं
स्मृत्यै मुक्तेर्हिंसार्थिगमनात् ॥४३॥ तत्कालस्त्वन्त्यमासस्य पौर्णमासी यहूदिनां । भूर्य्यब्दे
ष्विह चैत्रस्य फाल्गुनस्य तु केषुचित् ॥४४॥ किंनु नूतनप्रतिष्ठाख्यं पर्व्वान्यत् स्थापितं परे । १०९
मक्कबायाभिधैर्व्वीरैर्भग्नेशारियुगैः किल ॥४५॥ पक्षे नवममासस्य कृष्ण एकादशे ऽहि
तत् । भूर्य्यब्देष्वत्र पौषस्य केषुचित्सहसो ऽपि तु ॥४६॥ यस्मिन् खल्वत्यपूताया विभुसद्मा
परिष्कृतेः । दुर्य्यावनकृतायास्ते ऽपनीतिं हर्षतो ऽस्मरन् ॥४७॥ शिष्य उवाच ॥ महाविषु
वतः प्राक्स्थे प्रतिष्ठाभागपर्व्वणी । तत्परे च स्थिते त्राणपंचाशदभिधे तथा ॥४८॥ दक्षि

णायण एवं च स्थिते तद्विषुवान्तिके । तूरीदूष्ये ययोर्मध्ये प्रायश्चित्तदिनं महत् ॥४९॥
इति त्वत्तः श्रुतं किंतु मन्दिरागमनं प्रभोः । त्राणकाले यथाप्रोक्तं तथा कथय मे गुरो ॥५०॥
गुरुरुवाच ॥ नररूपः समस्तानि ह्याचचारेश्वरो ऽपि सः । बालो मानुषकार्य्याणीतरवत्कि
ल्विषं विना ॥५१॥ तस्मात्पितृनियुक्तः स विनीतः शास्त्रपाठकः । धर्म्मासक्तः सभायात्री
स्निग्धपत्यार्य्यबन्धुकः ॥५२॥ एधितेन्द्रियधीः सो ऽतो द्वादशाब्दवयःस्थितः । पितृभ्यां ११०
सह संतुष्टो यथोक्तं सत्पुरीं गतः ॥५३॥ बहुभिः सहितौ तौ तु नशरेदादिवासिभिः । पर्व्वा
नुष्ठायिभिः पुण्यं समारुरुहतुः पुरं ॥५४॥ पुरे च सर्व्वणः पूर्व्वं मेषं वर्षावरायुषं । अन्यैरा
हरतां सार्द्धं याज्यं शास्त्रानुसारतः ॥५५॥ तन्मुक्तिस्मरणाग्रे ऽपि सर्व्वथाद्यानुमापकः । निः
क्षिप्तो गेहतः सम्यग्गोधुम्यस्फायको रसः ॥५६॥ चतुर्दशदिनस्यान्ते मेध्यमानीय मन्दिरे ।

ऽस्त्रयेल्ये ऽजिरे मेषं सत्सेविव्यूहसंयुतः ॥५७॥ योसेफस्तं हतं तस्यास्ना च यञ्वभिरुक्षितां ।
अन्तःस्थां चेदिमीक्षित्वा तच्छरीरं गृहे ऽनयत् ॥५८॥ शुलविद्धं ततस्तं चाखण्डास्थिं व्यभञ्ज
न्निशि । न्यस्ताशीः स मरीयायां येष्विव मित्रगणे ऽपि च ॥५९॥ तथा सो ऽखाददेवैतद्वि
मुक्तेः स्मरणार्थकं । संविदश्चाद्वितीयेशकृताया मिश्रनिःसृतौ ॥६०॥ श्रेयस्यै यः परे मुक्त्यै
यज्ञे श्रेयस्युपाकृतं । अप्यात्मानं समुत्स्रष्टा नित्यसंवित्प्रदायकः ॥६१॥ एवं भव्यं परे किंतु ११९
तदा सो ऽन्ये ऽखिला इव । अकरोन्मोसिशास्त्रोक्तं प्रभुस्तद्यज्ञभोजनं ॥६२॥ तिक्तशाकयुतं
तत्तु त्राणयुक्ताधिलक्षणं । संपूर्णं स्तोत्रगीत्या च त्राणदातुः परात्मनः ॥६३॥ मन्दिरे प्रति
पद्येते वत्सरादौ यथाविधि । यवाद्युत्सर्गमीशाय चक्रुर्नीराजनान्वितं ॥६४॥ जुहुवुश्चाप्यन्य
मेषेण चूर्णक्षारवृतेन ते । शेषाहेष्वपि चक्रुश्च होमान्मोस्युदितांस्तथा ॥६५॥ पर्वाहेषु

समाप्रेषु योसेफो निजभार्य्यया । गलीलावासिमित्रैश्च सहितो निर्ययौ पुरात् ॥६६॥ चलन्तौ
चोत्तरे मार्गे तत आद्ये ऽह्नि तावति । समं नैवाचलद्येषूरिति तौ नाभिजज्ञतुः ॥६७॥ अदृष्ट
मपि बालं तु कैरप्यन्यैः सहस्थितं । स्वमित्रैरन्वभवतां महायात्र्यन्तरे तदा ॥६८॥ सायं
त्वेकत्र पान्थौघे स्थिते नाप्त्वा सुतं प्रियं । न वा तावत्सृतौ तैस्तं दृष्टं श्रुत्वा कदाचन ॥६९॥
तदा व्याकुलचित्तौ तौ पुनर्यातौ महापुरं । येषूः कुत्रेति पृच्छन्तौ सर्व्वदापि तु निष्फलं ॥ ११२
७०॥ त्रिदिनात्तु परे सौम्यमन्दिरे परमात्मनः । यस्मिन्नार्च्चीत्स संतुष्टः पर्व्वकाले ऽर्य्य
बालकः ॥७१॥ तत्र तं वै समासीनं शास्त्रज्ञसदसो ऽन्तरे । प्रापतुस्तौ निशाम्यन्तं तेभ्यः
पृच्छन्तमेव च ॥७२॥ ये ये ऽशृण्वंस्तदुक्तीस्तु दृढप्रत्युत्तराणि च । ते सर्व्वे तन्महाबुद्धे
र्विस्मयं परमं ययुः ॥७३॥ चिरेष्टं त्विह तं दृष्ट्वा तन्माता हर्षविप्लुता । अहतक्षुब्धि

काप्येतद्येष्ठमभ्यब्रवीद्वचः ॥७४॥ मरीयोवाच ॥ नन्दनेयत्कथं दुःखं त्वमावाभ्यामकारयः ।
अन्विच्छद्भ्यां चिरक्लेशादुन्मनोभ्यां त्वदीक्षणं ॥७५॥ गुरुरुवाच ॥ इत्यूचेऽर्य्यतमा स्त्रीणां
किंतु मृद्वपि भर्त्सनं । तदनर्हो निशम्योच एकः स्त्रीभूषु सोऽनघः ॥७६॥ श्रीयेषूरुवाच ॥
कस्मादन्वैच्छतं किं न स्थेयं मत्पितृसद्मनि । तत्क्रियार्थे मयेत्येव युवां विविदथुर्ध्रुवं ॥
७७॥ गुरुरुवाच ॥ इत्याश्चर्य्यंवचः प्रोक्तमीश्वरस्यैकसूनुना । संशृण्वद्भिर्न संबुद्धं न च ११३
मात्रापि धन्यया ॥७८॥ पिता तु तव कोऽस्तीति का वा तस्य क्रिया इति । न तदा को
ऽप्यपृच्छतं बालं विस्मयकारिणं ॥७९॥ तथा यो मन्दिरे पूर्वं सर्व्वभूम्युज्ज्वलः स्मृतः । तत्र
पोगण्ड आद्यं स प्रबभौ मन्त्रदोऽद्भुतः ॥८०॥ ततः सार्द्धं पितृभ्यां तु नसरेतं पुनर्गतः । तयो
र्नित्यमधीनोऽभूत्सिद्धः सोऽसिद्धयोरपि ॥८१॥ बहुदर्शी ततो बुद्ध्या वर्द्धमानो दिने दिने ।

ईश्वरान्मानुषेभ्यश्च प्रसादं प्राप शोभनं ॥८२॥ किंतु सर्वमिदं कर्म्म ह्यैशरूपस्य लक्षणं ।
दृष्ट्वा धन्या मरीया सा हृदये ऽस्थापयद्दृढं ॥८३॥ आविष्कारं परे भव्यं दावित्सूनोर्महत्तरं ।
दूतवाक्यानुसारेण प्रत्यैच्छत्सा निरन्तरं ॥८४॥ एतत्कालान्तरे तस्या ममार पतिरेव च ।
योसेफः स महाभाग्यः सत्प्रभोरपि पालकः ॥८५॥ इति श्रीख्रीष्टसंगीतायां येषूत्पत्तिपर्व्वणि (मोसिरचितपंचशास्त्रस्य निःसृतिलेव्यानुवाक्यस्कन्धेभ्य एस्तराचरित्रान्मक्काबाय ॥ चरित्राल्लूकरचितमङ्गलसमाचारस्य द्वितीयसर्गात्तदादिभ्यश्चोद्धृतः) प्रभुयात्राकथनं नाम चतुर्दशो ऽध्यायः ॥

गुरुरुवाच ॥ श्रीख्रीष्टस्य गुरुत्वात्प्राग् यदभूदखिलं वचः । ख्यातं तदनुगैः शिष्य बहु चापि पुरोदितं ॥१॥ तज्ज्ञोगुस्तमृतेः पूर्व्वं भूतं किंतु त्रयोदशे । ख्रीष्टशाके तिबर्य्यं स चक्रे

साम्राज्यभागिनं ॥२॥ स द्यब्दे तत्परे मग्ने पदस्थस्य तु कैशरः । तिबर्य्यस्याभवत्काले गुरुत्वं
सकलं प्रभोः ॥३॥ परे ते तन्मया वाच्यं समाहात्म्यचरित्रकं । चेत्प्रष्टव्यं त्वयान्यत्तु पुरोक्ते
ष्वधुनावद ॥४॥ शिष्य उवाच ॥ ज्ञातुमिच्छामि पर्व्वाणि ह्वैस्त्रयेल्यानि तानि किं ।
धरन्ति समशास्त्रास्ते लोकाः खृष्टार्च्चिनस्तथा ॥५॥ गुरुरुवाच ॥ यच्छायामात्ररूपोऽभूदिस्त्र
येलक्रियाचयः । सत्तरः स क्रियासंघः शंसितः खृष्टसेविभिः ॥६॥ चरमं यस्य माहात्म्य ११५
मृत्युशक्तिविनाशकं । सुसिद्धं सूर्य्यवारेऽभूत्सर्व्वसृष्ट्यनुजन्मदं ॥७॥ तस्मान्न सप्तमेऽह्नि
ते विश्रामं ह्वैस्त्रयेलवत् । स्मृत्यै कुर्व्वन्ति पूर्णायाः सृष्टेर्मुक्तेश्च मिश्रतः ॥८॥ पर्व्व तु प्रथमे वारे
श्रेयोमोचनलक्ष्मणे । कुर्व्वन्ति प्रतिसप्ताहे नित्यजीवनदीपकं ॥९॥ प्रत्यब्दे पर्व्वणी चैवा
नुष्ठितानां यहूदिभिः । त्राणपंचाशदाख्ये द्वे नेतराण्याचरन्त्यमी ॥१०॥ ते चापि न धृते

स्मृत्यै तन्मिश्रापसृतेर्न वा । तच्छिलाङ्कितशास्त्रस्योगे ऽद्रौ दत्तस्य मोसये ॥११॥ तच्छ्रेयस्या
विमुक्तेस्तु नित्यायास्तत्परस्य च । लिखितस्येशशास्त्रस्य नोपलेष्वपि हृत्सु तु ॥१२॥ तन्नव्य
कर्म्ममात्रार्थं यिरिमीयोदितं यथा । ते महापर्व्वणी नित्यं ख्रृष्टकालावधि स्मृते ॥१३॥ तयोः
स्मृतानि कर्म्माणि पश्चाद्वर्ण्यानि शिष्य ते । प्रभोस्तु प्रोक्तकर्म्माणि स्मृतान्यन्येषु पर्व्वसु ॥
१४॥ शिष्य उवाच ॥ एतानि ख्रृष्टपर्व्वाणि स्मृत्यै मत्कृतकर्म्मणां । क्रियन्ते सत्यविश्वासैरपि ११६
वर्णय मे गुरो ॥१५॥ गुरुरुवाच ॥ यन्महाविषुवात्पश्चाच्चतुर्थं गणितं दिनं । मार्त्या
ण्यादिममासस्य रौम्याणां पंचविंशकं ॥ १६ ॥ तस्मिन् धन्यनमस्कारपर्व्व धर्म्म्यैरनु
ष्ठितं । स्मृत्यै शब्दावतारस्य दूतेनाङ्गीकृतस्य हि ॥१७॥ सत्कुमार्य्या मरीयाया यदोक्तं
शुभकीर्त्तनं । ईशप्रस्वाः किलीताया मण्डल्या ख्रृष्टसेविनां ॥१८॥ मार्त्ये तु प्रथमे मासे

द्वितीये ऽप्रीलिनाम्नि वा । मृत्युतस्त्राणपर्व्वाङ्का पूर्णिमा विषुवान्तिका ॥१९॥ तत्परे ह्याद्य

सूर्य्याहो महात्राणाह एव नः । तत्पूर्व्वः शुक्रवारश्च सद्यज्ञार्थोपवासकः ॥२०॥ तृतीये

मायमासे तु चतुर्थे यून्यनाम्नि वा । तच्छ्रेष्ठत्राणसूर्य्याहात्सूर्य्यवारो ऽस्ति सप्तमः ॥२१॥

पंचाशत्पर्व्वर्य्याहः स्मृत्यै दत्तस्य तद्दिने । नरह्वत्स्वीश्वरीयाज्ञालेखितुर्हि सदात्मनः ॥२२॥

नोक्तं तच्छिष्य न तयोर्मध्ये वा श्रेष्ठपर्व्वणोः । स्वर्गारोहणपर्व्वैवानुष्ठितं यद्बृहस्पतौ ॥२३॥ ११७

पश्चाद्वाच्यं तु सर्व्वं तत्किंतु यून्यस्य तत्परे । चतुर्विंशे ऽह्नि यद्धन्यनमस्कारात्त्रिमासकं ॥२४॥

जन्मपर्व्वास्ति योहन्नेः प्रस्तुतप्रभुपद्धतेः । धर्म्मसूर्य्योदयाङ्कस्यारुणस्यैव नृनीतये ॥२५॥ रौम्या

णां षष्ठमासे तु पर औगुस्तनामके । सप्तम्बराष्टोब्बरयोस्तथा चापि नवम्बरे ॥२६॥ पर्व्वा

णि नाधुना वक्ष्ये क्रियानुक्तत्वहेतुतः । ततस्त्वर्च्चासमामेवारभते ख्रिष्टमण्डली ॥२७॥ स्मृत्वा

दशममासादौ ह्यागतिं स महाप्रभोः । पंचविंशे ऽह्नि तज्जन्ममहापर्व्वानुतिष्ठति ॥२८॥
पूर्णेषु नवमासेषु परे धन्यनमस्कृतेः । स कन्याप्रसवो ह्यह्नि पंचमे ऽक्तोतरायणे ॥२९॥
तन्मासस्याष्टविंशे ऽह्नि प्रभ्वर्थं तत्समायुषः । हता बालाः स्मृता एवानघमारणपर्व्वणि ॥३०॥
खृष्टजन्मतृयीयं तद्दिनं किंतु तदष्टमं । यन्वार्य्यमासप्रथमं तत्परिच्छेदपर्व्व सत् ॥३१॥
भूतं ह्येतद्दिने शास्त्रविनयारम्भणं प्रभोः । पापोच्छेदाङ्कः उयश्च पाश्चिमाब्दादिमे किल ॥ ११८
३२॥ तन्मासस्य तु षष्ठे ऽह्नि खृष्टजन्मत्रयोदशे । अन्यजोपरिखृष्टीयोज्ज्वालपर्व्वाप्यनुष्ठितं ॥
३३॥ पारसीकबुधैर्ह्यर्च्चा तदा बेथ्लहमे कृता । शिशोः सर्व्वकुलोद्धर्त्तुः स्मर्त्तव्या हर्षितः सदा ॥
३४॥ फिब्रुवार्य्याख्यमासस्यान्त्यस्य प्राक् किंतु सांप्रतं । द्वितीयस्य द्वितीये ऽह्नि शुद्धिपर्व्व
विधीयते ॥३५॥ चत्वारिंशत्तमे ह्यस्मिन् जन्माहे ऽभूद्यथोदितं । मातृशुद्धिः प्रतिष्ठा. च

शिशोः स्वे मन्दिरे प्रभोः ॥३६॥ इति प्रोक्तो मया शिष्य सत्सेविप्रियपर्व्वणां । संघः प्रभु
महास्तोत्रं यस्मिन् प्रक्रियते सदा ॥३७॥ तेन चापि यथायोग्यं पूरयिष्यामि ते ऽधुना ।
येषूत्पत्तिकथां शिष्य त्वच्छ्रोतव्येन सांप्रतं ॥३८॥ इति श्रीख्रिष्टसंगीतायां येषूत्पत्तिपर्व्वणि
(ख्रिष्टीयपुण्यमण्डलरीतिभ्य उद्धृतो) ऽवतीर्णपर्व्ववर्णनं नाम पंचदशो ऽध्यायः ॥

गुरुरुवाच ॥ नमो ऽग्रजायाखिलपिष्टपानामव्यक्तभासो ऽशव ईक्षयित्रे । यः सत्वमात्र ११९
स्थित एव लोकांस्तमो ऽभिभूतान् कृपयालुलोचे ॥१॥ नमो विभोरद्वयसूनवे ते ह्यसृष्टरूपाय
जगत्प्रकर्त्रे । पित्राज्ञया यो जगतो विमुक्त्यै बद्धस्य पापैरवतीर्ण आसीः ॥२॥ शब्दस्त्वमे
वेश्वरतुल्यभावः पित्रा सहानन्दयुतो ऽक्षरात्मा । न त्वस्मदर्थे दययेह नीतो ऽवमेनिषे
दुःखितमर्त्यभावं ॥३॥ ईशैकतायां सुत विश्वपित्रा युक्तैकलात्मन्युभयोर्हि संस्थे । नैश्वर्य्य

दीप्तो ऽप्यवमेनिषे त्वं गर्भं प्रवेष्टुं विमलं कुमार्य्याः ॥४॥ दाविच्छिफासत्कालिकां फलार्हां नैतां तु वेश्मान्यधरन्त राज्ञां । न रक्षिवर्गाश्च परिस्थितास्तां तव प्रसूं सन्नृप मन्दुरास्थां ॥५॥ स्वर्गीयसेनादृत उद्भवस्ते न गर्वपूर्णैरनुभूत उर्व्यां । न मोहनिद्रागिलितैः स दृष्टो मोक्षारुणः संपतितो ऽन्तरीक्षात् ॥६॥ कांश्चित्तु रात्रौ परिभासते स्म शुद्धांस्तदा जागरिणो महौजः । ये दूतदिष्ट्यान्त्यगृहे ऽर्च्चितुं त्वां हृष्टाः समेताः खलु मेषपालाः ॥७॥ न त्वन्त्य वृत्तिः समगोपयत्त्वां परिस्थितानां विपदां समूहात् । द्रोष्यन्तमात्मप्रियदेशतो ऽपि क्रूरस्य राज्ञो ह्यसृगार्द्रखड्गात् ॥८॥ येषूरिति स्वादुतमां प्रलिप्सुस्तां सर्व्वभूतैरभिधां प्रणम्यां । त्वं मोचको नह्यहिलस्तदर्थे रक्तावृतं शास्त्रनियोज्यचिह्नं ॥९॥ त्वां दूरदेशादुडुनैव नीता धीराः स्वराजौदयदर्शयित्रा । न ख्यातमापुस्तु महापुरस्थैर्मग्नैरहङ्कारतमस्तरङ्गे ॥१०॥

शास्त्रोपदिष्टान्त्यपुरे ततस्ते त्वां कुन्दुरस्वर्णनिषेव्यमापुः । क्षुद्रालयान्तः शयमानमेव धन्या
भिधाया निजमातुरङ्के ॥११॥ अस्मत्सहस्थेश इति प्रशंस्यः प्रतिष्ठितश्चाप्युरुमन्दिरे स्वे ।
नाप्नोस्त्वमर्हो नरराट् कृतं तेऽर्चनं सुगन्धाध्वरनूतियुक्तं ॥१२॥ वृद्धस्त्विहेशेन सुमन्त्रितस्त्वां
विज्ञाय गीत्या शुभया च नुत्वा । निन्दामुदेयां वधिकां त उचे शूलायमानां हृदि मातुरेवं ॥
१३॥ आहूत इवापरदेशतस्त्वं प्रेष्ठो विभोरात्मज आर्य्यभूमौ । गुप्तस्तदाप्युत्तरदिङ्निवासी १२१
व्यवर्द्धथाः शुच्यवरोहसंज्ञः ॥ १४ ॥ भीमैस्त्वतः कर्म्मभिरीश्वरत्वं नादर्शयस्तत्र विनीत
भावः । यो योग्यकर्म्माण्यखिलानि कृत्वा शान्तं नरो नृष्वधरः प्रसादं ॥१५॥ मातापितृ
भ्यामभवो नियुक्तस्त्वमात्मजो विश्वपतेः सरूपः । गुरूपदिष्टं सकलं चकर्थ त्वमङ्गतो मन्त्रद
हेशशब्दः ॥१६॥ भूपादिकानाद्रियथाः समस्तांस्त्वं विश्वनाथोऽखिलभूतपालः । नियुक्त

आसीरपि राजनीत्या त्वं वै महादण्डधरोऽक्षदर्शी ॥१७॥ सभामयासीः सकलैस्त्वमर्च्यो
ऽध्यैष्ठा नु शास्त्राण्युदितस्त्वमाद्यैः । धर्म्माण्यकार्षीर्विषयोऽप्यमीषां विधींश्च तेऽष्वप्यखिले
ष्वपेक्ष्यः ॥१८॥ संवास्यभूरप्यघविप्लुतानामूर्द्ध्वस्थितैः पुण्यतमैर्वृतस्त्वं । संपीडितो दुर्म्म
नसां क्रियाभिस्त्वं सत्वमात्रेऽनुरतश्चिदात्मा ॥१९॥ ततोऽवताराद्तिविस्मितात्ते महाकृपो
त्थात्फलमद्भुतं स्यात् । त्वां स्वर्गभूवासिन एव सर्वे स्तोत्रैरनन्तैः परिशंसितारः ॥२०॥ १२२
यः पुत्रः सह पित्रैकोऽनादिरीशः सदा स्थितः । नमस्तस्मै नमस्तस्मै सर्व्वाग्रोत्पन्नये नमः ॥२१॥
यस्याप्येकत्वयोगोऽस्ति सदात्मेश्वरनिःसृतः । नमस्तस्मै नमस्तस्मै शब्देशाय नमो नमः ॥२२॥
येन युक्तोऽखिलां सृष्टिमाक्रमज्जगतां पिता । नमस्तस्मै नमस्तस्मै शक्तेशाय नमो नमः ॥२३॥
यः समस्तजनेभ्योऽपि जीवनात्मप्रकाशदः । नमस्तस्मै नमस्तस्मै सच्चिद्बिम्बाय वै नमः ॥२४॥ यः

स्तुतो ऽप्यूर्द्ध्वलोकस्थैरेमे भूवासिभिः सदा । नमस्तस्मै नमस्तस्मै ईशबुद्ध्यात्मने नमः ॥२५॥ यो मृत्युपतिते ऽप्याद्ये नृणां मोक्ता प्रतिश्रुतः । नमस्तस्मै नमस्तस्मै नमो नूत्नादमाय हि ॥२६॥ यः पापदुःखमध्ये ऽपि नित्यसान्त्वं सुधर्म्मिणां । नमस्तस्मै नमस्तस्मै नागमूर्द्धच्छिदे नमः ॥२७॥ यस्यानुसर्गलक्ष्मासीद्विप्लुवो मलनाशकः । नमस्तस्मै नमस्तस्मै वसुधानुसृजे नमः ॥२८॥ यदर्थे नूत्नवंशो ऽपि ततो ऽभूदादमाद्यथा । नमस्तस्मै नमस्तस्मै युगपित्रे नमो नमः ॥२९॥ १२: यत्कृते ऽब्रह आहूतः पैतृकं भवनं जहौ । नमस्तस्मै तमस्तस्मै कुलसंनायिने नमः ॥३०॥ यद्बिम्बः संविदो भागीशहकः स्थविरात्मजः । नमस्तस्मै नमस्तस्मै प्रतिश्रुतिभुवे नमः ॥ ३१॥ यत्प्रतीत्याप तं मृत्योस्त्रातं विश्वासिनां पिता । नमस्तस्मै नमस्तस्मै पुनर्जीववत्ते नमः ॥३२॥ यद्दृष्टिं प्राप याकोबः संविद्दायार्हको ऽर्थयन् । नमस्तस्मै नमस्तस्मै इस्रयेल

रूचे नमः ॥३३॥ यस्य विम्बोऽपि योसेफो भ्रात्रस्तो विभुवर्द्धितः । नमस्तस्मै तमस्तस्मै लब्धा न्त्यस्थितये नमः ॥३४॥ यं यहूदकुलोत्पाद्यं मुमुर्षुस्तत्पिता जगौ । नमस्तस्मै नमस्तस्मै नित्यराज्याधिकारिणे ॥३५॥ यदर्थमालुलोचे स्वानीश हेगुप्तपीडितान् । नमस्तस्मै नम स्तस्मै तमोबद्धमुचे नमः ॥३६॥ यद्विम्बस्त्राणकृत्त्रामलो मेष उपाकृतः । नमस्तस्मै नमस्तस्मै सद्यज्ञबलये नमः ॥३७॥ यन्माहात्म्यस्य लक्ष्माभूदब्धेस्तरणमद्भुतं । नमस्तस्मै नमस्तस्मै १२४ मृत्यब्ध्युत्तारिणे नमः ॥३८॥ येनापि ग्रावनाकाभ्यां सद्वर्गः पालितो मरौ । नमस्तस्मै नमस्तस्मै सत्यान्नोत्सर्जिने नमः ॥ ३९ ॥ यस्तावत्लैव्यशास्त्रेण प्रतिकृत्येव दर्शितः । नमस्तस्मै नमस्तस्मै शास्त्रसिद्धिकृते नमः ॥४०॥ यं प्रोचे शास्त्रदोऽप्यन्ते महीयांसं प्रवा चकं । नमस्तस्मै नमस्तस्मै मन्त्रदाय नमो नमः ॥४१॥ यन्नामापि मृते मोसौ ज़िगा

योर्व्वीं प्रतिश्रुतां । नमस्तस्मै नमस्तस्मै येष्वेऽरिध्वंसिने नमः ॥४२॥ यत्संकाशोऽपि गिर्य्योनो
ऽभज्जन्मद्यानिनां युगं । नमस्तस्मै नमस्तस्मै शत्रुदण्डोच्छिदे नमः ॥४३॥ यन्माता भवितुं
रुथात्मोर्व्यां बेथ्लहमं गता । नमस्तस्मै नमस्तस्मै ईसिमूलोद्भवे नमः ॥४४॥ यच्चिह्नाये द्विषां
देवोऽपतद्भूमौ नृमत्स्यकः । नमस्तस्मै नमस्तस्मै मायाप्रक्षेपिणे नमः ॥४५॥ यद्बिम्बोऽरिन्द
मो दाविद्राजवंशादिमो वृतः । नमस्तस्मै नमस्तस्मै धर्म्माधिपतये नमः ॥४६॥ यत्संवि १२५
त्पात्रमिङ्गः प्राक् स्थितिं प्रापार्य्यपर्व्वते । नमस्तस्मै नमस्तस्मै शीयोनपतये नमः ॥४७॥
यदर्थेऽपि गृहं चक्रे सलोमा कुशलान्वितः । नमस्तस्मै नमस्तस्मै दाविज्ज्ञश्रेयसे नमः ॥४८॥
यस्यापि दशवंशेषु साक्ष्यलीयोऽभवन्महान् । नमस्तस्मै नमस्तस्मै स्वर्लोकारोहिणे नमः ॥४९॥
यस्मिन्दण्डार्थबद्धानामेकाशा सद्यहूदिनां । नमस्तस्मै नमस्तस्मै मुक्तिशृङ्गात्मने नमः ॥५०॥

यस्मै राजोऽन्यजा दग्धं गृहमस्थापयन् पुनः । नमस्तस्मै नमस्तस्मै धूतनाकोर्वये नमः ॥५१॥

यः पुनः स्थापकः सर्वैराज्यस्येष्टोऽघमुक्तिदः । नमस्तस्मै नमस्तस्मै अवरोहात्मने नमः ॥५२॥

यदर्थेऽन्त्या मरीयैव धन्योक्ता सर्ववंशजैः । नमस्तस्मै नमस्तस्मै सत्कुमारीभुवे नमः ॥५३॥

यः सदात्मकृतः कन्यागर्भेऽस्मत्सहितेश्वरः । नमस्तस्मै नमस्तस्मै वतीर्णविभवे नमः ॥५४॥

तस्यावतारस्य फलं प्रशंस्यं तथा मदीयं स करोतु मोक्ता । यन्मात्रहेतोर्वयमर्थयामो दयां १२६

पितुः खल्वघकूपमग्नाः ॥५५॥ तं प्रेष्ठमेकं तनयं दयालो प्रदत्तवान् दुष्टमनुष्यमुक्त्यै ।

नानर्हतां नः सुकृतं तु तस्य संदृश्य शृण्वीश्वर नो विलापं ॥५६॥ सत्या श्रुतो धन्यनमस्कृतौ यः

सोऽभ्येतु नो मुक्तिसुवार्तयैव । सदात्मना स्थापित एव नोऽन्तः स सत्प्रभावीजमिवेत

उप्यात् ॥५७॥ यः प्रस्तुताधाग्रगजन्मना सोऽस्मास्वे मार्गं परिमृष्टमाप्यात् । हतास्वहंकृत्य

गमाटवीषु तत्सच्चिदानन्दनिवारिकासु ॥५८॥ जातः कुमार्य्याः पथिकालये यो देयात्स नो
दर्पहरानुजन्म । यः संसृताविव तदा प्रविष्टः स तत्र पायादनुचारिणोऽस्मान् ॥५९॥ हता
यदर्थे कुनृपेण बालाः सद्वर्गमध्येऽवतु नः स नित्यं । य एकशुद्धोऽप्यनघान् स चास्मान् क्रियात्
सहिष्णून् मरणान्तमेव ॥६०॥ प्राप्तं परिच्छेदनमेव येन छिनत्तु कामादिमलं स नोऽपि । यो
मोक्तृनामा स जितेन्द्रियान् नः क्रियात्स्वदुःखौघरहस्यशक्त्या ॥६१॥ प्राग्दिग्बुधान् योऽधि १२७
बभौ तदा चांशुभिस्तमो हन्त्वपि सोऽस्मदीयं । अस्मत्सृतिं तं प्रति चापि नीयादस्मत्कृताभ्यर्च्चन
मेव गृह्णात् ॥६२॥ पदे सुवर्णस्य हि सोऽस्मदीयं दीनार्थदानं लभतां प्रसन्नः । देहामलत्वं रसग
न्धकस्य कुन्दोः पदे चार्थनमाददातु ॥६३॥ प्रतिष्ठितोऽपीशगृहे य आर्य्यः सोऽस्मान् प्रतिष्ठा
पयतु स्वपित्रे । शुद्धीकृतं चामलमातृवत् सोऽस्मांस्त्यक्तपापान् नयतूर्द्ध्ववासे ॥६४॥ तथा तदु

त्पत्तिफलं सुसिद्धमाप्त्वा वयं हीनकुकर्म्मदण्डाः । इयत्प्रपन्नं ह्यघकारिमुक्त्यै तं स्वर्गसैन्यैः
सह संस्तवाम ॥६५॥ महेश्वरायोर्द्धतमेषु कीर्त्तिः सन्धिः पृथिव्यां सुनृषु प्रसादः । इति
प्रगीतं त्रिजगत्सु सर्व्वैर्येषूद्भवादस्तु सदापि भूतैः ॥६६॥ इति श्रीख्रीष्टसंगीतायां येषूत्पत्ति १२८
पर्व्वणोश्वरपुत्रस्तोत्रं नाम षोडशोऽध्यायः ॥ समाप्तं चेदमेकादशोनसहस्रश्लोकात्मकं येषूत्पत्ति
नामकं प्रथमं पर्व्व ॥

# अशुद्धसंख्या

| पत्रे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ६ | १ | स्योयबन्धु | स्वीयबन्धु |
| २२ | ६ | जित्वैशप्रांत्रं | जित्वैशपात्रं |
| २७ | ३ | हाबभाग्नी | हाबभग्नी |
| ८५ | ९ | रौम्यगोपेन | रौम्यगोपेण |
| ११० | ७ | सर्व्वणः | पर्व्वणः |



श्रीखृष्टसंगीता

पुत्राभिषेकपर्व

# CHRISTA-SANGÍTÁ,

OR THE

SACRED HISTORY

OF

OUR LORD JESUS CHRIST,

In Sanscrit Verse.

BOOK II.—THE EARLIER MINISTRY.

BISHOP'S COLLEGE, CALCUTTA.
PRINTED BY J. SYKES.
1834.

श्रीपित्रे पुत्रायच सदात्मनेच नमः ॥ शिष्य उवाच ॥ दूराद्यथा प्रक्कणनं निशम्य श्रुतौ निषि
क्तं मधुरं निशायां । पान्थोऽनुरागी स्वसृतिं विहाय तच्छ्रोतुकामः क्रमतोऽभ्युपैति ॥१॥ तथा
हमाचार्य्य निशम्य ते वै येषूक्तवाख्यानमतीवसौम्यं । त्यक्त्वा पुराणान्यखिलान्युपेतस्त
न्मात्रलुब्ध्याल्पविनिश्चयोऽपि ॥२॥ स राजवृक्षस्य समुत्थितो हि कन्यालताकोरक ईश्वरा
त्मा । मयानुभूतो नतु यः प्रफुल्लाद्बहिःसरेत्सत्सुरभिः स आप्तः ॥३॥ तद्बाल्यकालेऽप्युरु ।
कर्म्मसंघश्चकाश ईषद्यरुणो यथा मे । पश्चादुदेयात्त्वथ धर्म्मसूर्य्याद्भा निःसृता सौम्यतरा न
दृष्टा ॥४॥ या मोहगर्त्ते पतितान्मनुष्यान् प्रतीक्षिता भासयितुं चिरत्नैः । तां साम्प्रतं कौशल
मार्गनीत्यै संद्रष्टुमिच्छामि गुरोऽतियत्नात् ॥५॥ गुरुरुवाच ॥ धर्म्मसूर्य्यायणं तद्वै पापरोगाप
हारकं । प्रारभ्य खृष्टसंस्कारात् कथयिष्यामि तेऽधुना ॥६॥ तद्विद्धि प्रस्तुतं शिष्य जकरी

योदितं यथा । दत्तयोहन्निनाम्नाथ तत्पुत्रेण महात्मना ॥७॥ यं मातुर्गर्भतः पूर्ण भव्यमेव
सदात्मना । अपेयेरामधुं प्रोचे दूतोऽलीयात्मशक्तिकं ॥८॥ स सन्न्यासीव संतस्थौ प्रान्तरे
चालितस्तथा ॥ यावत् त्रिंशत्समायुर्न बभावग्रसरः प्रभोः ॥९॥ तथेस्त्रयेलिषु स्थेयमेनं हि
प्रजगौ गुरूं । पुरा चतुःशताब्दात्प्राक् चरमो भव्यवाचिनां ॥१०॥ मलाकीय उवाच ॥
इदं बलानां पतिराह वै स्वभूरहो मदग्रे चरमीरयाम्यहं । ततस्त्वभीष्टो निजमन्दिरेऽपि वः २
प्रभुः समायास्यति संविदीरितः ॥११॥ तदागमाहं तु सहिष्यतीह कः क एव संस्थास्यति
तस्य सम्मुखे । यतः स वै काञ्चनशोधकाग्निवत् स एव च क्षार इव प्रमार्जकः ॥१२॥ स
तत्र लैव्यान् हि पुरोहितान् यदा पवित्यतीशामलहोमपूर्तये । तदा समूह्यः परिधक्ष्यती
ऽमवदधर्म्मकर्त्तॄनखिलांश्च गर्व्विणः ॥१३॥ मदर्च्चिनः प्रत्युदयिष्यते तु वो धरंश्चिकित्सां

गरुदात्मकांशुभिः । स धर्म्ममूर्त्यो यदुषःप्रभैधिना भवेत वत्सा इव मर्द्दिताधमाः ॥१४॥ अनी
व भीमेऽह्नि मयार्पितेऽखिलं करिष्य एतद्वलनाथ आत्मभूः । ततोऽग्रशास्त्रं स्मरताखिला म
योदितं हि सीनायशिलासु मोसये ॥१५॥ अहो नु नोत्स्यामि तदुग्रकालतः पुरा ह्यलीयं
गुरुमेव वः प्रति । धराघ्नशापस्य निवारणाय यः पितॄन् सुतांश्चैकहृदोऽपि वर्त्तयेत् ॥१६॥
गुरुरुवाच ॥ इत्येष प्रत्नशास्त्रान्तोऽधुना तु नवसंविदः । प्रथमं कृतमाख्यानं तच्चरेणेरि २
तेन वै ॥१७॥ योऽलीयात्मा पितॄणा हि पुत्राणां चापि योजयन् । हन्दि धर्म्मकृतां मार्ग
आनयद्विधिलङ्घिनः ॥१८॥ इदं सर्व्वं यथा नूत्ने शास्त्रे संलिखितं प्रभोः । भीमागमाहप्रस्तुत्यै
शृणु मे शिष्य यत्नतः ॥१९॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मलाकीयभव्यवा
क्यानां तृतीयचतुर्थसर्गाभ्यां शान्तमार्कलूकरचितमङ्गलसमाचारयोः प्रथमसर्गाच्चोद्धृतो) दूत
प्रेरणं नाम प्रथमोऽध्यायः ॥

गुरुरुवाच ॥ तिबर्य्यै रोमसम्राजि स्थिते पञ्चदशाब्दिके । तत्कृते च पिलाताख्ये पत्यै
गोपे यहूदिनां ॥१॥ अन्तिपाख्ये तु हैरोद्ये गलीलादेशपादपे । तद्भ्रातृष्वन्यपादानामधि
पेषु स्थितेषु च ॥२॥ हन्ने च कायफे चैवाहरोणपदसंस्थयोः । प्रधानयज्वनोर्वर्षे वैक्रमेऽपि
द्व्यशीतिके ॥३॥ तदा प्रान्तरमध्ये वै योहन्नौ जकरीयजे । महात्मन्यागमद्वाक्यं समर्थं
परमात्मनः ॥४॥ यत्पूर्णः सोऽखिलं देशं यर्द्दानिसरिदावृतं । चरन्ननाद पापार्थेऽनुतापाङ्को ४
द्संस्कृतिं ॥५॥ उष्ट्रलोमाम्बरो ह्येष बद्धचर्म्मकटित्रकः । शलभान् वनमध्वेव भुञ्जानश्च
सनातनं ॥६॥ इति पर्य्यव्रजच्छ्वन्तथा सर्व्वत्र चाह्वयत् । अनुतापं कुरुध्वं नु स्वर्गराज्यं हि
सन्निधौ ॥७॥ तद्वचोभीतितः सर्व्वे यहूद्याः परिवासिनः । यरीखोनगरादिभ्य आप्रधान
पुरादपि ॥८॥ गुरुं तमभिसंगत्य स्वीकृत्य स्वान्यघानि च । यर्द्दानिसलिले प्रापुस्तत्करांज्जल

संस्कृतिं ॥९॥ तेषां मध्ये तु संदृश्य स परीक्ष्यमतान् कति । बाह्यधर्म्मनियुक्तान् वै पैत्रशास्त्रकथादरान् ॥१०॥ शादूक्यधर्म्मिणश्चापि कांश्चिदेतद्विरोधिनः । पाषण्डान् मोस्यधीतान् ये परलोकं व्यवादिषुः ॥११॥ एतयोर्म्मतयोर्भक्तान् संदृश्याग्रसरः प्रभोः । स्वसंस्कारार्थिनस्तौ क्षणमिदं प्रत्यब्रवीद्वचः ॥१२॥ योहन्निरुवाच ॥ रे सर्पतनया युष्मानागामिन्या रुषः प्रभोः । पलायितुमियद्यत्नादिदानीं क उपादिशत् ॥१३॥ अथ यदनुतापार्हं विद्यते कर्म्मणां फलं । तत्कुरुध्वं न तु ब्रूत वयमब्रहजा इति ॥१४॥ मृषेदं ब्रूथ सत्यं हि शक्यमीशेन वच्मि वः । एतेभ्यः प्रस्तरेभ्योऽपि स्रष्टुमेवाब्रहात्मजान् ॥१५॥ साम्प्रतं चापि परशुर्वृक्षमूलेषु संयुतः । यो वृक्षो न फलेद्भद्रं छेद्यः क्षेप्यश्च सोऽनले ॥१६॥ गुरुरुवाच ॥ इति भीमवचः श्रुत्वा नराः सर्व्वे समागताः । किं करिष्यामहेऽथार्य्येतिपप्रच्छुर्महागुरुं ॥१७॥ योहन्निरुवाच ॥ भवेतां

यस्य वत्रे द्वे तद्वीनाय ददातु सः । तयोरेकं तथा चैवं करोतु बहुभाज्यकः ॥१८॥ गुरुरु
वाच ॥ एताश्च कति संस्कृत्यै करसंग्राहिणोऽधमाः। ज्ञाता यहूदिषूचुः किं भृत्याः कर्त्तास्म केशरः ॥
१९॥ योहन्निरुवाच ॥ यन्मुद्राग्रहणे कर्म्म रोम्यैर्वः सुनिरूपितं । भ्रातृभ्यस्तत्कुरुध्वं वै न
किञ्चित्त्वधिकं ततः ॥२०॥ गुरुरुवाच ॥ समेतास्त्वपि सैन्या वै जलसंस्कृतये कति । यान्
गलीलाधिपः प्रैरच्छ्वशुरस्य युधेऽन्तिपाः ॥२१॥ हारिथस्यारबेन्द्रस्य ते ततः प्राप्य संशयं । ऊचु
हेरोद्यभृत्यास्तु किं करिष्यामहे वयं ॥२२॥ योहन्निरुवाच॥ नब लान्न च पैशुन्यात्पीडयेत
कदाचन । भ्रातॄन् नवान्यजान् स्वीयात्संतुष्टाश्च स्त वेतनान् ॥२३॥ गुरुरुवाच ॥ इत्यब्रहोद्भवः
श्रुत्वा नवराज्यप्रवक्तृतः । शान्तधर्म्माज्ञकं वाक्यं नियुक्ता अन्यजैरपि ॥२४ ॥महासंशय
मारुह्य कोऽयं सन्न्यासिवडुरुः । धर्म्मी सोऽङ्गीकृतोऽस्मभ्यं ख्रिष्टोऽन्यो वेत्यचिन्तयन् ॥२५॥

ततश्चेतांसि सुज्ञाय तेषां स जकरीयजः । अज्ञानोच्छेदनायेति नरसंघ तमब्रवीत् ॥२६॥
योहन्निरुवाच ॥ अहं वो जलमात्रेण संस्करोमि प्रवाचकः । अन्यस्त्वेकः समायाति मत्तो
विक्रमवन्नरः ॥२७॥ आगामी मत्परे सोऽपि मत्पूर्व्वो वै सदा स्थितः । तत्पादूबन्धमप्य
हो न विमोचयितुं ह्यहं ॥२८॥ स वै समस्तपूर्व्वस्थोऽव्यक्तस्येशस्य दर्शकः । सदात्मनाग्निना
चापि संस्करिष्यति वस्तदा ॥२९॥ शूर्पधारी स वै शस्यं स्वे खले संग्रहीष्यति । तुषं तु
वह्निना सम्यगनिर्व्वाणेन धक्ष्यति ॥३०॥ शिष्य उवाच ॥ समूह्यं तत्र संबुध्ये मलाकीयोदितं
गुरो । अधर्म्म्यदाहिनं भक्तान् पुनन्तं तु सुवर्णवत् ॥३१॥ यं महाप्रभुणा धार्य्यं प्रस्ताव्यं
तत्वरेण च । अलीयेनेति स प्रोचे तथा चाहाप्यसौ वरः ॥३२॥ प्रश्नागमाह उग्रस्तु कथं
पश्चाद्बभूव सः । गुरो त्वत्तो मया श्राव्यं सन्देहजनकं हि तत् ॥३३॥ पृच्छामि त्वधुना किं

य आरूढोऽभूज्ज्वलद्रथे । अलीयः स पुनर्जातो योहन्निर्जकरीयजः ॥३४॥ गुरुरुवाच ॥
पुनर्जन्मवचो यद्वै विप्रैर्वेदेषु कल्पितं । तन्मा बुध्यस्व शिष्यात्र खृष्टीये वचसि स्थितं ॥३५॥
नैकत्वं हि तयोर्ज्ञेयं यथा ज्ञातं फरीष्यकैः । मलाकीयस्य तद्वाक्यात्सौसादृश्यं तु केवलं ॥३६॥
यथाभूद्धि महालीयः पुरा प्रान्तरवास्यसौ । ईशसाक्ष्यपवादीवाभयो बेलार्च्चिनां सदा ॥३७॥
तथा सोऽलीसबापुत्रो बलवानीश्वराग्रगः । अलीयस्यात्मशक्त्याप्तो जातस्येव पुनर्भुवि ॥ ८
३८॥ तथैवास्य हि पित्रेऽपि शीलं दूतेन चोदितं । योऽधुना प्रान्तरे धर्म्मं मन्दमार्गान
शिक्षयत् ॥३९॥ यं चापि प्राङ्मलाकीयाज्ज्वालस्पृष्टः प्रवाचकः । खृष्टागमवचोमध्ये
वर्णयद्वै तथा स्फुटं ॥४०॥ इषाय उवाच ॥ ध्वनिः प्रान्तरे घोषतः संश्रुतो वै स्वयम्भूकृतेऽहो
मृतिं प्रस्तुयात । महारण्यमध्येऽपि सिद्धं कुरुध्वमृजुं चैव मोक्त्रे न ईशाय मार्गं ॥४१॥ तदग्रे

खिलोपत्यका उत्पतन्तु महीध्राः सपादाः पतन्त्वेव भूमौ । अथ जूयतां कुञ्चितं वर्त्म सर्वं सुगम्याः स्युरेवाखिलाः शर्कराश्च ॥४२॥ ततस्तेज ईशस्य दिष्टं विमुक्त्यै सकृद्द्रक्ष्यतीतो नराणां समूहः । यतो वाक्यमेतद्विनिर्णीतमार्य्यं स्वभूनामधेयस्य वक्त्रेण प्रोक्तं ॥४३॥ गुरुरूवाच ॥ इत्यूचे भव्यवाच्यग्रः किन्तु तेजस्तदैश्वरं । प्रादुर्भूतं कथं शिष्य वर्णनीयं मयाधुना ॥४४॥ सन्देहजनकं तत्तु परीक्षाकरणं प्रभोः । येनाग्निनेव सङ्गत्तान् पुनात्य ९
र्च्चनपूर्त्तये ॥४५॥ भिनत्त्यधर्म्मिणस्त्वेभ्यः परिदह्यांस्तथेध्मवत् । सकृन्न भुत्स्यसे शिष्य खृष्टस्य प्रथमायनात् ॥४६॥ तच्चरित्रात्समस्तात्तु तथा तत्कार्य्यसंघतः । शूर्पपावकदृष्टान्तौ विनिर्णीतौ भविष्यतः ॥४७॥ अधुनैतत्तु बुध्यस्वाग्रसरस्य ध्वनेः स्फुटं । अनुतापं विना घोरा मोक्तुरप्यागतिः प्रभोः ॥४८॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (इषायभव्यवाक्यानां वत्वा

रिंशसर्गाच्छान्तमत्थायलूकयोस्तृतीयसर्गाच्छान्तमार्कयोहन्न्योः प्रथमसर्गात्फ्लाव्ययोसेफरचिता द्यहूदिपुरातनप्रबन्धाच्चोद्धृतः) प्रान्तरघोषणं नाम द्वितीयोऽध्यायः ॥

गुरूरुवाच ॥ श्रीयेषूर्नाम मोक्षाथ त्रिंशदायुस्तदा स्थितः । धन्यां त्यक्त्वा मरीयां वै नशरेतो विनिर्गतः ॥१॥ यर्द्दाननिकटां भूमिं शरारण्यावृतां ययौ । बन्धोश्चिरमदृष्टस्य संलिप्सु र्जलसंस्कृतिं ॥२॥ आयातं तं तु संदृश्य भद्रस्तस्याग्रगस्तदा । निषेद्धुमभिलाषीदं वचोऽवा १८
दीत्समादरं ॥३॥ योहन्निरुवाच ॥ भवतो वै मया योग्यं संलब्धुं जलसंस्कृतिं । आगत्य त्वं कथं शुद्ध्यै मत्तस्तां प्राप्तुमर्हसि ॥४॥ श्रीयेषूरुवाच ॥ साम्प्रतं तत्तथैवास्तु यतो रीत्यामुयापि वै । पूरणीयमितोऽस्माभिः समस्तं धर्म्ममण्डलं ॥५॥ गुरुरुवाच ॥ तच्छ्रुत्वाग्रसरो वाक्यं विरत्याथ निषेधनात् । स्नानेन संस्करोति स्म बन्धुं निर्मलमप्ययमुं ॥६॥ यं शीला

दनुमित्यादाविदानींमैशलक्षणात् । निश्चिचाय स्वप्रोक्तं तं पूर्वं विक्रमवत्तरं ॥७॥ यद्दानि
सलिलाञ्चैव पुनरायाति संस्कृते । येष्वि प्रार्थयमाने च विभिन्नमिव खं बभौ ॥८॥ ईश्व
रात्मापि तन्मूर्द्ध्नि संपपात कपोतवत् । आकाशवाण्यपि यक्ता तदुपर्य्यैतदब्रवीत् ॥९॥
श्रीस्वयम्भूरुवाच ॥ पुत्रोऽयं मेऽतीवप्रीतः । यस्मिन् सम्यक् सन्तुष्टोऽहं ॥१०॥ गुरुरुवाच ॥
इति साक्ष्यं परं प्राप्य पितुर्वै पुत्र ईश्वरः । सदात्मनस्तथैवैनं समाच्छादयतश्छदैः ॥११॥ ११
योहन्निना स निर्णीतोऽभिषिक्तः ख्रीष्ट इत्यतः । स्वश्रद्धेभ्यस्तथा दायी यः सदात्माग्निसंस्कृतिं ॥
१२॥ ईशपुत्रांश्च तच्छक्त्या तांस्तथैव करिष्यति । अनुजातान् न मर्त्यानामिष्टया किन्तु परा
त्मनः ॥१३॥ तत्कार्य्यं विद्धि शब्दस्यावतीर्णस्य नरान्तरे । वसतश्च नरो योऽपि ख्यातोऽ
स्माभिः सहेश्वरः ॥१४॥ यच्छिष्याः संस्कृताः सर्वेऽनुग्राहिण्या तदाज्ञया । ईशनामत्रये

ऽभिन्ने पितृपुत्रसदात्मनां ॥१५॥ पश्चात्त्वेतद्वचो भव्यं किन्तु यत्साम्प्रतं स्फुटं । खृष्टसंस्कार

वाक्याद्वै बोध्यं तच्छिष्य वच्मि ते ॥१६॥ नृणामेकेन खृष्टेन सम्यक्तुष्टः पितेश्वरः । तस्मा

दात्मजमात्रेणाथान्विच्छानुग्रहं पितुः ॥१७॥ शास्त्रं हि मोसिना दत्तं दोषकृद्भ्यो भयानकं ।

अनुग्रहस्तु सत्यं च येषूखृष्टेन संस्थितं ॥१८॥ अव्यक्तमीश्वरं मर्त्यो न ददर्श कदाचन ।

तदङ्कस्थोऽद्वितीयस्तु पुत्रस्तं दिशति स्फुटं ॥१९॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि १२

(शान्तमत्थायस्य तृतीयचरमसर्गाभ्यां शान्तमार्कयोहन्न्योः प्रथमसर्गाच्छान्तलूकस्य तृतीयसर्गा

च्चोद्धृतः) ईश्वरसंस्कारो नाम तृतीयोऽध्यायः ॥

गुरुरुवाच ॥ समाप्तेऽथ स्वसंस्कारे येषूर्यर्द्दानितीरतः । प्रान्तरेऽगात्परीक्षायै स्वबलस्या

घसंजितः ॥१॥ तत्रानयत्सदात्मा हि तं द्वितीयादमं वरं । परीक्ष्यं द्वेषिणा तेन येनाद्योऽघे

प्रवर्त्तितः ॥२॥ तत्रैकाकी स्थितो वै सोऽमलो व्याप्तः सदात्मना । सोऽस्यलोयाविवोऽपोष्य
चत्वारिंशद्दिनेष्वतः ॥३॥ आरण्यपशुभिः सार्द्धमियत्कालं स संस्थितः । तेभ्यो हिंस्रतरस्यापि
सेह आक्रमणं द्विषः ॥४॥ शिष्य उवाच ॥ स द्वेषी को गुरो येनाकृष्टोऽघे प्रथमो नरः । यस्य
चाक्रमणात्सेहे द्वितीयः स परीक्षणं ॥५॥ गुरुरुवाच ॥ तं शिष्य स्मर पूर्व्वोक्तं द्वेषिणं यस्य
मन्त्रणात् । पापे मग्नौ नृणामाद्यावीशं तत्प्रापतुर्वचः ॥६॥ सपत्या अधुना नार्य्या दण्डि १ः
ताया मया सुतः । पार्ष्णिघातोऽपि नागेन तन्मूर्द्धानं हनिष्यति ॥७॥ तं तदा नागरूपस्थं
विद्धि भूतासुराधिपं । स्वसत्त्वरहितं गर्व्वाद्भूतमीशरिपूकृतं ॥८॥ यः सह स्वानुगैर्दूतैस्ततोऽ
रिः सर्व्वदा नृणां । लोभिनां कर्षकः पापे भद्राणां चाभिशापकः ॥९॥ ततः साटान आब्रह्वै
र्घबलो यवनैस्तथा । अभिशापोति च ख्यातो डिट् सोऽयोबादिधर्म्मिणां ॥१०॥ तस्य राज्यं

महत् ख्यातनारीपुत्रायणावधि । भ्रान्तिधूर्त्तत्वहिंसाद्यैः सर्व्वस्यां स्थापितं भुवि ॥११॥ सोऽधुना
संस्कृतं ज्ञात्वा साक्षितं चेश्वरेण तं । प्रियपुत्रं ततोऽपि स्वमुर्द्धध्नीभयमन्वभूत् ॥१२॥ तन्नीत्या
प्रान्तरे गत्वा येषूं दीर्घोपवासतः । क्षुधोदन्यापरिक्लान्तमभ्यवादीत्परीक्षकः ॥१३। अभिशा
प्युवाच ॥ चेदीशस्य मरुभ्रान्तव्यूहपोष्टुः सुतो भवेः । स्वाज्ञयैतद्दृशत्नस्त्वं तदान्नं कर्त्तुमर्हसि ॥
१४॥ श्रीयेषूरुवाच ॥ नाहीमि लिखितं ह्येतदीशशास्त्रे स्मराम्यहं । तेषामेवोपदेशाय मरुभ्रान्तैस्त्र १६
येलिनां ॥१५॥ दृश्यान्नभोजनत एव नरो न जीवेत् किंत्वीश्वरस्य वदनोत्थितसर्व्ववाक्यात् ।
इत्यब्दविंशयुगलभ्रमणैः परात्माज्ञातान्नसंवितरणेन च वो यनक्ति ॥१६॥ गुरुरुवाच ॥ इति मौस्यं
वचः श्रुत्वा येषूक्तमभिशापकः । शठत्वोच्छेदतो ह्रीणो भग्नाशश्चाभवत्ततः ॥१७॥ न हि तस्योत्तरा।
ज्ज्ञातं स ईशस्य सुतो न वा । न चेश्वरवचःश्रद्धा तस्यानिक्षुधया जिता ॥१८॥ ततःसोऽचिन्तय

न्नैनं शक्नोम्याद्दिमसृष्टवत् । कामेन वञ्चितुं किंतु परीक्षिष्ये‌ऽथ लिप्सया ॥१९॥ तस्मादेनं महा
त्मानं नीत्वोर्द्धेऽद्रावकल्पयत् । निमिषे संचितमिव सैश्वर्य्यं राज्यमण्डलं ॥२०॥ प्रत्यग्दि
श्यैश्वरीं रोमां दक्षिणोत्तरयोस्तथा । तत्साम्राज्यं ततं सौम्यमैगुप्तयवनादिजित् ॥२१॥
प्राच्यां तु परदानां वै वीराणां राज्यमुच्छ्रितं । दूरं वाग्न्यां तटे गाङ्गे काण्वराज्यं सुहेमकं ॥
२२॥ तदाद्यं सर्व्वमूर्द्धेऽद्रावादर्श इव स प्रभुं । दर्शयित्वा ततो गर्व्वादिदमभ्यब्रवीद्वचः ॥ १५
२३॥ अभिशाप्युवाच ॥ सर्व्वं मेऽस्तीदमैश्वर्य्यं तथा यं यं वृणेऽप्यहं । तस्मै देयमतश्चेन्मां प्रणमे
स्तेऽखिलं भवेत् ॥२४॥ श्रीयेषूरुवाच ॥ रेऽभिशापिन् वहिर्याहीशशास्त्रे लिखितं यतः । स्वभूसं
ह्लेशमात्रं त्वं प्रणमेरर्च्चयेश्च वै ॥२५॥ गुरुरुवाच ॥ इत्येतन्मौस्यवाक्येन पुनर्दूरीकृतः शठः ।
अजेयं कामलोभाभ्यामवेद्येषू समन्ततः ॥२६॥ किंतु पूर्व्वमहं येन तमोगर्त्ते निपातितः ।

आत्मगौवरदर्पेण परीक्षिष्ये॰धुनापि तं ॥२७॥ इति संकल्प्य हिंस्रस्तं नीत्वा पुण्यपुरे
ततः । महामन्दिरचूडानामेकस्यामार्पयच्छुचिं ॥२८॥ दर्शयित्वा ततो॰प्येनं विविधैशगृहा
जिरं । पुरोधो॰चैकसंपूर्णं तदा धूर्त्तो॰ब्रवीदिदं ॥२९॥ अभिशाप्युवाच ॥ चेत्त्वमीश्वरपुत्रः
स्या निजमन्दिर आगतः । ततः पितृवचःश्रद्धां दर्शयादर्य्यलक्ष्मणां ॥३०॥ अविश्वासं वि
हायार्य्य प्रस्कदस्वामुतो॰प्यधः । स्मरन् यत्ते पिता दाविदीशभक्तः पुरा जगौ ॥३१॥ १६
ईशाश्रयाप्तं न विपत्स्पृशेत्त्वां कार्य्या हि ते रक्षिण ईशदूताः । यद्वोरहस्तैः सुधृतः सदा
त्वमतो भवेर्नापि शिलाहताङ्घ्रिः ॥३२॥ गुरुरुवाच ॥ इति वाक्याद्दुरात्मा स पुण्य
ग्रन्थे॰पि संस्थितात् । गर्व्वोन्मादौ प्रमित्सुर्वै प्रापैतत्स्पष्टमुत्तरं ॥३३॥ श्रीयेषूरुवाच ॥ न
करिष्यामि लिखितं यस्माद्वै शास्त्र ईश्वरे । मृषा स्वप्रभुव ईशस्य मागच्छेस्त्वं परीक्षणं ॥३४॥

गुरुरुवाच ॥ श्रुत्वेत्थं त्रितयं मौस्यं पापसंरोधकं वचः । नेन नारीसुतेनैव प्रोदितं संशया
ड्डिना ॥३५॥ ततस्तममलं ज्ञात्वा यथार्नैकोऽप्यभून्नृणां । कामलोभाभिमानं च संक्षुभ्यन्तं
रिपुत्रयं ॥३६॥ भग्नाशः सर्व्वतोऽपश्यदादिसृष्टस्य यं जयं । पुराप प्रतिविक्षेप्यं ड्डितोयेनाद
मेन तं ॥३७॥ तस्मात्तर्हि शठः शुद्धं विहायासूयकः प्रभुं । स्वानुगैरचिरात् क्षेप्तुं दुर्नृभिः
समकल्पयत् ॥३८॥ नत्ववेत्स विमूढोऽस्माद्धिंसासंकल्पनात्स्वकात् । पार्ष्णिमात्रं प्रभोर्घात्यं १७
स्वं शिरस्तु सशक्तिकं ॥३९॥ प्रान्तरे तु ततस्त्यक्त ईश्वरस्य सुतोऽमलः । हते संकल्पनादर्शे
तत्परीक्षात्रये दृढे ॥४०॥ स्वर्गदूतैस्ततो भक्त्या सेवितोऽभून्महात्मकः । यावद्यर्द्धानितारे न
योहन्निं प्रत्यगात्पुनः ॥४१॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मोसिरचितपञ्च
शास्त्रे योनिर्निःसृत्यनुवाक्यस्कन्धेभ्योऽनुवाक्यस्कन्धस्य तु षष्ठाष्टमसर्गाभ्यां राजचरित्रादयोबय

न्याद्वाविज्ञीतानामेकनवतितमाच्छान्तमत्थायलूकयोश्चतुर्थसर्गाच्छान्तमार्कस्य प्रथमसर्गाच्चोद्धृतः)

परीक्षकपराजयो नाम चतुर्थोऽध्यायः ॥

गुरुरुवाच ॥ एतस्मिन् समये कीर्त्तिः स्नापकस्य महागुरोः । यिरूषलेममध्येऽपि विस्तृता
श्रेष्ठसंसदि ॥१॥ संशयोच्छेदनार्थं ते ततो लैव्यान् सयज्वनः । फरीशाचारिणः प्रैरन् सुस्ना
नादिविधायिनः ॥२॥ तेऽभिसंगत्य यर्द्दानिं तीर्त्वाचापि पिरायके । देशे यस्यान्तिपाः सो १८
ऽभूत्सगलीलस्य पादपः ॥३॥ तत्तटे संस्थितं प्राप्य योहन्निं तं महागुरुं । स्थाने बेथावरे लोकान्
संस्कुर्व्वन्तं तथाब्रुवन् ॥४॥ लैव्या ऊचुः ॥ भवतः प्रष्टुमिच्छामः सन्न्यासिन् धर्म्मशिक्षक ।
किं खृष्टोऽसि किमन्यो वा प्रधानैः प्रेरिता वयं ॥५॥ गुरुरुवाच ॥ इति श्रुत्वा तु योहन्निर्न
खृष्टोऽस्मीति तान् स्फुटं । प्रत्यवादीत्ततस्त्वेव स तैः पृष्ट इदं पुनः ॥६॥ लैव्या ऊचुः ॥ तदा त्वं

किमलीयोऽसि नोद्यं खृष्टागतेः पुरा । यं प्रतीक्षामहे सर्वेऽधीतग्रन्था यहूदिनः ॥७॥ गुरुरुवाच॥
तत्परेऽपि स योहन्निर्नालीयोऽहं पुरातनः । पुनरेत इति प्रोच्य तैस्तृतीयमपृच्छ्यत ॥८॥
लैया ऊचुः ॥ तदा त्वं किं प्रवक्तासौ महतोक्तोऽपि मोसिना । सर्वैः श्राव्यो भविष्यंश्च तस्मादेव
महत्तरः ॥९॥ गुरुरुवाच ॥ तत्पश्चादपि योहन्नौ नास्मीत्युक्तवति स्फुटं । महासंशयमारुह्य
ते तमभ्यब्रुवन्निदं ॥१०॥ लैया ऊचुः ॥ तदा कस्त्वं गुरो तद्धि योग्यमस्माभिरीरितैः । १९
सुनिश्चेतुं प्रकाशाय प्रधानानां यहूदिनां ॥११॥ योहन्निरुवाच ॥ ध्वनिः प्रान्तर एकस्य
घोषतो यः प्रवाचिना । इषायेनोच्यते तं नु वित्त यूयं एवं मम ॥१२॥ लैया ऊचुः ॥ यदि
त्वं न भवेः खृष्टो नालीयो वा तदग्रगः । पुनरेतो भुवि न वा प्रवाच्येष महत्तरः ॥१३॥
संस्करोषि कथं स्नानाद्यत्फरीषिमतैर्बुधैः । ज्ञेयं वै नवशास्त्रस्य सर्वैः श्राव्यस्य लक्षणं ॥१४॥

योहन्निरुवाच ॥ संस्करोमि जलस्नानादहं किंत्वन्तरेऽपि वः । स्थितोऽन्यो यमिदानीं वै
यूयं न विविदा बुधाः ॥१५॥ आगामी मत्परे योऽपि मत्तो विक्रमवत्तरः । यत्पादूबन्धमप्यहों
न विमोचयितुं ह्यहं ॥१६॥ गुरुरुवाच ॥ इति वेथावरेऽसौ वै येषूखृष्टेऽप्युपस्थिते । फरी
षानब्रवीदेतान् शास्त्राध्यातॄनबोधिनः ॥१७॥ तत्परस्मिन् दिनेऽतस्तु स आगच्छन्तमन्तिके ।
येष्वं दृष्ट्वाब्रवील्लोकांस्तथा सर्वानुपस्थितान् ॥१८॥ योहन्निरुवाच ॥ अहो जगत्पापहरोऽम
लोऽयमीशार्पितो यज्ञकृतेऽविवत्सः । आगामिनं यं किल मत्परेऽपि मत्पूर्वसंस्थं सततं ह्यवोचं ॥
१९॥ तत्वाद्रितस्तं स्वनुभूय मुक्त्यै हितं नृणामित्यधुना ब्रवीमि । किंत्वैस्रयेलानुपदेष्टुमेनं
संस्कारकोऽद्भिः खलु प्रेरितोऽहं ॥२०॥ अस्य संपतितं मूर्ध्नि समपश्यं कपोतवत् । स्वनेत्रा
भ्यां सदात्मानं तत्र चैव युतं स्थितं ॥२१॥ न चाहं स्वानुभूतेस्तं तदाज्ञानं विमुक्तिदं ।

कितु नुन्नवतो मां वै परमेशस्य वाक्यतः ॥२२॥ यस्मिन् मनुष्ये पतितं समीक्ष्य स आत्मा
नमैशं तदुपर्यपि स्थितं । ज्ञेयस्त्वयातोऽस्त्ययमेव स स्वकान् यः संस्करिष्यत्यखिलान् सदा
त्मना ॥२३॥ इति पूर्व्वोपदेशेन विनीतोऽहं स्मृतेन वै । सत्यमीशस्य तं पुत्रं प्रत्यायं लक्ष्म
दृष्टवान्॥२४॥ गुरुरुवाच ॥ एतस्मात्तु महासाक्ष्यात्परस्मिन्नपि वासरे । संस्थितस्तत्र योह
न्निर्वृतः शिष्यद्वयेन ह ॥२५॥ येषूं दृष्ट्वा चलन्तं तौ प्रसन्नोऽभ्यब्रवीद्वचः । अहो ऽविवत्स २१
ईशेनार्पितः पापहरोऽमलः ॥२६॥ इत्याचार्य्यस्य तौ श्रुत्वा ख्रृष्टसंदेशकं वचः । तं हित्वानु
गतौ नूतनं गुरुं विक्रमवत्तरं ॥२७॥ तयोरेकोऽन्द्रियो नाम सीमोनस्य सहोदरः । द्वितीयस्तु
स योहन्निः शान्तात्मा जिबिदीयजः ॥२८॥ तौ तदानुगतौ येषूं मध्याह्ने निकटे सति ।
आलयं तव कुत्रास्ति गुर इत्यभ्यवोचतां ॥२९॥ एतद्वचनमाकर्ण्य समालोक्य च तौ प्रभुः ।

प्रत्युवाचालयं मे नु युवामभ्येत्य पश्यत ॥३०॥ तदनुग्रहमाप्त्वातो गतौ तौ प्रभुवेश्मनि ।
तेन सार्द्धं महाहर्षात्सर्वं शेषदिनं स्थितौ ॥३१॥ अन्द्रियस्तु ततोऽन्विष्य सीमोनं स्वस
होदरं । अभ्यूचेऽस्माभिरत्राप्तोऽभिषिक्तोऽसौ महानिति ॥३२॥ तथा खृष्टान्तिके भ्रात्रा
नीतो हृष्टमना अयं । अथ शुश्राव तत्प्रोक्तं वच एतद्रहस्यकं ॥३३॥ श्रीयेषूरुवाच ॥ विद्यसे
त्वं नु सीमोनो योनस्य तनयाधुना । पश्चात्कैफाभिधस्तु स्या यदर्थः प्रस्तरः स्थिरः ॥३४॥ २२
गुरुरुवाच ॥ परेद्यवि ततो येषूर्गलीलां गन्तुमिच्छुकः । दृष्ट्वा कंचित् फिलिप्पाख्यं मा
मन्वेहीत्यवोचत ॥३५॥ यो गलीलाप्रदेशस्य वेथ्शैदाभिधात्पुरात् । अन्द्रियप्रस्तराभ्यां
वै न्युषितान्निःसृतोऽभवत् ॥३६॥ स ततो नथनैलं तु मित्रमासाद्य हर्षतः । अपि वार्थुलु
मायाख्यमेतदभ्यब्रवीद्वचः ॥३७॥ फिलिप्प उवाच ॥ य उक्तो मोसिना शास्त्रे प्रवाच्युक्तश्च

सोऽधुना । प्राप्तो योसेफजो येषूर्निःसृतो नशरेत्पुरात् ॥३८॥ नथनैल उवाच ॥ अथ वै
भद्रमायातुं किंचिच्छक्नोति मत्प्रिय । फिलिप्प नशरेतोऽस्मात्प्रधानानुषितात्पुरात् ॥३९॥
गुरुरुवाच ॥ तथा प्रोक्तः फिलिप्पः स एत्य पश्येति केवलं । प्रत्युच्य नथनैलं तं येषूसंमुख
मानयत् ॥४०॥ यं दृष्ट्वाथ समायान्तं प्रभुरेतदवोचत । विनिर्णीतैस्त्रयेल्योऽयं रहितोपधि
मानसः ॥४१॥ तच्छ्रुत्वा नथनैलस्तु मां भवान् कथमन्वभूत् । इति पृष्ट्वाथ ख्रृष्टस्य संशुश्रा २३.
वेदमुत्तरं ॥४२॥ श्रीयेषूरुवाच ॥ फिलिप्पाह्वयनात्पूर्व्वमपि वै पर्क्कटीतले । आसीनं त्वामहं
दूरादपश्यं स्थिरनिश्चयं ॥४३॥ गुरुरुवाच ॥ तद्वाक्याद्विस्मयं प्राप्य शरलः सोऽनदत्तदा ।
गुरो त्वं पुत्र ईशस्य त्वं राजैवेस्त्रयेलिनां ॥४४॥ इदं प्रत्ययवाक्यं तु लब्ध्वासौ सर्व्ववित्प्रभुः ।
तथा बार्थुलमायं तं शेषांश्चाप्यभ्यवोचत ॥४५॥ श्रीयेषूरुवाच ॥ प्रत्येष्यथ मया दृष्टो यतस्त्वं

पर्क्कटीतले । महत्तराणि किंत्वेभ्यः कर्म्माणीक्षिष्यसे परे ॥४६॥ निश्चयं हि विभिन्नं खं दूतांश्च द्रक्ष्यथैश्वरान् । रोहतः पततश्चैव नरसूनोर्म्ममोपरि ॥४७॥ गुरुरुवाच ॥ इत्येष नरपुत्राख्योऽवतीर्णः शब्द ऐश्वरः । परे भाव्याद्भुतान्येव गुप्तवाक्यैरवर्णयत् ॥४८॥ गलीलां तु तदा यत्र स्वमिषायोदितं यथा । प्रकाशं दर्शयेत्पुर्व्वं तां शिष्यैरन्वितो ययौ ॥४९॥

इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (शान्तयोहन्निरचितमङ्गलसमाचारस्य प्रथमसर्गा दुद्धृतः) प्रभुसाक्ष्यसंवादो नाम पञ्चमोऽध्यायः॥ २४

शिष्य उवाच ॥ गलीलायां कथं त्वैशं तदादर्शयदन्तके । भ्रमञ्यो मोहगर्त्तेऽथ प्रकाशं स नरात्मजः ॥१॥ गुरुरुवाच ॥ ज्वालस्पृष्टस्य वाक्यं ते स्मरते भव्यवाचिनः । इदानीं कथयिष्यामि तत्प्रादुर्भावमग्रिमं ॥२॥ येष्वायातेस्तृतीयेऽह्नि गालील्ये नगरे तदा । कनानाम्न्येव

कस्मिंश्चिन्नगरेत्पुरसन्निधौ ॥३॥ अभवत्कस्यचिद्गेहे महान् पाणिग्रहोत्सवः । मरीयाऽयत्र
येषूश्च तच्छिष्याश्च निमन्त्रिताः ॥४॥ बहुभोजनपश्चात्तु हसतीह सुरारसे । येषूमभ्यब्र
वीन्माता नैतेषां वर्त्तते सुरा ॥५॥ इदं मातुः स धन्यायास्तन्माहात्म्यप्रकाशनं । तत्क्षणेऽपि
प्रतीच्छन्त्या निशम्य प्रत्युवाच तां ॥६॥ श्रीयेषूरुवाच ॥ मातः किं वै त्वया सार्द्धं कार्य्येऽस्मि
न्वर्त्तते मम । न हि सांप्रतमायातं विद्धि मे समयं हितं ॥७॥ गुरुरुवाच ॥ इतो भव्यं मह २५
त्कर्म्मानुमाय जननी तदा । दासान्प्रोवाच यद्यद्वोऽयं दिशेत्कुरुताशु तत् ॥८॥ स्थितास्तु
संमुखे तेषां पंचद्रोणमिता इव । षट्संख्या अश्मकलशाः शुद्धीकृत्यै यहूदिनां ॥९॥ अथ तान्
वारिणा येषूः संपूरयितुमादिशत् । तस्मिंश्चाचरिते दासैः स तदाज्ञापयत्पुनः ॥१०॥ श्रीये
षूरुवाच ॥ एतेभ्यः परिपूर्णेभ्यः कलशेभ्योऽधुना द्रवं । निःसार्य्यानयत क्षिप्रं यूयमध्यक्षसंमुखे

॥११॥ गुरुरुवाच ॥ ततो निःसारयन्तस्ते दासा यत्कलशोदरे । आसीद्वारि तदापुस्ते वि
कृतस्वादवर्णकं ॥१२॥ तं सुरीकृतमप्याशु नीत्वाध्यक्षं प्रति द्रवं । जानन्तस्तदजानन्तं सर्व्व
साक्षादपाययन् ॥१३॥ तद्रसं तर्ह्यसौ स्वादुं ज्ञात्वाध्यक्षोऽतिविस्मितः । प्रत्याहूय वरं प्रोचे
तन्महोत्सवदायिनं ॥१४॥ उत्सवाध्यक्ष उवाच ॥ अन्ये सुरां स्वादुतमां सखिभ्यः पूर्व्वं प्रदायाथ
सुपीतवद्भ्यः । अल्पापकृष्टां ददति त्वमेव सर्व्वोत्तमां त्वार्य्य ददासि शेषं ॥१५॥ गुरुरुवाच ॥ २६
इत्युक्त्वा सोऽशृणोत्तत्र सुरां सर्व्वोत्तमामिमां । न करेण प्रदत्तां वै किंत्वद्भ्यो विकृतामिह ॥
१६॥ ज्ञातं चातो वराद्यैस्तद्येषूमाहात्म्यलक्षणं । उत्सवस्योत्तमः शेष इति विश्वासिभिः
स्मृतं ॥१७॥ आद्यमेतत् कनापुर्य्यां स्वप्रतीतिकृतेऽकरोत् । संस्कृतः स परीक्षायाः परं ऐश्वर्य्य
भासनं ॥१८॥ यो वै संसारभोग्येषु क्षयं गच्छत्सु सर्व्वशः । असत्सु च ददात्येकः सच्चिदानन्दकं

रसं ॥१९॥ स्रष्टा यः सर्व्ववस्तूनां पालको नाशकोऽपि च । शेषे दायी स्वप्रीतेभ्यो विवाहोत्सव
मुत्तमं ॥२०॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (शान्तयोहन्निरचितमङ्गलसमाचार
स्य द्वितीयसर्गादुद्धृतो) विवाहोत्सवप्रभावो नाम षष्ठोऽध्यायः ॥

गुरुरुवाच ॥ नगरेतं ततस्त्यक्त्वा समातृभ्रातृशिष्यकः । येषूः कपर्णहूमाख्यं नगरं परम
भ्यगात् ॥१॥ यद्गलीलाहृदस्यैव महतो रोधसि स्थितं । गिन्नेसाराभिधानस्य बहुनौधीव
रावृते ॥२॥ न बहूनि त्वतोऽतिष्ठन् दिवसान्यत्र ते तदा । त्राणपर्व्वण्युपेते हि सर्व्वश्रेष्ठे यहू २७
दिनां ॥३॥ तदा यिरूषलेमं तैर्गन्तव्यं प्रभुणापि च । संस्कृतेनाधुना वेश्यं यथोक्तं निज
मन्दिरं ॥४॥ शिष्य उवाच । मलाकीयेन यः प्रोक्तः प्रवेशः प्रेरितेऽग्रगे । चरे प्रभोरभीष्टस्य
कथं सोऽभूत्तदा गुरो ॥५॥ गुरुरुवाच ॥ यत्स्वान्तोपस्थितौ तत्र देयमैश्वर्य्यदर्शनं । प्रभुणा

तदिदानीं च गुरुत्वारम्भणेऽप्यभूत् ॥६॥ मन्दिरं स्वं प्रवेक्ष्यन् हि सोऽविवत्साभिधोऽमलः ।
स्मार्य्येऽविवत्समेधेन महात्राणेऽब्रहोद्भवां ॥७॥ अवापाजिरमध्यस्थान् महापर्व्वार्थमागतान् ।
सोक्षमेषकपोताद्यान् विक्रेतॄन् बणिजोऽपि च ॥८॥ मेध्यार्पणच्छलेनैव तत्क्रियानुमतिं हि ये ।
तत्रापुर्लुब्धयज्वभ्यो धनदानैः सदोत्सवे ॥९॥ अथ स क्रोधतः खृष्टः कशां निर्म्माय रज्जु
भिः । पशून् सर्व्वान् सविक्रेतॄन्निरास्यन्मन्दिराजिरात् ॥१०॥ बणिजां चापि वीथीः स सहमु २८
द्रा अधोऽक्षिपत् ॥ कपोतानां च विक्रेतॄनिदमेवाब्रवीद्वचः ॥११॥ श्रीयिषूरुवाच ॥ क्षुद्राण्येतानि
सर्व्वाणि नयत त्वरितं वहिः । मत्पितुर्गृहमेवार्च्चं मा कुरुध्वं बणिग्गृहं ॥१२॥ तत्तु दृष्ट्वा
प्रभोः कर्म्म क्षारवद्वै प्रमार्जितः । मन्दिरं लोभमलिनं शिष्या अल्पविदोऽपि ते ॥१३॥ मत्त
मीश्वरप्रेम्णा तं संजानन्तोऽस्मरंस्तदा । यद्गीतं खृष्टपित्रा वै पुरा राज्ञेस्रयेलिनां ॥१४॥

दाविदुवाच ॥ गिलितो ऽस्म्यपि मुक्तिनाथ ते ऽर्च्चगृहार्थे ऽतिकुतूहलोर्म्मिभिः । तव चाप्यपवा
दिनां सदा ऽधमवाक्यैर्मन आहतं मम ॥१५॥ गुरुरुवाच ॥ तत्स्पष्टार्थं पुरोक्तं ते ऽस्मरन् किंतु
यहूदिनः । अन्ये तन्निर्भयं कर्म्म दृष्ट्वोचुरिदमीर्षया ॥१६॥ यहूदिन उचुः ॥ य एतत्कुरुषे
कार्य्यं केवलं श्रेष्ठयज्वभिः । त्वं नो गालील्य किं चिह्नं त्वदैश्वर्य्यस्य दर्शयेः ॥१७॥ श्रीयेषू
रुवाच ॥ एतद्वै निन्दकांश्चिह्नं दर्शयिष्यामि वो ऽचिरात् । युष्मद्भग्नमिदं त्र्यहे निर्म्मास्यन् २९
मन्दिरं पुनः ॥१८॥ यहूदिन उचुः ॥ एतन्मन्दिरनिर्म्माणं पारसीकाधिपाज्ञया । षट्चत्वा
रिंशदब्देषु समाप्तं तत्परे श्रुतं ॥१९॥ त्वमियत्कालनिर्म्माणं यदि भग्नं त्वदुक्तितः । कथं
शक्नोषि गालील्य त्र्यहे रचयितुं पुनः ॥२०॥ गुरुरुवाच ॥ इति तैर्न विदद्भिर्वै रहस्यं वचनं
प्रभोः । तदा प्रत्युदितं पश्चाच्चाप्यतः स्मृतमीर्षकैः ॥२१॥ तच्छिष्याश्चापि न तदा बुध्यमाना

इदं वचः । तन्मृत्यूत्थापनात्पश्चात्तदर्थं स्फुटमस्मरन् ॥२२॥ यद्युक्तं मन्दिरं तेन सदैश्वर्य्या
लयं वरं ॥ अवतीर्णस्य देहं तदीश्वरात्मप्रतिष्ठितं ॥२३॥ शिष्य उवाच ॥ तदैतत्त्राणपर्व्वार्थं
समेतानां यहूदिनां । किं न केचित्प्रतीयुः स्वे मन्दिरे प्रभुमागतं ॥२४॥ गुरुरुवाच ॥ फरी
शाद्यगणाः शिष्य नैच्छन् हीनधनोच्छ्रयं । गालील्यैरन्वितं नान्यैस्तं ख्रीष्टमिति वेदितुं ॥२५॥
तस्मात्तत्स्पष्टलक्ष्माणि व्यमन्यन्तैव गर्व्विणः । यहूद्याल्पविदोऽप्यन्ये तं प्रतीयुः प्रवाचिनं ॥ ३०
२६॥ किंतु तेभ्योऽपि तत्रासौ ख्रीष्टोऽहमिति नाब्रवीत् । सर्व्वेषां हृन्दि जानन् हि मन्त्रिणापि
विना स्वयं ॥२७॥ ततोऽसौ कर्म्ममात्रेण प्रभुत्वं दर्शयन् स्वकं । आत्मानं नापि कस्मैचिद्गु
रुत्वादौ समार्पयत् ॥२८॥ तथाचारभत ज्ञानी प्रवाच्युक्तं परीक्षणं । कर्त्तव्यं सर्व्वभक्तानां स
... ॥२९॥ तथैव स यथा तत्र सिम्योनेनोदितः पुरा । शैशवे स युवेदानीं

स्थितस्तद्वाक्यपूर्त्तये ॥३०॥ बहूनाभिस्त्रयेलानां पातायोत्थापनाय च । बहूनां चापि गुप्ता
नामाविष्कृत्यै हि चेतसां ॥३१॥ स्थित एष शिशुर्नूनं निन्दनान्वितलक्ष्मवत् । इति वृद्धस्य
सद्वाक्यं निर्णेयं वहुशः परे ॥३२॥ शिष्य उवाच ॥ तद्वाक्यं मन्दिरे प्रोक्तं चत्वारिंशे प्र
भोर्दिने । प्रस्वै स्मराम्यहं किंतु तद्दृष्टान्तं गुरो वद ॥३३॥ गुरुरुवाच ॥ आसीत्कश्चित् फ
रीष्येषु नीकदेमाभिधो धनी । महासभ्यो यहूद्यानां समस्तैरादृतो नरैः ॥३४॥ स येष्वोऽद्भुत ३१
कर्म्माणि दृष्ट्वा यत्नादचिन्तयत् । कोऽधुनास्मास्वसावेतोऽपेक्ष्यखृष्टेषु शिक्षकः ॥३५॥ यदैव
स्नापको भक्तो गुरुं विक्रमवत्तरं । आयातं गुप्तमप्याह तीरे पृष्टोऽस्मदीरितैः ॥३६॥ तदायं
न गुरुर्वाक्यैर्योहन्नेर्यः प्रतिश्रुतः । अद्भुताचारको ह्येष ईशार्च्चार्थे कुतूहली ॥३७॥ किं वायं
नभवेद्यस्य राजाख्यस्य श्रुतं पुरा । हेरोदौ राज्ञि जन्मेह कीर्त्तितं चान्यजैरपि ॥३८॥ ईश

नुन्नं प्रवक्तारं विशेषात्खृष्टमेव न । प्रतीयां तस्य चिह्नानि दृष्ट्वा दण्ड्योऽप्यहं तदा ॥३९॥
इति चिन्तयमानो वै विश्वासाभिमुखोऽपि सः । भीत्यारुध्यत सभ्यानामन्येषां लोभगर्व्विणां ॥
४०॥ तैस्ततोऽवमतं येषूं नरसाक्षात्स वेष्टितुं । ह्रीणोऽतः प्रययौ रात्रावभ्यूचे चाकुला
त्मकः ॥४१॥ नीकदेम उवाच ॥ गुरुमागतमीशात्त्वां विद्मो नहि नरः क्वचित् । त्वत्क्रियाः
शक्नुयात्कर्त्तुं येनेशो न सहस्थितः ॥४२॥ गुरुरुवाच ॥ इत्यादरवचः श्रुत्वा नवराज्यप्र ३८
वर्त्तकः । ईशपुत्रः स तं सभ्यं सर्व्वान्तर्विद्वोचत ॥४३॥ श्रीयेषूरुवाच ॥ सत्यं सत्यं वदामि
त्वां नानुजायेत चेन्नरः । उर्द्धतः स तद्देशस्य राज्यं द्रष्टुं न शक्नुयात् ॥४४॥ नीकदेम
उवाच ॥ यो वृद्धोऽप्यब्रहोद्भूतो जायेत स कथं पुनः । मातुर्गर्भोदरे किं वै प्रविशेत्सो
ऽनुजन्मने ॥४५॥ श्रीयेषूरुवाच ॥ सत्यं सत्यं वदामि त्वां चेन्न जायेत मानवः । जलात्मभ्यां

स ईश्वरस्य राज्यं वेष्टुं न शक्नुयात् ॥ ४६ ॥ देहाद् यो जायते नित्यं तं देहं विद्धि संस्थितं । आ
त्मनो जायते यस्तु सोऽप्यात्ममात्र न संशयः ॥ ४७ ॥ यन्मया त्वधुना प्रोक्तमावश्यमनुजन्म वः ।
आब्रह्मानामपीति त्वं तस्मान्मा कुरु विस्मयं ॥ ४८ ॥ स्वयं प्रध्मा यथा वायुर्यस्य शृण्वन्नपि
ध्वनिं । अनुमातुं न शक्नोषि कुत ऎति क्व याति वा ॥ ४९ ॥ तथा सोऽप्यनुजन्मार्थः सर्व्व
दिग्व्यापकः स्वयं । शक्त आत्मा सदाव्यक्तो ज्ञेयो वै कार्य्यमात्रतः ॥ ५० ॥ गुरुरुवाच ॥ इति ३३
श्रुत्वा सुजातः स स्वयोग्यां जलसंस्कृतिं । नवराज्येऽनुजन्मार्थं स्नानाद्याचार्य्यपि ध्रुवं ॥ ५१ ॥
न तु वै जलमात्रेण कार्य्या किंत्वात्मनापि तां । अव्यक्तेनानिलेनेव परदिग्व्यापिना स्वयं ॥
५२ ॥ तत्सर्व्वं सोऽद्भुतं ज्ञात्वा निजधर्माहितः कथं । तन्नवेदिति प्रत्युच्य शुश्रावेदं प्रभोर्व्वचः ॥
५३ ॥ श्रीयेषूरुवाच ॥ त्वं नु सर्व्वैस्रयेलेषु महाचार्य्योऽभिधीयसे । तदैतन्न वचो वेत्सि स्नाना

त्मीयानुजन्मनः ॥ ५४ ॥ अति सत्यं ब्रवीमि त्वां यज्ज्ञातं दृष्टमेव यत् । तत्साक्ष्यं प्रोच्य युष्मा
भिर्नप्रतीयामहे वयं ॥ ५५ ॥ यदि लौकिकवाक्यानि न प्रतीयात मे॰धुना । मां स्वर्गीयानि
वक्ष्यन्तं प्रतीयात कथं तदा ॥ ५६ ॥ नह्येको॰पि नृणां स्वर्गमारुरोह कदाचन । मां विनातो॰
वतीर्णं वै स्वर्गस्थं च नरात्मजं ॥ ५७ ॥ पैत्तल्यं तु यथा सर्पमौषधायेस्त्रयेलिनां । प्रान्तरे
सर्पदष्टानां मोसिः स्तम्भोर्द्धमार्पयत् ॥ ५८ ॥ अर्पणीयं तथोर्द्ध चाचिराद्विधि नरात्मजं । क्षि ३४
तानां पापगरलैश्चिकित्सायै नृणामपि ॥ ५९ ॥ यस्मिन् संस्थाप्य विश्वासं सर्पदृग्लोकवन्नतः ।
न म्रियेत नरः किंतु प्राप्नुयान्नूत्नजीवनं ॥ ६० ॥ जगत्पापार्णवे मग्नमित्थं ह्यस्निह्यदो
श्वरः । यत्स स्वैकसुतं तस्य विमुक्त्यै प्राददात्स्वयं ॥ ६१ ॥ यस्मिन्नृष्ववतीर्णे वै विश्वसन्
पापकार्य्यपि । न म्रियेत नरः किंतु लभेतानन्तजीवनं ॥ ६२ ॥ न हि दण्डाय जगतः प्रै

रत्नेत्रेश आत्मजं । दण्डग्रस्यापि परंत्वस्य मुक्त्यै तन्नामशक्तितः ॥ ६३ ॥ तद्विश्वासयुतो दण्डं नैति तद्रहितस्तु यः । दण्डितः सोऽधुनाप्यस्तेशैकपुत्राप्रतीतितः ॥ ६४ ॥ प्रकाशे ह्यधुनायाते जगदभ्यन्तरे तमः । वृतं मर्त्यैः कुकर्म्मार्थं दण्डं तत्र स्थितं शृणु ॥ ६५ ॥ मन्दकारी प्रकाशाय सर्व्वो द्रुह्यति मानवः । न वा तं प्रतियात्येव स्वकर्म्माविष्कृतेर्भयात् ॥ ६६ ॥ अभ्युपैति स्वयं तं तु प्रकाशं सत्यकारकः । यतो वै तत्क्रिया भायुरीशसाक्षात्कृताः स्फुटं ॥ ६७ ॥ ३५
गुरूरुवाच ॥ तथा रात्रौ प्रकाशः स महान् सभ्यमुपादिशत् । मुक्तिदेष्टा मनुष्याणां हृच्छारल्यपरीक्षकः ॥ ६८ ॥ यद्रहस्यवचः श्रुत्वा चिन्तयंश्चापि यत्नतः । नरभीत्याकुलोऽप्येष नीकदेमो ययौ निशि ॥ ६९ ॥ कालं प्रतीक्षमाणस्तमूर्द्धमर्प्यो यदा नृणां । मुक्त्यै स नरजो येषूस्तत्प्रतीतिमगोपयत् ॥ ७० ॥ तस्योर्द्धार्पणमुग्ये तु शूले नावेत्स भावि तत् । परनिन्दान्वितं लक्ष्म

प्रकाशाद्विभ्यतां नृणां ॥ ७१ ॥ तदा शङ्का किमस्यैव पातायोत्थापनाय वा । स्थितो यिरूष
लेभे स विभावी गुप्तचेतसां ॥ ७२ ॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मोसिरचित
पञ्चशास्त्रे संख्यास्कन्धस्यैकविंशसर्गाद् द्वाविंशोतानामूनसप्ततितमाच्छान्तलूकस्य द्वितीयसर्गा
च्छान्तयोहन्नेर्द्वितीयतृतीयसर्गाभ्यांचोद्धृत) ईशार्च्चकविभावनं नाम सप्तमोऽध्यायः ॥

गुरुरुवाच ॥ त्राणपर्व्वणि संपूर्णे पुरं श्रेष्ठं सुमन्दिरं । त्यक्त्वान्यत्र यहूद्योर्व्यां येषूः शिष्याश्च ३६
संययुः ॥ १ ॥ यत्राल्पाहस्थिता एव विश्वासालम्बिनो नरान् । कांश्चित्ते स्वगुरोरर्थे संश्चक्रुः
स्नानरीतितः ॥ २ ॥ तत्समीपे स्थितश्चापि ग्राम ऐनोनसंज्ञके । बहुघट्टे स संस्कुर्व्वन् योहन्निः
स्नापकोऽग्रगः ॥ ३ ॥ आगतो हि पिरायातस्तटे तर्हि यहूदिके । अनुतापोपदेशं सोऽकरोच्चर्म्मक
टित्रकः ॥ ४ ॥ तच्छिष्याः प्राप्य कंचित्तु यहूद्यं योऽनुचारिभिः । येष्वोऽनुजन्म संलेभे जलात्मभ्यां

समुत्थितं ॥ ५ ॥ तेन शुद्धिविवादं ते कृत्वाथातकुतूहलाः १ समभ्येत्य गुरुं स्वीयमेतदभ्यब्रुवन्
वचः ॥ ६ ॥ योहन्निशिष्या ऊचुः ॥ गुरो यर्द्दानिपारे यस्त्वत्सङ्गी साक्षितस्त्वया १ सोऽधुना
स्नापयत्येव सर्व्वलोकैश्च सोऽन्वितः ॥ ७ ॥ गुरुरुवाच ॥ इदं श्रुत्वा स्वशिष्याणां वितण्डां स्वार्थ
इच्छतां १ निर्वेदनमनीर्ष्यःस प्रत्यवादीन्महागुरुः ॥ ८ ॥ योहन्निरुवाच ॥ न किंचिच्छक्नुयात्
प्राप्तुं नरो यत्स्वर्गतो न हि १ दत्तं शिष्यास्तदा कस्माद्विवदध्वे नु मत्कृते ॥ ९ ॥ किं मयेदं ३७
न वः साक्षाल्लैव्यान् प्रत्युदितं वचः १ न ख्रीष्टोऽस्मि परंत्वग्रे तस्येशप्रेरितो ह्यहं ॥ १० ॥
यो हि कन्यां प्रगृह्णाति विवाहे स वरः स्मृतः १ न वान्यः कोऽपि तेनास्ति संभागी तन्म
होत्सवे ॥ ११ ॥ जन्यस्त्वत्र स्थितः शृण्वन् वरस्यागच्छतो रवं १ अत्यानन्दति तद्वन्मेऽप्यानन्दः
पूरितोऽधुना ॥ १२ ॥ वर्द्धनीयः स वै नित्यं ह्रसनीय इतस्त्वहं १ ऊर्द्ध्वतः सोऽवतीर्णो हि सर्व्व

भूतोपरिस्थितः ॥ १३ ॥ भूमितो यः समायाति स भौम्यः स च भौम्यवाक् । स्वर्गाद् यस्त्वेति
स श्रेष्ठः स्वदृष्टश्रुतसाक्ष्यदः ॥ १४ ॥ तस्य स्वर्गीयसाक्ष्यं वै न प्रतीतं कुचिन्नरैः । तच्छ्रद्धस्त्वी
शसत्यत्वे निदधौ योग्यमुद्रिकां ॥ १५ ॥ यमीशो ह्यात्मतः प्रैरत्स विशेषत ऐशवाक् । न तस्मै हि
सदात्मानं भागशो यच्छतीश्वरः ॥ १६ ॥ महास्नेहेन पुत्रं हि पिता पाति स्वरूपकं । तत्करे
चैव विश्वं स स्वयं सम्यक् समार्पयत् ॥ १७ ॥ पुत्रविश्वासको नित्यं जीवेद्यस्तु पराङ्मुखः । ३८
पुत्रान्नजीवनं पश्येदीशक्रुधिविषयोऽपि सः ॥ १८ ॥ गुरूरुवाच ॥ इति स्वं ह्यन्तिमं साक्ष्यं
प्रददावग्रगः प्रभोः । कारावन्धनकालेऽपि दुष्टभूपादुपस्थिते ॥ १९ ॥ यं त्वायान्तमसौ ज्ञात्वात्य
नन्दद्वरमित्रवत् । स वरः पुत्र ऐशोऽपि तद्विवादवचोऽशृणोत् ॥ २० ॥ कीर्तितं च फरीष्या
णामपि मध्येऽशृणोदिदं । योऽहन्नेरधिकान् शिष्यान् गालील्यः स्नापयत्ययं ॥ २१ ॥ इत्यसत्य

मपि श्रुत्वा तद्विवादाप्रियः प्रभुः । ऐच्छद् यहूद्यदेशात्स गलीलां चलितुं पुनः ॥ २२ ॥ नव
नामृजुमार्गेणाभ्यगात्तस्या हृदं च सः । यर्द्दानेस्तीरगेनैव यत्र योहन्निरादिशत् ॥ २३ ॥ किंतु
प्रत्यग्दिशं गन्तुं समार्य्ये चापि नीवृति । ऐच्छन्नैर्नैक्षितो लोकैर्नवा दुष्टेन भूभुजा ॥ २४ ॥
शिष्य उवाच ॥ तस्याग्रगस्य योहन्नेः कारायां बन्धनं कथं । गुरोऽभूत्केन वा दुष्टं कर्म्मैतद्भू
भुजा कृतं ॥ २५ ॥ गुरुरुवाच ॥ हैरोद्यः सोऽन्तिपा भूपो यो गलीलापिराययोः । चक्रे तत्कर्म्म
यद्धेतुं कथयिष्ये त आदितः ॥ २६ ॥ कैशरे स तिबर्य्याय हितः स्वरचितां पुरीं । गलीला
हृदतीरे वै तैबर्य्याख्यां पुराकरोत् ॥ २७ ॥ तं हृदं चापि यः ख्यातो गिन्नेसारो यहूदिभिः ।
अभ्यधासीत्स तैबर्य्यं हृदं ख्यात्यै हि कैशरः ॥ २८ ॥ तं तथैव नमस्कर्तुं तदनुग्रहयाचकः ।
अभ्यगात्सोऽन्तिपा रोमां मत्प्रोक्तात्कर्म्मणः पुरा ॥ २९ ॥ यन्मार्गाभ्यन्तरे गत्वान्योदर

भ्रातुरालयं । महाहेरोदिपुत्रस्याल्पदिनान्यवसत्सह ॥ ३० ॥ तस्य पत्नीं तदा दृष्ट्वा हेरो
देर्यापि पौत्र्यभूत् । मोसिशास्त्रविरुद्धोढा हैरोद्या नाम सुन्दरी ॥ ३१ ॥ तां कामेनान्तिपाः
सो ऽपि दुश्चरित्रो ऽन्वरज्यत । तस्याश्चानुमतिं प्राप्नोद्धृताया राज्यलिप्सया ॥ ३२॥ इति ह्यङ्गी
कृतं तस्यै रोमातः प्रतिगाम्यहं । त्वां विवोढास्मि पूर्वोढामारब्यां वर्ज्जितास्मि च ॥ ३३ ॥
रोमां गत्वाथ कर्म्माणि स निष्पाद्याभ्यगात्पुनः । गलीलां यत्र सासीत्स्त्री भीमहारिथन
न्दिनी ॥ ३४ ॥ सा चिराद‌न्तिपापत्नी तां गुप्तामपि यत्नतः । प्रोक्तामङ्गीकृतिं पत्या पर
स्त्रीलोभिनाशृणोत् ॥ ३५ ॥ तद्बुध्वा तु च्छलाद्गित्वा तैबर्य्यां राज्यकां पुरीं । आरब्ये सा
विशद्देशे द्रुता स्वं पितरं प्रति ॥ ३६ ॥ तद्वाक्याद्धारिथः क्रुद्धः स नृपो लोप्त्रहारिणां । दण्डार्थं
दुष्टजामातुर्महायुद्धाय सज्जितः ॥ ३७ ॥ यो ऽपि सेनां समचिनोदरबाणां विरुद्धये । यथा

पूर्व्वं मयोक्तं ते शिष्य योहन्निकर्म्मसु ॥ ३८ ॥ सैन्याः केचित्तदा ह्येनं समपृच्छन्महागुरुं । आयन्
यर्द्दानितीरे य आरब्धं नीवृतं प्रति ॥ ३९ ॥ अधुना त्वेव तद्रूपो यदापि भ्रातृगेहतः । हेरो
द्यां तां समाहूतां व्यवहद्धीनलज्जकः ॥ ४० ॥ स तदा सैन्यदृष्टै वै पिरायामेत्य कीर्त्तनं । यो
हन्नेः श्रुतवानेनं द्रष्टुं श्रोतुं च प्रार्थयत् ॥ ४१ ॥ यद्रूद्यातं ततो देशान्निम्नगावार आगतं ।
इदमभ्यब्रवीद्धर्षाद्धेरोदितनयो नृपः ॥ ४२ ॥ अन्तिपा उवाच ॥ गुरोऽहं त्वां चिरादिच्छुर ४१
नघं श्रेष्ठमन्त्रिणं। संद्रष्टुं साम्प्रतं वृत्तोऽपीत्त्रयेलारिसंयुधि ॥ ४३ ॥ गुरुरुवाच ॥ इत्यादृतवचः
श्रुत्वा सोऽनुतापप्रवाचकः । उष्ट्रलोमाम्बरो भूपमेतत्प्रत्यब्रवीद्वचः ॥ ४४ ॥ योहन्निरुवाच ॥
कथमैशवचः श्रोतुमिच्छुस्त्वं मन्दकृन्नृप । भ्रातृभार्य्याविवाहस्ते निषिद्धो ह्यैशशास्त्रतः ॥
४५ ॥ गुरुरुवाच ॥ ह्रीणस्तद्वचसा भूपो न तु स्वाघानुतापकः । ततो व्याकुलहृद्भूत्वारेभे

चिन्तयितुं तथा ॥ ४६ ॥ किं करिष्याम्यहं तेन प्रवक्त्रा निन्दितः स्फुटं । आदृतेन समस्तैर्वं
गालील्यैः सयहूदिभिः ॥ ४७ ॥ अथ तन्मन्त्रनोताः किं न द्रोहिष्यन्ति मेऽखिलाः । मां युद्धे वा
प्रवृत्तं न क्षिपेयुरपि राज्यतः ॥ ४८ ॥ तच्चिन्तातः स योहन्निं दुर्गे नाम मखैरूषि । पिरा
यादूरसीमस्थेऽबध्नाच्छृङ्खलाहृतेः कृते ॥ ४९ ॥ दुष्टा पत्नी तु हैरोद्या योहन्नेस्तद्वचो यदा ।
अशृणोदपि तद्धिंसां सुयत्नात्समकल्पयत् ॥ ५० ॥ न तु कर्तुमशक्नोत्तां नेत्थं ह्यनुमते पतौ ।
लोकभीत्या निरुद्धेऽतः प्रवक्तुश्चापि सत्तया ॥ ५१ ॥ तस्मात्तस्यान्तिके सोऽपि कूचिद्भ्याग्रद
न्तिपाः । तच्छिष्यांश्चानुमेनेऽपि कांश्चिदेतुं गुरुं प्रति ॥ ५२ ॥ तथा दुर्गेऽपि संबद्धोऽशिक्षयत्स
महात्मकः । अयगस्तन्मृतिर्यावन्नासीद्वाच्यः परे मया ॥ ५३ ॥ इति श्रीख्रुष्टसंगीतायां पुत्राभि
षेकपर्व्वणि (शान्तमत्थायस्य चतुर्थचतुर्दशसर्गाभ्यां शान्तमार्कस्य प्रथमषष्ठसर्गाभ्यां शान्तलूकस्य

तृतीयसर्गाच्छान्तयोहन्नेस्तृतीयचतुर्थसर्गाभ्यां फ्लाव्ययोसेफरचितयहूदिपुरातनप्रबन्धाच्चोद्धृतो) महाजन्यानन्दपूरणं नामाष्टमोऽध्यायः ॥

शिष्य उवाच ॥ गर्ह्यं हैरोधकर्म्मेदं श्रुत्वा क्षुब्धोऽस्म्यहं गुरो । बङ्ग भद्रे ऽयगे त्वेव प्रभुः किम करोत्ततः ॥ १ ॥ गुरुरुवाच ॥ यदा तद्विपदं येषूरशृणोत्प्रोदिते पथि । सोऽवर्त्तत समार्य्ये वै गलीलां गन्तुमिच्छुकः ॥ २ ॥ यर्द्दानेः सन्निकृष्टां हि समां भूमिं विहाय सः । अविशङ्गिरि ४ः पूर्णां वीमिफ्रैम्यैरुषितां पुरा ॥ ३ ॥ तेभ्यो योसेफजातानां श्रेष्ठेभ्यो ह्यादधाविमां । आर्य्यभूमि विभागेऽग्रे येषूस्तद्वंश्यनूनजः ॥ ४ ॥ इमां त्वेव सहान्याभिर्द्दशवंशजयात्परे । समार्य्या अधरन् लोकाः पाषण्डा जातिसङ्कराः ॥ ५ ॥ चलंस्तत्र प्रभुः पश्चामीशप्रत्नालयं पुरं । सिलवं वामसंस्थं सोऽतिक्रम्य सिकिमं ययौ ॥ ६ ॥ महापर्व्वतयोर्मध्ये यदार्य्यं नगरं स्थितं । हेशलोक

प्रबन्धेऽपि चिरान्नानाकथास्मृतं ॥ ७ ॥ तयोरेकस्तु घेबालो नाम तस्योत्तरे स्थितः । अवृक्षः
स शिलाशृङ्गैर्भीम हेशशपात्मकः ॥ ८ ॥ अन्यो द्क्षिणसंस्थस्तु गरिजोमाभिधो महान् । आ
रामैः स्वन्वितो रम्यैरुत्सैश्चशाशिरात्मकः ॥ ९ ॥ नगानामधिराजं तं सर्व्वे तत्परिवासिनः ।
अमन्यन्तैव शीयोने सगृहेऽप्यवधोरिते ॥ १० ॥ शिष्य उवाच ॥ अद्भुताद्रिद्वयेनेदमावृतं सि
किमं पुरं । कथमार्य्यमभूत्काभिः कथाभिर्वा स्मृतं पुरा ॥ ११ ॥ गुरुरुवाच ॥ तत्पूर्व्वसम ४४
ये तातः सिकिमस्य कनानिनः । तद्भूमीमिस्त्रयेलायोदासीनाय विचिक्रिये ॥ १२ ॥ स
तत्राब्रहपौत्रोऽथ वेदिमीशाय निर्म्ममे । लोप्त्रिणश्च ततोऽमोर्य्यान् व हिश्चक्रेऽसिधन्वभिः ॥ १३ ॥
हेगुप्ते म्रियमाणस्तु तां ददौ प्रेष्ठसूनवे । योसेफाय सुतौ तस्याप्याशासन् द्विविधांशदः ॥ १४ ॥
तस्माद्यदाविशन् देशमैस्त्रयेल्याः कनानकं । योसेफास्थीनि मिश्रात् त आनयन्तस्तदाज्ञया ॥ १५ ॥

तद्दैतान्येव तद्भूमौ सैकिम्यां ते समार्पयन् । येष्वि स्वादिकुलस्मृत्या तथादिशति ना
यके ॥ १६ ॥ तद्दैव मन्यमानास्ते मोसिप्रोक्तोपदेशनं । तेभ्यो यर्द्दानिपारेऽपि वेक्ष्यद्भ्योऽङ्गी
कृतां भुवं ॥ १७ ॥ गरिजीमस्य शिखरेऽवाचयन्नाशिषं परां । ईशाज्ञाचारिणां सम्यक् सङ्गृ
दामिस्त्रयेलिनां ॥ १८ ॥ घेबालशिखरे त्वेव शपमुग्रं भयानकं । असतामिस्त्रयेल्यानामेकेशवि
धिलङ्घिनां ॥ १९ ॥ मोस्यादेशाच्च घेबाले लिखितं प्रस्तरत्रये । शास्त्रं स्थूले सुसंयुक्ते दृशद्द्वया ४५
सहार्पयन् ॥ २० ॥ पुरी तस्मात्तयोर्मध्ये गरिजीमस्य तु स्थिता । सुन्दरोपत्यकायां सादृता
फ्रैमादिभिः सदा ॥ २१ ॥ सिकिमे संचिताः पश्चात्प्रधाना दशवंशकाः । सलोम्नो मूर्खपुत्रस्य
सकृद्राज्यं निरक्षिपन् ॥ २२ ॥ ततस्तत्कृतमप्यार्य्यं मन्दिरं तेऽवमत्य वै । यरूबौमाघमन्त्रेणा
फ्रैमाद्या वञ्चिताः कुलाः ॥ २३ ॥ यौसेफ्यां सत्तरां भूमीमार्य्यशैलाद् यहूदिनां । अवोचंस्तन्मतिं

चाथ सङ्कुरास्तेऽपि लेभिरे ॥ २४ ॥ कल्दायैस्तु परे भग्नं सलोम्नो मन्दिरं यदा । यहूद्या
अन्वरचयन् पारसीकाधिपाज्ञया ॥ २५ ॥ तदेर्ष्यातः समार्य्येषु ख्यातः संबल्लटो महान् ।
गरिजीमाद्रिशृङ्गेऽपि निर्म्ममे सौम्यमन्दिरं ॥ २६ ॥ यथा यैरूषलेम्यं च सद्विश्वासिभिरा
श्रितं । चिरं तदपि पाषण्डैर्दाविद्राज्यारिभिस्तथा ॥ २७ ॥ योहन्नौ तत्तु हुर्काने यहूद्यनृप
यज्वनि । भग्नवत्यपि तत्स्थानं पुण्यमूचुः समार्य्यकाः ॥ २८ ॥ मोसिना ह्युपदिष्टा या घेबाले ४६
वेदिनिर्म्मितिः । तां कार्य्यां गरिजीमे ते तदा नित्यं च मेनिरे ॥ २९ ॥ शिष्य उवाच ॥
तद्भ्रान्तेर्हेतुरस्याद्रेः सौम्यताशीश्च बुध्यते । तत्र यातेन येष्वा तु किं ततोऽभूत्कृतं गुरो ॥ ३० ॥
गुरुरुवाच ॥ सिकिमं तत्पुरं ख्यातं स्वकालीयैर्यहूदिभिः । सिकरं वै मृषासंज्ञं समार्य्य
मतगर्हया ॥ ३१ ॥ अभिगत्य प्रभुः पद्भ्यां क्लान्त आर्य्यक्षितौ स्थितः । तस्यां यां धर्म्म्ययाकोबो

ददौ स्वप्रेष्ठसूनवे ॥ ३२ ॥ तदन्तःसंस्थिते कूपे ऽध्यास्त याकोब्यनाम्नि सः । सायं गतेषु शिष्येषु तदान्नक्रीतये पुरं ॥ ३३ ॥ तदा कांचित्समार्य्यां स्त्रीं जलमुद्धर्त्तुमन्धुतः । आगतामिद मभ्यूचे जलं मे दीयतां त्वया ॥ ३४ ॥ इदं श्रुत्वा वचो नारी पुरुषस्य विधर्मिणः । अहिता न्वयजस्यापि विस्मिता प्रत्यवोचत ॥ ३५ ॥ समार्य्योवाच ॥ त्वं यहूदी कथं वारि समार्य्याया मदिच्छसि । नहि नौ वंशयोरस्ति व्यवहारः कदाचन ॥ ३६ ॥ श्रीयेषूरुवाच ॥ ईश्वरस्य ४७
वरो नारि त्वया चेत्समबुध्यत । यो वा मे देहि पानीयमिति त्वां वक्ति सांप्रतं ॥ ३७ ॥ स त्वयापि यदि ज्ञातस्तदा तस्माद्विशेषतः । प्रार्थनीयं त्वयाभूद्वै पानीयममृतात्मकं ॥ ३८ ॥ समार्य्योवाच ॥ तव नास्ति घटीयन्त्रं गभीरश्च महाशय । कूप एष कुतो ऽथास्ति पानीयं ते ऽमृतात्मकं ॥ ३९ ॥ त्वं किमस्मत्पितुः श्रेयान् याकोबाद् य इमं हि नः । अन्धुं ददौ पपौ चेतः

सपशुः ससुतादिकः ॥ ४० ॥ श्रीयेषूरुवाच ॥ यो ऽस्मात्पिबति कूपात्स पुनस्तर्षिष्यति ध्रुवं ।
मज्जलं तु पिबन्मर्त्यो न तृष्णां प्राप्स्यति क्वचित् ॥ ४१ ॥ यज्जलं हि मया देयं सदा तस्यान्तरे
स्थितं । उत्पतन्नुत्स इव तद्भवेदानित्यजीवनं ॥ ४२ ॥ समार्य्योवाच ॥ महाशय जलं
मह्यमप्येतद्देह्यमूल्यकं । न तृष्येयं यतो नापीहाङ्गर एयां मुहुर्मुहुः ॥ ४३ ॥ श्रीयेषूरुवाच ॥
यदि त्वं नु मया देयं वरमीशस्य वाञ्छसि । याहि नारि पतिं स्वीयमानयापि च मां प्रति ॥ ४८
४४ ॥ इति पृष्टा समार्य्योचे को ऽपि नास्ति पतिर्मम ॥ एतच्छ्रुत्वा तु सर्वज्ञः प्रभुस्तामिद
मब्रवीत् ॥ ४५ ॥ श्रीयेषूरुवाच ॥ इदं साधु त्वया प्रोक्तं को ऽपि नास्ति पतिर्मम । आसन्
हि पञ्च पतयस्तवानुक्रमशः पुरा ॥ ४६ ॥ यस्त्विदानीं प्रदेशे ऽस्मिन् प्रियस्ते विद्यते नरः ।
स न व्यूढो ऽस्त्यतः सत्यं तद्वाक्यमुदितं त्वया ॥ ४७ ॥ समार्य्योवाच ॥ ईशप्रवाचिनं त्वां

भो॰नुभवाम्यतिविस्मिता । यद्यपि स्या यहूद्यस्त्वमस्मन्मतविरोधकः ॥ ४८ ॥ गुरवः पितरो॰
स्माकं ह्येतस्मिन् सौम्यपर्व्वते । आशीर्युक्ते सदावेरूरीश्वरस्यार्च्चनं महत् ॥ ४९ ॥ यूयं यिरू
षलेमे तु स्थाने॰स्मद्विमते दृढं । कर्त्तव्यं सततं ब्रूथेशस्य तद्धर्म्म्यपूजनं ॥ ५० ॥ श्रीयेषूरुवाच ॥
प्रतीहि मां नारि समेति कालो यदा न वास्मिन् गरिजीमशृङ्गे । न वास्मदर्च्यो॰पि यिरूषलेमे
॰र्च्चयिष्यथेशं पितरं महान्तं ॥ ५१ ॥ यूयं यदभ्यर्च्चयथाधुनापि न वित्थ हीनैशगृहार्हधर्म्माः । ४९
मृषोदिता मोस्यनुचारिणो॰पि त्यक्त्वा नदङ्गीकृतसत्प्रवक्तॄन् ॥ ५२ ॥ ईशार्पितं वर्त्म वयं तु
धृत्वा संवेलदाविन्मुखभव्यवाचां । तं संविदीशं सुविदो॰र्च्चयामो यहूदितो ह्येव विमुक्ति
रेति ॥५३ ॥ समभ्यैति तु कालः सो॰धुना चोपस्थितो यदा । आत्मनैवार्च्चयिष्यन्ति पितरं
सत्यैवच ॥ ५४ ॥ ते वै सत्यार्च्चिनस्तांश्च न तु तीर्थाभिलाषिणः । स्वार्च्चार्थे याचति पिता
॥

आत्मरूपः सदीश्वरः ॥ ५५ ॥ समार्य्योवाच ॥ मसीहं ख्रीष्टनामानं तं वेद्म्यागामिनं परे ।
यस्तदा सकलान्येव शिक्षयिष्यति नः प्रभुः ॥ ५६ ॥ श्रीयेषूरुवाच ॥ अहं नार्य्यधुना यो ऽपि
संवदामि त्वया सह । अहमस्मि मसीहः स सत्यं युष्मत्प्रतीक्षितः ॥ ५७ ॥ गुरुरुवाच ॥ इति
श्रुत्वा समार्य्या सा समादेशं महाप्रभोः । एतत्काले ऽपि तच्छिष्यान् पश्यन्त्यत्र समागतान् ॥ ५८ ॥
महाविस्मयमारूढा तस्यैव वचसो ऽखिलात् । निधाय स्वघटीं यत्नान्नगरं स्वीयमभ्यगात् ॥ ५९ ॥ ५०
परियाय बहूंश्चैव स्थितांस्तत्र समार्य्यकान् । एतेन व्यग्रवाक्येन कूपं प्रति समाहू
यत ॥ ६० ॥ समार्य्योवाच ॥ अहो मानुषमेकं वै द्रष्टुमायात यो ऽखिलं । कदाचिन्मत्कृतं
प्रोचे स किं ख्रीष्टो भवेन्नहि ॥ ६१ ॥ गुरुरुवाच ॥ तत्संश्रुत्य तु सैकिम्या ये सशेषसमार्य्यकाः ।
भव्यं ख्रीष्टमपेक्षन्त सर्वेषां शिक्षकं नृणां ॥ ६२ ॥ तं योसिफकुलोद्भवं मन्यमाना अपि भ्रमात् ।

स्तीवचः प्रत्ययादीयुष्मेष्ट्तुं बहवोऽपि तं ॥ ६३ ॥ तेभ्यः प्राक् तु प्रभोः शिष्यास्तं प्रत्येता यथो
दितं । कूपेऽन्नं नगरान्नीत्वा संवादे तिष्ठति स्त्रिया ॥ ६४ ॥ विस्मिता अपि तस्मान्ते गुरुं
नाभ्यब्रुवन्निति । किं याचति भवान् किं वा संवक्ष्येतत्समार्य्यया ॥ ६५ ॥ आदरात्तु स्थिता
मूकाः संवादो वर्त्तते यदा । अपेतायां स्त्रियामूचुरधुनान्नं गुरोऽद्य ॥ ६६ ॥ स तु तत्वकथा
मन्दसतत्तासक्तमानसः । युष्मदज्ञातमन्नं मेऽस्तीति तान् प्रत्यवोचत ॥ ६७ ॥ ततोऽन्योऽन्यम ५१
पृच्छंस्ते भोज्यं को गुरवे ददौ । तच्छ्रुत्वं त्वनुभूयाथ प्रभुरेतद्वचोऽब्रवीत् ॥ ६८ ॥ श्रीयेषूरु
वाच ॥ ममान्नमिदमस्त्येव विभोर्नुन्नवतोऽत्र मां । संकल्पाचरणं तस्य पूरणं चाग्रकर्म्मणः ॥
६९ ॥ किं नु युष्मास्विदं प्रोक्तमुप्तेर्मासचतुष्टये । परिपूर्णे समायाति तदा वै शस्यसंग्रहः ॥
७० ॥ ततो विस्तीर्य्य नेत्रे वै सम्प्रत्यप्यधिपश्यत । क्षेत्राणि छेदनार्थं हि गौरवर्णानि पत्नित

॥ ७१ ॥ नित्यजीवाय शस्यं हि तच्छेत्ता वेतनार्हकः । संचिनोति ततो नन्देद्वप्तापि च्छे
दिना सह ॥ ७२ ॥ प्रोक्तमेतद्वचो ह्येको वपत्यन्यश्छिनत्ति च । इति निर्णीतमधुना शस्ये वित्तात्म
रूपके ॥ ७३ ॥ यस्मिन् नापि श्रमं चक्र तत्संवेतुं मयेरिताः । शस्यं यूयं परेषां हि समुपैत श्रमात्
फलं ॥ ७४ ॥ गुरूरुवाच ॥ इत्यूचे स महाचार्य्यो यः स्वसत्यकथोप्तितः । विध्यज्ञेष्वपि प्रास्ता
वीत् खृष्टीयं विजयं नृणां ॥ ७५ ॥ यान् स्वमृत्योः परेऽप्येषामाह्वानैरनुचारिणां । संग्राही ५२
स कुलात्कृत्स्नादात्मसन्तार्च्चनाय सः ॥ ७६ ॥ एतत्काले तु कूपं तेऽभ्यगच्छन् सिकिमान्नराः ।
ये नारीमन्त्रणाद्द्रष्टुमैच्छंस्तं बहुदर्शिनं ॥ ७७ ॥ प्रार्थयंश्चाप्यवस्थातुं स्वेऽहानि कतिचित्पुरे ।
प्रार्थनानुमतिं चैव चक्रे स वरदः प्रभुः ॥ ७८ ॥ तथेरित्वा स्वशिष्यान् स पुरा गालील्यनी
वृतं । निजं तं परमाचर्य्योऽतिष्ठत्सार्द्धं समार्य्यकैः ॥ ७९ ॥ ये तद्दैववचः श्रुत्वा द्वितीयममृ

तात्मकं । प्रतीयुर्बहुला एव तां नारीं वाब्रुवंस्तदा ॥ ८० ॥ सैकिम्या ऊचुः ॥ तं प्रतीमोऽधुना नूनं न तु ते वाक्यमात्रतः । उक्तवत्याः स मां प्रोचे मत्क्रियाः सकला इति ॥ ८१ ॥ वयं संशुश्रुम ह्येव गुरुं तं सर्व्वदर्शिनं । तं जगन्मोचकं खृष्टं ततो विद्मोऽपि निश्चयात् ॥ ८२ ॥ गुरुरुवाच ॥ इत्यूचुः शरला एते ये पाषण्डा अपि स्मृताः । समार्य्या न च जानन्तः प्रवक्तॄन् मोसिना विना ॥ ८३ ॥ यहूद्यमपि तं येषूं नाप्रैम्यं तैर्यथा मतं । तद्वचोमात्रलिङ्गेन खृष्टनाम्नैव मे ५३ निरे ॥ ८४ ॥ यं फरीष्यादयस्तस्य समवंशा यहूदिनः । मोसिदाविदिषायादीन् सुविदन्तः प्रवाचकान् ॥ ८५ ॥ यमन्यन्त स्वमध्येऽपि विविधाद्भुतदर्शनैः । लक्षितं सर्व्वदा भ्रान्ता गर्व्व लोभप्रवञ्चनैः ॥ ८६ ॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मोसिरचितपञ्चशास्त्रे योनिस्कन्धस्य त्रयस्त्रिंशतमाष्टचत्वारिंशसर्गाभ्यामनुवाक्यस्कन्धस्य त्वेकादशसप्तविंशसर्गाभ्यां येषूनूनज

चरित्रस्य चरमसर्गाद् राजचरित्रान्महमीयचरित्रात् फ्लाव्ययोसेफरचितयहूदिपुरातनप्रबन्धाच्छान्तयोहन्नेश्चतुर्थसर्गाच्चोद्धृतः) समार्य्यामृतोपदेशनं नाम नवमोऽध्यायः ॥

शिष्य उवाच ॥ आश्चर्य्यं तद्गुरो वाक्यं कियत्त्वेषां प्रतीतये । ऋजूनां सोऽवसन्मध्ये समा
र्य्याणां महाप्रभुः ॥१॥ गुरुरुवाच ॥ इब्रह्मौ नत्वधिकं शिष्य सोऽतिष्ठत्सिकिमे तदा । तेनाश्चर्य्य
तरोऽप्येषां विश्वासः संकरोद्भवां ॥ २ ॥ इयत्स्थित्वा पुरेऽस्मिंस्तु सिकर्य्युक्ते यहूदिभिः । रैम्यैस्तु ५४
न्यापुलौ फ्लाव्ये समार्य्याणां महौजसि ॥ ३ ॥ ततो गच्छन् स एकाकी दिशं प्रत्युत्तरां पुरि । दुर्गा
यां प्राविशद्येषूर्या समार्य्योदितादितः ॥ ४ ॥ यां पिता दुरहाबस्याम्रिर्हि निर्म्माय पर्व्वते ।
राजधानीं ततश्चक्रे दशवंशेत्तयेलिनां ॥ ५ ॥ तन्नाम्नातोऽप्यभिहितं राज्यं देशश्च सर्व्वदा ।
पुरी त्वेषोदिता पश्चात् सिवस्ती रैम्ययावनैः ॥६॥ तत्वेतस्यामवस्थाय समार्य्यायां महाप्रभुः ।

अतिक्रम्याचिराद्भूमिं जहौ तत्सङ्करोद्भवां ॥ ७ ॥ पिलातस्य च गोपस्य ससमार्य्ययहूदिनां ।
देशान्निःसृत्य गालील्यमगाच्छासितमन्तिपा ॥ ८ ॥ योऽतिदूरगतः पारे यर्द्दीनेः संस्थितस्त
दा । नाशृणोदागतिं येष्वो नवा नामापि दुर्न्नृपः ॥ ९ ॥ शिष्य उवाच ॥ तस्मिन् दूरस्थितेऽ
तस्तु भूपे योहन्निबन्धके । किं न केचिद्गलीलायामाद्रियन्तागतं प्रभुं ॥ १० ॥ गुरुरुवाच ॥
इदं तेन वचः शिष्य प्रोक्तं सर्व्वविदा मुहुः । प्रवक्तुर्निजभूमौ वै नादरोऽस्ति कदाचन ॥ ११ ॥ ५५
दृष्टो यिरूषलेमे तु त्राणपर्व्वगतैर्हि यैः । प्रभुसाक्ष्यप्रदानां वै समूहोऽद्भुतकर्म्मणां ॥ १२ ॥ गाली
ल्यास्तेऽखिला अत्र ज्ञात्वाश्चर्य्यं तमागतं । यहूद्यान्नोवृतः प्रीत्या समगृह्णन्त सर्व्वशः ॥ १३ ॥
किंतु तेऽपि तमाप्तं न समार्य्या इव भिन्नजाः । तद्वचोमात्रतः खृष्टमित्यमन्यन्त मोचकं ॥
१४ ॥ स तस्मान्नाभिगत्यापि नथरेन्नगरं निजं । कनां याति स्म यत्रादि चक्रे स्वैश्वर्य्य

दर्शनं ॥ १५ ॥ तत्रायातं तु तं श्रुत्वा कश्चित्कापर्णहूम्यपि । प्रधानो यत्सुतस्तत्राशयिष्ट ज्वर
पीडितः ॥ १६ ॥ तदोत्थाय परे ऽह्येव कनायां समुपस्थितः । हैरोद्यस्यार्थयद्येषूं स कर्म्मस
चिवस्तथा ॥ १७ ॥ प्रधान उवाच ॥ गुरो त्वं दययोपेहि चिकित्सार्थं सुतस्य मे । स्वीये
कपर्णहूमे ऽद्य मुमूर्षोरपि पतने ॥ १८ ॥ गुरुरुवाच ॥ इत्याकर्ण्यार्थनं येषूर्गालील्यानां विमोहनं ।
हेरोद्याचारिणां वादौ भर्त्सयन्नेतदब्रवीत् ॥ १९ ॥ श्रीयेषूरुवाच ॥ यूयं यदि न पश्येत विविधा ५६
मद्भुतक्रियां । सर्व्वनो न कदाचिद्वः सत्प्रतीतिर्भविष्यति ॥ २० ॥ गुरुरुवाच ॥ विक्लवः स
प्रधानस्तु तत्संश्रुत्यापि भर्त्सनं । आश्वेहि तन्मृतेर्भो प्रागिति व्यग्रमवोचत ॥ २१ ॥ ततो
मोक्तुर्दयालोस्तु संशुश्रावेदमुत्तरं । हीनदुःखो ऽधुना याहि यतो जीवति ते सुतः ॥ २२ ॥ तद्वाक्यं
स प्रतीत्याथ निःसरन् स्वगृहं प्रति । मार्गे कपर्णहूमात्स्वान् दासानायात ऐक्षत ॥ २३ ॥

स्वामिनं ये समीक्ष्याथ हर्षतोऽभ्यब्रुवन्निति । सुवार्त्तार्थं समायामो भवत्पुत्रो हि जीवति ॥
२४ ॥ पिता तद्वार्त्तया तुष्टः स्मरंश्चैव प्रभोर्व्वचः । तेभ्योऽपृच्छत् क्षणे कस्मिन्नादिस्वास्थ्यम
वाप सः ॥ २५ ॥ इति पृष्टास्तदोचुस्ते द्वितीयप्रहरात्परे । गतेऽष्टममुहूर्त्ते ह्यः स तदा विज्वरो
ऽभवत् ॥ २६ ॥ अथावैत्तं पिता भूतं कालं यस्मिन् कनापुरि । वाक्यं येश्वोऽशृणोदेतद्याहि
जीवति ते सुतः ॥ २७ ॥ तत्कृपाशक्तिचिह्नेनाकृष्टः कापर्णहूम्यसौ । तं खृष्टमिति मेनेऽथ सस ५७
र्व्वपरिवारकः ॥ २८ ॥ शिष्य उवाच ॥ गलीलायां कृतानां वै प्रभुणाद्भुतकर्म्मणां । द्वितीयं
तत्कृतं वेद्मि प्रत्येतेन यहूद्यतः ॥ २९ ॥ तत्कनापुरि यस्यां तु तदाश्चर्य्यद्वयं कृतं । किं सोऽति
ष्ठत्तदा येषूर्व्विकृतापो रुगन्तकः ॥ ३० ॥ गुरुरुवाच ॥ नातिष्ठच्छिष्य तस्मात्तु स विनिःसृत्य
पत्तनात् । आसेरवंशभागे यद्भूत्कानान्यसंजये ॥ ३१ ॥ ईश्यानीं प्रति स भ्राम्यन् भूमिं ता

ऐश्वराज्यागतिं वक्तुं स्वशक्त्यारभत स्फुटं ॥ ४७॥ श्रीयेषूरुवाच ॥ संपूर्णः साम्प्रतं कालः स्वर्ग राज्यं ह्युपस्थितं । अनुतापं कुरुध्वं वै सुवार्त्तां च प्रतीत मे ॥ ४८ ॥ इति श्रीख्रष्टसंगीतायां पुत्राभिषेकपर्व्वणि (येषूनूनजचरित्राद्धर्म्मनायकचरित्राद्राजचरित्रादिषायभयवाक्यानां नवमसर्गाच्छ्रान्तमत्थायलूकयोहन्नीनां चतुर्थसर्गाच्छ्रान्तमार्कस्य प्रथमसर्गाच्चोद्धृतो) गलीलाधिभासनं नाम दशमोऽध्यायः ॥ ६०

गुरुरुवाच ॥ तद्ध्रदस्य तथा तीरे सीमायां प्रत्नवंशयोः । स जबूलूननप्थल्योरभ्रमद्भासको नृणां ॥१॥ गालील्यैरावृतो व्यूहैर्ये कोऽन्याद्भुतकर्म्मणां । आकृष्टाः श्रोतुमैच्छंस्तां वार्त्तामीश्वरराज्यकां ॥२॥ चलंस्तत्राप नावौ स धीवरीये तटस्थिते । यदेका जिबिदीयस्य सीमोनस्यापि चेतरा ॥३॥ यो ऽन्द्रियेण सह भ्रात्रा योनजः प्रस्तराभिधः । येषूं दक्षिणभूमौ हि शेष

शिष्या इवात्यजत् ॥४॥ स्वपुरे वेथ्शैदे च तद्ध्रदस्य तटोपरि । संस्थितेऽन्यत्र चापि स्वं धैवर्य्यं
पुनराचरत् ॥५॥ जालानि जिबिदीयेन तावक्षालयतां सह । तत्पुत्राभ्यां च याकोबयोह
न्निभ्यां तटे स्थितौ ॥६॥ तत्काले गुरुरार्य्यः सोऽभ्येत्य योनसुतौ प्रति । उचे मां नयतं नावा
किंचिद्दूरं तटादिति ॥७॥ तदैवारुह्य तरणिं सीमोनान्द्रिययोः प्रभुः । किंचिद्दूरं तटात्
स्थित्वा ततो व्यूहानुपादिशत् ॥८॥ उपदेशं समाप्याथ सीमोनमिदमब्रवीत् । निम्ने प्रस्थाय ६१
जालानि मीनाकृष्टै ह्रदे क्षिप ॥९॥ इत्याज्ञाया असौ हेतुमनुमातुं न शक्नुवन् । किंत्वाज्ञाप
यितुर्बुद्धिं जानन् प्रत्यब्रवीदिदं ॥१०॥ सीमोन उवाच ॥ तावद्रात्रिमपि स्वामिन् कृत्वै
तत्कर्म यत्नतः । न प्राप्तं किंचिदस्माभिः किंतु मंस्ये वचस्तव ॥११॥ इत्युक्त्वा प्रभु
वाक्येन स निरक्षेपयद्ध्रदे । जालं यन्मत्स्यनिकरैः परिपूर्णमभूत्क्षणात् ॥१२॥ छेद्यं चाशंक्य

तद्वारादवाह्यान्तरिस्थिताः । साहाय्यमार्थयन्नन्यनौस्थितानिङ्गैर्नरान् ॥१३॥ ये ऽभि
गत्योपकाराय जिबिदीयादयस्तदा । समाकृष्यातियत्नाच्च मत्स्यैर्नावावपूरयन् ॥१४॥
मज्ज्यमाने अपीक्षित्वा ते मत्स्यात्यन्तसंख्यया । सर्वे तत्रस्थिता घोरभीतिसागरविप्लुताः ॥
१५॥ ततो व्यग्रमना येषूं सीमोनः प्रणतो ऽब्रवीत् । सान्निध्याद्याहि दयया पापात्माहं यतःप्र
भो ॥१६॥ तं तु प्रत्यब्रवीद्येषूर्भयं मा याहि योनज । इतो हि ससहायस्त्वं नॄंस्तथा संग्रहो ६२
ष्यसि ॥१७॥ अमन्यत वचस्त्वेतत्सीमोनः ससहोदरः । तथा याकोबयोहन्नी तातं हि
त्वापि तत्कृते ॥१८॥ धैवर्य्यं च परित्यज्य जिबिदीयं च नौस्थितं । अनुजग्मुः प्रभुं येन
कार्य्यास्ते नरकर्षकाः ॥१९॥ तैर्वृतः स चतुःशिष्यैः कर्मद्रव्यविवर्जिभिः । स्वीयं कापर्ण
हूमाख्यं प्रविवेश ततः पुरं ॥२०॥ शिष्य उवाच ॥ सर्वसन्न्यासिशिष्याणां प्राप्तवांस्तु

चतुष्टयं । तथा किं स्वपुरे चक्रे स महैश्वर्य्यदर्शनं ॥२१॥ गुरुरुवाच ॥ अद्भुतं विस्तरादेतद् ब्रु
वतो मे निशामय । शनौ विश्रामनाम्न्यह्नि तत्पुर्य्याः सो ऽविशत्सभां ॥२२॥ शास्त्रग्रन्थप्रपठ
नात्परे चाशिक्षयन्नरान् । न यथाध्यापकाः किंतु शक्त्या विस्मयकारकः ॥२३॥ स्तब्धेषु च
तमस्तेषु भूतग्रस्तो ऽत्र को ऽपि वै । तच्छक्त्या व्याप्त एतानि प्रणनाद वचांस्यथ ॥२४॥ भूत
उवाच ॥ हे येषून्नशरेतीय किमस्माकं त्वया सह । हन्तुं नो वेद्म्युपेतं त्वां पुण्यमीशस ६३
र्पितं ॥२५॥ गुरुरुवाच ॥ इति श्रुत्वा प्रभुर्भूतमपुण्यं प्रत्युवाच तं । नीरवस्त्वं भवैतस्माद्ब
हिर्याहि च मानवात् ॥२६॥ यद्वचःशक्तितो भूतो गृहीतो ऽतिस्वनेन सः । निःक्षिपन्नन्तरे
तं नतु पुंस्तद्बहिर्ययौ ॥२७॥ अतिभीतिं च संप्राप्य नराः सर्व्वे सभास्थिताः । अन्यो ऽन्य
ऽभिसंवक्तुमुपचक्रमिरे ततः ॥२८॥ कापर्णहूम्या ऊचुः ॥ किमेतत्कर्म्म किंवेदं नवं शास्त्र

मुपस्थितं । येन भूतगणोऽप्यस्याज्ञां प्रभोरिव मन्यते ॥२९॥ गुरुरुवाच ॥ तथा येष्वो महा
कीर्तिस्ततसभातोऽतिविस्तृता । तत्पुरं सकलां चापि क्षितिं व्याप्नोत्परिस्थितां ॥ ३० ॥
सभायाः सतु निर्गत्य तदागच्छन्निकेतनं । यत्र सोमोनपत्नी वै स्वमात्रापि सहावसत् ॥३१॥
तस्यां तु प्रस्तरश्वश्रूमर्द्दितायामतिज्वरात् । अतस्तत्राविशच्छिष्यैश्चतुर्भिस्तैर्वृतः प्रभुः ॥३२॥
अभ्येत्य शयितां तां च प्रगृह्यैव च तत्करं । भर्त्सितेऽपि ज्वरे तत्रोत्थापयामास तां क्षणात् ॥ ६४
३३॥ भूत्वा हतज्वरा साथ तुष्टं जामातरं स्वकं । सभ्रातृद्विसखं गेहे श्रीयेषुं चाप्यसेवत ॥
३४॥ सन्ध्यायां त्वस्तगे सूर्य्ये विश्रामाहाररीतिषु । गतास्वथ गृहद्वारे संचिताः सर्व्वनाग
राः ॥३५॥ आनयंश्च गुरोरग्रे नवस्याद्भुतकारिणः । रोगिणः सकलान् स्वीयान् भूतयस्तांश्च
सर्व्वथा ॥ ३६ ॥ तान् सर्व्वांश्चापि स स्पृष्ट्वा हस्ताभ्यां वरदः प्रभुः । सुस्थांश्चक्रे तथा भूतांस्तत्र

स्तेभ्यो निरक्षिपत् ॥ ३७ ॥ खृष्ट ईश्वरपुत्रस्त्वमिति नर्दन्त एव तान् । शठांस्तद्वेदिनोऽप्यार्य्यो न्यषे
धीदीरितुं दृढं ॥ ३८ ॥ तत्परे रात्रिशेषे सोऽनभिभातोषसि स्वयं । विहायैकाक्यतोऽरण्यं प्रार्थना
यैव निर्गतः ॥ ३९ ॥ आरब्धेऽह्नि त्वथो यत्नात्सीमोनाद्याः समीह्य तं । प्राप्य चाभ्यब्रुवन् सर्व्वे त्वा
मन्विच्छन्ति तारकं ॥ ४० ॥ इति श्रुत्वा तु सोऽवादीद्ग्रामेषु निकटेष्वहो । याम तत्रापि शिक्ष्यं हि
मयायातेन तत्कृते ॥ ४१ ॥ ततः सर्व्वां गलीलां स परिबभ्राम तैर्वृतः । ऐशराज्यमुवाचार्य्यै सर्व्वरुक् ६५
शान्तयेऽपि च ॥ ४२ ॥ दूरतोऽनुगताश्चौघाः सगालील्या यहूदिकाः । यर्द्दानीपारवासाश्च दशपुर्य्युषि
तादयः ॥ ४३ ॥ तान् दृष्ट्वा श्रोतुमिच्छून् स आरूढः पर्व्वतोपरि । श्रेष्ठं प्रोचे वचस्तद्वै शिष्याकर्णयमे
ऽधुना ॥ ४४ ॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मत्थायस्य चतुर्थाष्टमसर्गाभ्यां मार्कस्य
प्रथमसर्गाल्लूकस्य चतुर्थपञ्चमसर्गाभ्यां चोद्धृतो) नरसंग्रहणं नामैकादशोऽध्यायः ॥

श्रीयेषूरुवाच ॥ धन्या दीनात्मका यूयं स्वर्गराज्यं हि वो भवेत् । धन्याः संखिद्यमानाश्च सं
प्रहर्षिष्यथ ह्यतः ॥ १ ॥ धन्याश्च क्षान्तमनसो भूमिदायं हि भोक्ष्यथ । धर्म्मक्षुधातृषो धन्याः संत
र्पिष्यथ हि ध्रुवं ॥ २ ॥ धन्या यूयं दयावन्तो यतः प्राप्स्यथ वै दयां । सुपवित्रहृदो धन्या
यतः संद्रक्ष्यथेश्वरं ॥ ३ ॥ विरोधध्वंसिनो धन्याः ख्येया ईशात्मजा यतः । धर्म्मार्थे ताडिता
धन्याः स्वर्गराज्यं ह्यवाप्स्यथ ॥ ४ ॥ धन्याः स्यात तदा यूयं यदा वो मत्कृते नराः । बाधि 66
ष्यन्तेऽप्यसूयन्तः सर्व्वदुर्व्वचनैर्मृषा ॥ ५ ॥ तदानन्दत हर्षेण व्याप्ताः स्वर्गे ह्यतः फलं । महद्वोऽ
स्ति तथा ह्यग्रेऽबाधन्तैव प्रवाचकान् ॥ ६ ॥ युष्मांस्तु धनिनो धिक् स्यादिह भूतं हि वः सुखं ।
भोज्यतृप्तांश्च धिग्युष्मान् परे हि क्षोत्स्यथ ध्रुवं ॥ ७ ॥ हसतो वोऽपि धिग्यस्माद्रुदन्तो विल
पिष्यथ । धिक् च युष्मान् यदा सर्व्वे प्रशंसिष्यन्ति वो नराः ॥ ८ ॥ तदैवामङ्गला यूयं तथा

हि पितरोऽपि वः । अग्रे मिथ्याप्रवक्तॄन् वै प्राशंसन् सत्यवाधकाः ॥ ९ ॥ किंतु मच्छृण्वतो
युष्मान् वच्मीति लवणं भुवः । वर्त्तध्वे विरसं चेत्तु तत्स्वादु स्यात्कथं पुनः ॥ १० ॥ सर्व्वथा तदक
र्म्मण्यं क्षेपणीयं वहिर्ध्रुवं । दलनीयं च मर्त्यानां पादद्वयतलेन वै ॥ ११ ॥ यूयमेव जग
द्दीप्तिर्नगरं तु नगोपरि । यत्संस्थितं कथं गुप्तं तद्भवेद्वीक्षणान्नृणां ॥ १२ ॥ कोऽपि प्रज्वाल्य
दीपं तु नाढकस्यार्पयत्यधः । किंतु दीपद्रुमे भासे सर्व्वेषां हि गृहोदरे ॥ १३ ॥ दीप्तिस्त ६७
थैव युष्माकं मनुष्याग्रे प्रभासतां । यया वः सुक्रिया दृष्ट्वा स्वःस्थं वः पितरं स्तुयुः ॥ १४ ॥
सप्रवक्तुस्तु शास्त्रस्य न नाशायाहमागतः । किंतु तत्सर्व्वपूर्त्यर्थ इति वित्तातिनिश्चयं ॥ १५ ॥
यावद्धि स्वर्गभूम्यौ न लुप्येतां तावदन्तरे । शास्त्रविन्दुर्नलोप्योऽप्यापूर्त्तेरित्येव वच्मि वः ॥ १६ ॥
योऽत एतद्व्यवस्थानां लघिष्ठामपि लङ्घयेत् । शिक्षयेच्च तथा नॄन् स्यान्मद्राज्ये लघुरेव सः ॥

१७ ॥ यस्त्वेताः पालयेत्सर्व्वाः शिक्षयेच्च तथा नरान् । स एव स्वर्गराज्येऽतो महान् ख्यातो
भविष्यति ॥ १८ ॥ फरीष्याध्यापकानां हि धर्म्माद्यदि न सत्तरः । धर्म्मो वः स्यात्तदा राज्यं
स्वर्गीयं न प्रवेक्ष्यथ ॥ १९ ॥ इत्यहं वच्मि वः सत्यं ततो यन्नवराज्यकैः । योग्यं यच्च पुरा
ज्ञातं तद्वै मे शृणुताधुना ॥ २० ॥ मा हन्या यस्तु हन्यात्स दण्ड्य इत्युदितं पुरा । शुश्रुवाहं तु
दण्ड्यं वै वच्मि भ्रातृमृषाक्रुधं ॥ २१ ॥ भ्रातरं यस्त्वरेब्रूयात्सभया गर्ह्य एव सः । यस्तु मूर्खे ६८
ति तं ब्रूयात्सोऽप्यग्निनरकार्हकः ॥ २२ ॥ तस्मान्नैवेद्यमात्मीयं वेद्यासन्ने यदानयेः । किंचि
च्चेन्मन्यसे भ्रातुरभियोगार्हकारणं ॥ २३ ॥ तदा तत्र बलिं त्यक्त्वा याहि तं भ्रातरं प्रति । वैरं
तेन च भंक्त्वाथ विभवे बलिमुत्सृज ॥ २४ ॥ प्राड्विवाकं यदाऽयेयाः सह त्वद्वैरिणाम्वथ ।
मार्गमध्ये स्थितस्तेन मेलनं कुरु यत्नतः ॥ २५ ॥ नतुवा सोऽक्षदर्श्यग्रे नयेत्क्रोधनकाय च । सोऽथ

त्वा घोरकारायां बन्धनार्थं समर्पयेत् ॥ २६ ॥ सत्यं ह्येतद्ब्रवीमि त्वां न तस्यास्त्वं कदाचन ।
निर्गमिष्यसि यावन्न दद्या अप्यन्तिमं पणं ॥ २७ ॥ त्वं मा व्यभिचरेरित्युक्तं शुश्रुव प्राक्तनान्
प्रति । यस्त्वीक्षतेऽनुरागात्स्त्रीं सोऽप्यन्तर्व्यभिचार्य्यतः ॥ २८ ॥ इत्यहं वोऽधुना वच्मि तत
श्चेत्तव दक्षिणं । नेत्रं स्वाभीष्टदृष्ट्या स्यात्पतनस्यैव कारणं ॥ २९ ॥ तदोत्पाट्य निरस्यापि त्वदर्थं
ह्यक्षिनाशनं । श्रेयस्ते सर्व्वदेहस्य प्रक्षेपान्नरकानले ॥ ३० ॥ चेद्वा दक्षिणहस्तस्ते भवेत्पतनका ६९
रणं । तदा तमपि निश्छिद्य दूरं प्रक्षिप यत्नतः ॥ ३१ ॥ श्रेयो ह्यस्ति त्वदर्थे तदेकस्याङ्गस्य ना
शनं । सर्व्वाङ्गानां तव क्षेपादनिर्वाणाग्निदुर्गतौ ॥ ३२ ॥ स्वभार्य्यावर्जको योऽस्यै त्यागपत्र
ददातु सः । इति पूर्व्वोदितं किंतु मया वः प्रोच्यतेऽधिकं ॥ ३३ ॥ यो हीनां व्यभिचारेण
स्वस्त्रियं हि विवर्जयेत् । व्यभिचारयतीमां स तद्वोढा व्यभिचार्य्यपि ॥ ३४ ॥ मा शपस्वा

नूतं शापांस्त्वीशाय स्वान् समाचर । इत्युक्तं प्राक्तनान् वस्तु वच्मि क्वापि शपस्व मा ॥ ३५ ॥
न स्वर्गेण विभोर्ह्यस्ति स वै सिंहासनं महत् । न पृथिव्यैव शप्तव्यं पादपीठो हि सा वि-
भोः ॥ ३६ ॥ नैवं यिरूषलेमेनोर्द्धराजो यत्पुरं न वा । मूर्द्ध्ना नहि शिखैकापि त्वया कार्या
सितासिता ॥ ३७ ॥ किंतु वोऽन्योन्यसंवादेऽथ किमित्येव नेति च । तिष्ठेद्यत्त्वधिकं ताभ्यां दुष्टोत्थं
ज्ञेयमेव तत् ॥ ३८ ॥ नेत्रान्नेत्रं दतो दन्तं दण्डयेरिति प्रोदितं । शुश्रुवाहं तु दुष्टाय नाभि-
द्रोतुं दिशामि वः ॥ ३९ ॥ हन्तुं देहि घ्नतेऽसव्यं कपोलं ते तथापरं । वस्त्राभियोगिने ते च
देह्यपि स्वपरिच्छदं ॥ ४० ॥ एकक्रोशमृतेर्विष्टिं योऽपि त्वामुपयोजयेत् । तेन सार्द्धं विना
वादात्क्रोशद्वयमपि व्रज ॥ ४१ ॥ यस्तु त्वां प्रार्थयेत् किंचिद्देहि तस्मै स्वशक्तितः । ऋणं यश्चार्थ-
येत्त्वत्तस्तस्मान्मा स्याः पराङ्मुखः ॥ ४२ ॥ प्रतिवासिन्यतिस्निह्येर्द्दुह्येश्चाप्यरये तथा । इत्युक्तं

किंत्वहं वच्मि प्रीणयध्वमरीनपि ॥ ४३ ॥ शपद्भ्योऽप्याशिषं दत्त द्रुह्यद्भ्यश्चाप्यनुग्रहं । ये वोऽ
सूयन्ति वाधन्ते चार्थयेतापि तत्कृते ॥ ४४ ॥ तथा स्वर्ग्यपितुः स्यात तनयाः सदसज्जनान् ।
स्वार्कं भासयतो ह्येव तद्द्वये चापि वर्षतः ॥४५॥ स्निह्यतो वो हि यूयं चेत् स्निह्येतातः किम
स्ति वः । फलं किं न तथा कुर्य्युः पापिनः करनायकाः ॥ ४६ ॥ यदि वा हितकारान् वः सु
कुर्य्यातैव केवलं । का प्रशंसाधिका वोऽस्ति किं नैवं कुर्य्युरन्यजाः ॥ ४७ ॥ ऋणं मोक्तुं च ७१
शक्तेभ्यो यदि दद्यात केवलं । का प्रशंसास्ति वः किं न तथा दद्युर्हि पापिनः ॥ ४८ ॥ तस्मान्न
केवलान् भ्रातॄन् स्निह्यन्तः सकलांस्त्वपि । सिद्धास्तथैव यूयं स्थ यथा स्वर्गस्थितः पिता ॥ ४९॥
दानं वो नरसाक्षात्तु मास्तु तत्कीर्त्तिलब्धये । यतो वः स्वर्ग्यपितृतः फलं न स्यात्कदाचन ॥
५० ॥ यदा दानं तु कुर्य्यास्त्वं मा यथा धर्म्मलिङ्गिनः । सभास्वध्वसु वा भिक्षूंस्तूरीध्वानैः

समाहूय ॥ ५१ ॥ आदरार्थं नराणां हि धर्म्मं कुर्वन्ति ते तथा । तच्चावापुः फलं योग्यमित्यहं
वच्मि वो ध्रुवं ॥ ५२ ॥ कुर्वतस्तव दानं तु गोपनेच्छोः सुयत्नतः । न वेत्त्वपि करो वामो
यत्कृतं दक्षिणेन ते ॥ ५३ ॥ अतो गुप्तं भवेद्दानं तवातश्च पितापि ते । यो गुप्तेभ्योऽपि प
श्येत्स व्यक्तं दास्यति ते फलं ॥ ५४ ॥ धर्म्मलिङ्गिवद्देव त्वं मार्थयेथैं सभान्तरे । शृङ्गाटकेषु
चाप्युत्थाः प्रार्थयन्ते नृदृष्टये ॥ ५५ ॥ तत्फलं ते ह्यवापुर्वै त्वं तु प्रार्थयसे यदा । प्रविश्यान्तर्गृ ७२
हे स्वीये द्वारं चारुध्य यत्नतः ॥ ५६ ॥ तदा स्वां प्रार्थनां पित्रे गुप्तं प्रकुरु स त्वतः । यो गुप्ते
भ्योऽपि पश्येद्वै व्यक्तं दास्यति ते फलं ॥५७॥ त्वं तु माम्रेडितं कुर्य्याः प्रार्थनास्वन्यजा इव ।
श्रवणं स्वीयदेवानामीक्षमाणा बहूक्तिभिः ॥ ५८ ॥ मा कुरुध्वं तथा यूयं यदावश्यं हि वः
पिता । प्रागपि प्रार्थनाद्वेत्ति प्रार्थयध्वमतस्तथा ॥ ५९ ॥ स्वर्गोषितास्मत्पितरार्य्य पुण्यं

त्वन्नाम मन्येत सदैव लोकैः । त्वद्राज्यमायातु यथा च नाके तथैव भूमौ भवतु त्वदिच्छा ॥ ६० ॥
प्रदेहि नः प्रात्यहिकान्नमद्य क्षमामहे चैव यथाधमर्णान् । तथा क्षमस्वेश्वर नोऽपि दीनान्
ये तेऽधमर्णा हि बभूविमाघैः ॥ ६१ ॥ परीक्षणे मा पितरानयास्मान् दुष्टस्य शक्तेरपि चाव
नित्यं । तवास्ति राज्यं हि पराक्रमश्च तेजश्च लोकेष्वखिलेष्विति स्यात् ॥ ६२ ॥ अपराधान्
हि यूयं चेत्क्षमध्वे सर्वदा नृणां । तथा स्वर्ग्यपिता वोऽपि युष्मदीयान् क्षमिष्यते ॥ ६३ ॥ ७३
सोऽपराधक्षमश्चेत्तु नृभ्यो युष्मत्कृतो नहि । तदा पित्रैव युष्मभ्यं दोषिभ्यो न करिष्यते ॥ ६४ ॥
त्वं यदोपवसस्येव मा भवेर्धर्म्मलिङ्गिवत् । ये म्लानवदनाः स्वीयं दर्शयन्ति ह्युपोषणं ॥ ६५ ॥
ततेऽवापुः फलं नृभ्य इत्यहं वच्मि वो ध्रुवं । त्वं त्वभ्यक्तशिरस्कः स्या धौतास्यश्चोपवासकृत् ॥
६६ ॥ तुभ्यं हि न नृणां साक्षात्किंतु गुप्तदृशः पितुः । तथैवोपोषितायाथ स वै दास्यति
II

तत्फलं ॥ ६७ ॥ अर्थसंचितये कोषं मा कुरुध्वं महीतले । कलङ्को यत्र कीटाश्चादन्ति चौरा
हरन्ति च ॥ ६८ ॥ स्वर्गे त्वात्मार्थसंचित्यै कोषं कुरुत यत्र न । खाद्यं कीटकलङ्कैर्वै नापहार्य्यं
च मोषकैः ॥ ६९ ॥ युष्माकं यत्र कोषो हि समस्तनिधिको भवेत् । तत्र वो हृदयं चैव स्थास्यत्यत्र
न संशयः ॥ ७० ॥ दीपो नेत्रं शरीरस्य तस्मिंश्चाच्छे स्थितेऽखिलं । देहं भाःपूरितं तस्मिन्नाविले
तु तमः प्लुतं ॥ ७१ ॥ तस्मादन्तःस्थितो यस्ते दीपो भवति सोऽपि चेत् । तमोरूपीकृतोऽस्त्येव ७४
तत्तमोऽथ कियन्महत् ॥ ७२ ॥ स्वामिनौ सेवितुं कोऽपि न शक्नोति नरः सकृत् । प्रीणयेद्धि तयो
रेकं विद्रुह्येच्चापराय सः ॥ ७३ ॥ एकस्मिन् वा मनोयोगी सोऽवमन्येत चापरं । सेवा तथैव
युष्माभिर्न शक्येशकुवेरयोः ॥ ७४ ॥ तस्माद्वो वच्मि जीवार्थं मा तर्कयत यत्नतः । किं खाद्यं
किं च पातव्यं परिधेयं च किं तनौ ॥ ७५ ॥ किं न जीवो हि युष्माकं श्रेयानस्ति तदन्नतः ।

किं न वा तनुरेवं वो वस्त्रेभ्यः श्रेयसी ध्रुवं ॥ ७६ ॥ पक्षिणः पश्यताकाशे यैर्नैवोप्तं वै फलं न वा ।
छिन्नं न संचितं वापि बहुयत्नात्खलान्तरे ॥ ७७ ॥ किंतु तान् वः पिता पाति तेभ्यः किं न
स्थ सत्तराः । कस्तु युष्मासु तर्कैः स्वां पौरुषांइर्द्धयेत्ननूं ॥ ७८ ॥ तथा शक्तं न युष्माभिर्लघिष्ठ
मपि कर्म्म चेत् । किं तदा तर्कयेतैव वस्त्राद्यखिलकर्म्मसु ॥ ७९ ॥ पश्यतर्द्धानि पद्मानि न
श्राम्यन्ति वयन्ति न । भूषितानि तु यद्वन्न सलोमापि प्रतापवान् ॥ ८० ॥ इति वो वच्म्यहं ७५
किन्तु तथा चेत्परिधापयेत् । तृणमीशो यद्यद्यास्ति श्वस्तु चुल्ल्यां निरस्यते ॥ ८१ ॥ तदा
वः सोऽल्पविश्वासाः किं नाधिकमविष्यति । तस्मात्पेयान्नवस्त्रार्थंमा स्त व्याकुलमानसाः ॥ ८२ ॥
एतानि ह्यखिलान्येव मार्गयन्त्यन्यजातयः । तदावश्यं च युष्मभ्यं वेत्ति वः स्वर्गिकः पिता ॥
८३ ॥ ऐश्वं राज्यं च धर्म्मं च यूयं मार्गयतादितः । तदाचामूनि सर्वाणि तथैव प्राप्स्यथेश्व

रात् ॥ ८४ ॥ तस्मात्पराहकार्य्येभ्यो मा तर्कयत तानि हि । स्वाहे तर्क्यान्यलं त्वहे सर्व्वस्मै
निजयापदा ॥ ८५ ॥ विचारयत मा दोषांस्ततो नैव विचारिताः । स्यात मा ब्रूत दण्ड्यत्वं
ततो यूयं न दापिताः ॥ ८६ ॥ यं विचारं हि कुर्य्यातान्येषां कार्य्यः स वः प्रति । यया मित्या
मिमीध्वे च स्याद्वः प्रत्यपि सा मितिः ॥ ८७ ॥ सुमितिं दत्तवद्भ्योऽपि युष्मभ्यमधिकामपि ।
संपीडयोद्वृत्य संचाल्य चैवं दास्यन्ति मानवाः ॥ ८८ ॥ किं वा भ्रातुः स्थितां नेत्रे कणां त्वमव ७६
लोचसे । नतु काष्ठमिह स्वीयेऽनुभवस्यक्षिणि स्थितं ॥ ८९ ॥ भ्रातरिच्छामि ते नेत्राद्वहिष्कर्तु
मिमां कणां । इति त्वं वै कथं ब्रूयाः काष्ठे तेऽक्ष्यन्तरे स्थिते ॥ ९० ॥ धर्म्मलिङ्गिन् स्वकादादौ
काष्ठमुत्थापयांक्षिणः । सुदृष्ट्या चाथ निःक्षेप्तुं याहि भ्रात्रक्षितः कणां ॥ ९१ ॥ श्वभ्यो मा दत्त
पुण्यं न कोलाये स्यत वा मणीन् । त मृद्नीयुर्हि तान् वोऽपि विदृणीयुरभिद्रुताः ॥ ९२ ॥ याच

ध्वमथ युष्मभ्यं देयमन्विच्छताप्स्यथ । प्राप्स्यथ द्वारमाहन्त ततस्तद्वोऽपि मोक्ष्यते ॥ ९३ ॥ याच
मानो हि लभतेऽन्विच्छंश्चाप्नोत्यशेषकः । द्वारं चाप्याघ्नते यत्नात्सर्वस्मै तद्विमोक्ष्यते ॥ ९४ ॥
युष्माकं कः सुतायान्नं याचमानाय दास्यति । शिलां किं वोरगं तस्मै दास्यत्येव झषार्थिने ॥
९५ ॥ अतो यूयमसन्तोऽपि सुतेभ्यश्चेत्सुयच्छथ । किं नाधिकं पिता स्वर्ग्योऽर्थयद्भ्यो वः सुदा
स्यति ॥ ९६ ॥ यद्यद्वः प्रत्यतः कार्य्यमन्यैरिच्छेत तत्तथा । कुरुध्वं तान् प्रतीत्येष सारः शास्त्र ७७
प्रवाचिनां ॥ ९७ ॥ वेहध्वं संकटे द्वारे वेष्टुं द्वारं वृहद्धि तत् । स च मार्ग उरुर्येन यान्ति मर्त्य
गणा लयं ॥ ९८ ॥ संकटं त्वस्ति तद्द्वारं संकीर्णो मार्ग एव सः । येनाधिक्रम्यते जीवोऽल्पैश्च
तत्प्राप्यते नरैः ॥ ९९ ॥ भेयं मिथ्याप्रवक्तृभ्यो येऽन्तरीहामृगा इव । लुब्धाः परिहितै
रण्यत्वच एवाक्रमन्ति वः ॥ १०० ॥ विज्ञेयाः स्वफलात्ते हि कण्टकिभ्यः कथं नराः । द्राक्षाः

किंवा स्नुहीभ्यो ऽपि चिनुयुर्हेमदुग्धकं ॥ १०१ ॥ तथा भद्रो ऽखिलो वृक्षः फलं भद्रं प्रसूयते ।
मन्दो वृक्षः फलं चैव मन्दमुत्पादयेत्किल ॥ १०२ ॥ भद्रवृक्षो न शक्नोति सवितुं कुफलानि हि ।
न शक्नोति तथा मन्दः सुफलानि कदाचन ॥ १०३ ॥ यो वृक्षो न फलेद्भद्रं छेद्यः क्षेप्यश्च सो ऽ
नले । ततो वै फलमात्रात्तान् विजानीयात शिक्षकान् ॥ १०४ ॥ स्वामिन् स्वामिन्निति तु
मे किं ब्रूथाज्ञावमानिनः । नैतद्वाग्वेक्ष्यति स्वर्गं किंतु मत्पित्रभीष्टकृत् ॥ १०५ ॥ स्वामिन् ७८
स्वामिंस्त्वदीयेन नाम्ना न प्रोच्म किं वयं । निश्चिक्षिपिम भूतान्न नाद्भुताश्चकृम क्रियाः ॥
१०६ ॥ इति मे बहवो ऽप्युये दिने वक्ष्यन्त्यहं तु तान् । वक्ष्ये नाजानमपि वो मत्तो यात विध
र्म्मिणः ॥ १०७ ॥ मद्वाक्यानि तु यः श्रुत्वा पालयेदेव तं निभं । धीमतो वच्मि वाटीं स्वां नि
र्म्मातुः प्रस्तरोपरि ॥ १०८ ॥ या पतत्स्वपि वर्षेषु नदीभिश्च परिप्लुता । आहता चापि वा

तैर्न पपात स्थिरमूलका ॥ १०९ ॥ यस्तु वाक्यानि मे श्रुत्वा न पायाद्रच्मि सन्निभं । तं मूर्खस्य

म्वकां वार्टां निर्म्मातुर्वालुकोपरि ॥११०॥ या संपतत्सु वर्षेषु नदीभिश्च परिप्लुता । पवनैराह

ता चैवाधः पपात समन्ततः ॥ १११ ॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि(मत्थायस्य पञ्चम

षष्ठसप्तमसर्गेभ्यो लूकस्य षष्ठसर्गाच्चोद्धृतः ) पर्व्वतीयोपदेशो नाम द्वादशोऽध्यायः ॥

गुरुरुवाच ॥ इत्येनमुपदेशं ते श्रुत्वा शक्तिमता यथा । न यथाध्यापकैर्येष्वा तथोक्तं नि ७९

खिला गणाः ॥ १ ॥ अधिकं विस्मयं प्राप्यावतरन्तं महागुरुं । अन्वीयुः पर्व्वतादेव कस्या

श्चिन्निकटे पुरः ॥ २ ॥ तं ततोऽभ्येत्य कुष्ठ्येको नमस्कृत्येदमब्रवीत् । प्रभो चेदिच्छसि त्वं मां

कर्त्तुं शक्नोषि निर्म्मलं ॥ ३ ॥ इति श्रुत्वा प्रभुर्हस्तं वितत्य स्पृष्टवांस्ततः । अहमिच्छाम्यतः

पूतो भवेति प्रत्युवाच तं ॥ ४ ॥ तत्क्षणाच्चापि तद्देहाद्गलत्कुष्ठं विनिर्गतं । दयालुः शुद्धकारी

तु तमित्याज्ञापयत्तदा ॥ ५ ॥ श्रीयेषूरुवाच ॥ शृणु मा वद् कस्मैचिदेतत्कर्म्म कदाचन । किं
तु निर्याय सकलां मोस्याज्ञां प्रतिपालय ॥ ६ ॥ यज्वने स्वशरीरं त्वं दर्शयित्वा निवेदनं ।
लैव्यस्कन्धोदितं सर्व्वं लोकसाक्ष्यकृते कुरु ॥ ७ ॥ गुरुरुवाच ॥ एतां श्रुत्वापि स त्वाज्ञां कीर्त्त्यं
निच्छोः प्रभोस्तदा । निर्गत्य सकलेभ्योऽपि शुद्धिवार्त्तामसूचयत् ॥ ८ ॥ शोधकस्तु तदा गन्तुं
दक्षिणां दिशमिच्छुकः । गालील्यान् प्रति संपूर्णे पर्व्वतीयोपदेशने ॥ ९ ॥ त्यक्त्वा तां नगरी ८०
मादौ सशिष्यः समकल्पयत् । वेष्टुं कपर्णहूमेऽपि स्वीये मार्गान्तरे पुरे ॥ १० ॥ तं तु तत्राभि
गच्छन्तं त्यक्ष्यन्तं वाचिरादपि । श्रुत्वा सत्यमतालम्बी रोमीयः कोऽपि गुल्मपः ॥ ११ ॥
प्रियभृत्यचिकित्सार्थं प्रभोरिच्छन्ननुग्रहं । ज्येष्ठान् कांश्चित्समाहूयाभ्युवाचेदं यहूदिकान् ॥
१२ ॥ गुल्माधिपतिरुवाच ॥ मत्कृते प्रेमतो येषूमभियात महागुरुं । यूयं ह्यार्य्यतरा मन्तो

ज्ञाताः पुण्येस्त्रयेलिभिः ॥ १३ ॥ ततो मद्भृत्यमुख्येण पक्षाघातेन पीडितं । सम्यक् चिकित्सितुं
तं वै याचताद्भुतकारिणं ॥ १४ ॥ गुरुरुवाच ॥ इत्युक्तास्त उदारेणोदासीनेनामुना ततः ।
विशन्तं स्वपुरीं येषूमभिगत्याब्रुवन्निदं ॥ १५ ॥ ज्येष्ठा ऊचुः ॥ दययैहि गुरो रौम्यगुल्मे
शस्य निकेतने । यस्य भृत्यः प्रियो घोरपक्षाघातप्रपीडितः ॥ १६ ॥ इत्थं ह्यनुग्रहं प्राप्तुमर्हो वि
ज्ञेय एव सः । हेत्रयेल्यहितो यस्मान्निर्म्ममे चापि नो मठं ॥१७॥ गुरुरुवाच ॥ वरदस्तु प्रभुर्भृत्यं ८१
चिकित्सिष्याम्यहं गतः । इति प्रत्युच्य तैः सार्द्धं ययौ रौम्यगृहं प्रति ॥ १८ ॥ निकटे चापि गे
हस्योपस्थितं प्रेरितास्तदा । केऽपि गुल्मेशसुहृदस्तस्योदैरन्निदं वचः ॥ १९ ॥ गुल्माधिपति
रुवाच ॥ मा क्लिश्यस्व प्रभो ते हि मद्गृहान्तः प्रवेशनं । अवाप्तुं नास्म्यहं योग्यस्ततो नागां
त्वदन्तिके॥ २० ॥ किंत्वीर्य्यास्त्वं वचोमात्रं नाथाज्ञारूपकं ततः । मद्भृत्यो निश्चयं रोगी चि

कित्सां प्राप्स्यति क्षणात् ॥ २१ ॥ अहं ह्यन्यैर्नियुक्तोऽपि वाहिनीनायकादिभिः । नियोजि
तान् मयाप्येवं सैन्यानाज्ञापयामि ह ॥ २२ ॥ गच्छेति च मयादिष्टो यात्येकोऽन्यस्तथोदितः ।
एहीत्यायाति भृत्यश्च कुर्वित्युक्तः करोति तत् ॥ २३ ॥ गुरुरुवाच ॥ इति संश्रुत्य रौम्यस्य तस्य
प्रत्ययलक्षणं । विस्मितः प्रभुरेतद्वै स्वानुगेभ्योऽब्रवीद्वचः ॥ २४ ॥ श्रीयेषूरुवाच ॥ यावानेतस्य
विश्वासोऽन्यजस्यास्ति मया क्वचित् । नैस्रयेलेष्वपि प्राप्तस्तावानित्येव वच्मि वः ॥२५॥ भूयांसो
ऽपि समेष्यन्तः प्रतीच्याः प्राग्दिशोऽपि च । अब्रहेशाहकाभ्यां च याकोबेन च ते सह ॥२६॥ स्वर्ग ८२
राज्ये समासीरन् किंतु राज्यसुता अपि । वहिस्तमसि निःक्षेप्याः क्रन्दद्दन्तस्वनालये ॥ २७॥
किंतु त्वं कुशलं याहि सांप्रतं गुल्मनायक । यथा च प्रत्ययः सम्यक् तथा ते भवतु ध्रुवं ॥ २८ ॥
गुरुरुवाच ॥ इत्युक्ते धर्म्यरौम्याय गुल्माधिपतये तदा । तद्भृत्योऽपि क्षणात्तस्मात्पक्षाघाताद

मुच्यत ॥ २९ ॥ तत्परेऽह्नि तु येषूर्न स्थित्वा कापर्णहूमिषु । व्रजन् याम्यदिशं पुर्य्यां नैमाख्या
यामुपस्थितः ॥ ३० ॥ कतिचिच्चापि तं शिष्या व्यूहोऽन्येषां महानपि । तस्मिन् यैरूषलेम्ये वै
गच्छन्तामन्विताः पथि ॥ ३१ ॥ गोपुरान्नैमपुर्य्यास्तु नृस्कन्धैर्वहिरौह्यत । मृतः कोऽप्यद्वितीयो
यो विधवाया अभूत्सुतः ॥ ३२ ॥ तस्य माताप्यसौ तत्र निर्यान्ती वाहकैः सह । पुरवास्या
वृताऽवीरारोदीद्दुःखपरिप्लुता ॥ ३३ ॥ तां दृष्ट्वा करुणाविष्टो मा रौत्सीरित्यवोचत । येषू ८३
रथ शवाधारमभिगत्य समस्पृशत् ॥ ३४ ॥ वाहकेषु स्थितेष्वत्रोत्तिष्ठ मद्वाक्यतो युवन् ।
इत्येवोच क्षणाच्चैष उत्थायारभतेरितुं ॥ ३५ ॥ यः क्षणे प्राक् शवोऽभूत्तु स्वमात्रे तं समर्पितं ।
विस्मयेनैव मुग्धायै दृष्ट्वा व्यूहा भयं गताः ॥ ३६ ॥ महानीशप्रवक्ता नो मध्य उत्तो विभुश्च वै ।
स्वलोकमालुलोचेऽपीत्यूचुस्ते संस्तुतेश्वराः ॥ ३७ ॥ तत्कीर्त्तिरपि विस्तीर्णास्थां गलीलायहू

द्वयोः । सीम्नि दक्षिणभूमौ च सर्वस्यां सत्पुरेऽपि च ॥ ३८ ॥ इति श्रीख्रीष्टसंगीतायां पुत्राभिषेक पर्व्वणि (मोसिरचितपञ्चशास्त्रे लैव्यस्कन्धस्य चतुर्द्दशसर्गाच्छान्तमत्थायस्य सप्तमाष्टमसर्गाभ्यां शान्तमार्कस्य प्रथमसर्गाच्छान्तलूकस्य पञ्चमसप्तमसर्गाभ्यां चोद्धृतो ) मोचकवाङ्माहात्म्यं नाम त्रयोदशोऽध्यायः ॥

गुरुरुवाच ॥ अशृणोदपि बद्धः स यद्दर्शनैः पारनीवृति । दुर्गेऽग्रगो महान् भीमेऽद्भुतकर्म्माणि ८४
सत्प्रभोः ॥ १ ॥ तत्सर्व्वं हि हिताः शिष्या आर्य्याय गुरवे तदा । स्नापकायावदन् भूपे प्रवृत्ते युद्धकर्म्मसु ॥ २ ॥ चिरेष्टमभिषिक्तस्य गलीलायामसौ नवं । येषूर्नास्थापयद्राज्यं कीर्त्तिनोऽप्यखिलैर्भृशं ॥ ३ ॥ इति तैर्ज्ञापितो बद्धो जकरीयोद्भवस्तदा । तेभ्यो वृत्वा द्वयं यत्नादेतदाज्ञापयद्बुधः ॥ ४ ॥ योहन्निरुवाच ॥ तमाश्वभिगतौ शिष्यौ पृच्छतं मत्कृते यथा । आगा

मी स महान् किं त्वं किंवापेक्ष्योऽन्य एव नः ॥ ५॥ गुरुरुवाच ॥ इत्यादिष्टौ तदा शिष्यौ निःसृत्यो
यान्मखैरूषः । नलतीरां नदीं तीर्त्वा यहूद्यं देशमागतौ ॥ ६ ॥ तत्रातिप्रचलन्तौ च तौ गलीला
न्तिकेऽप्यरं । येषूं नैमातप्रगच्छन्तं दक्षिणं प्रत्यवाप्नुतां ॥ ७ ॥ व्यूहैर्यिरूषलेमं तु तथा गच्छद्भि
रन्वितः । बहून् नानागदार्त्तांश्च सरण्यां सोऽचिकित्सयत् ॥ ८ ॥ तन्मध्येऽग्रचरस्यैतावनुगौ तं
समाश्रितौ । स्वगुरोरेव तद्वाक्यं मोचकं प्रत्युदैरतां ॥ ९॥ योहन्निशिष्यावूचतुः ॥ स्नापकः ८५
किल योहन्निरावां त्वां प्रष्टुमैरयत् । आगामी स महान् किं त्वं किंवापेक्ष्योऽन्य एव नः ॥
१० ॥ श्रीयिषूरुवाच ॥ परिदृश्य युवां यानौ तदा योहन्नयेऽखिलं । यद्दृष्टं यच्छ्रुतं चात्र तद्वै
सूचयतं ध्रुवं ॥ ११ ॥ अन्धा वा अनुपश्यन्ति चलन्त्यपि च पङ्गवः । कुष्ठिनश्चापि पूयन्ते शृण्वन्ति
वधिरा अपि ॥ १२ ॥ उत्तिष्ठन्ति गतप्राणाः सुवार्त्ताप्तापि दुर्व्विधैः । यं त्ववस्था मदीया न

पातयेद्धि स मङ्गलः ॥ १३ ॥ गुरुरुवाच ॥ प्राप्यैतत्स्पष्टलक्ष्मौघं राज्ञ आगामिनस्तु तौ । अपे
क्ष्यस्याखिलैः शास्त्रहितमार्गस्थधार्म्मिकैः ॥ १४ ॥ तत्सर्व्वं स्वीयगुरवे निबद्धायापि वै तदा । घो
रान्तशृङ्खलैर्हर्षाद्ध्रुवं सूचयितुं गतौ ॥ १५ ॥ तयोश्चापितयोर्व्यूहान् प्रभुस्तत्र परिस्थितान् ।
यहूद्यादीनिदं प्रोचे योहन्निस्तावकं वचः ॥ १६ ॥ श्रीयेषूरुवाच ॥ किं द्रष्टुं यूयमखिला यर्द्दा
निप्रान्तरे गताः । किं नलं चपलं वातैः क्षुभ्यमाणं निरन्तरं ॥ १७ ॥ अथवा जग्म किं द्रष्टुं ८६
किं मृद्वंशुकभूषितं । तन्न ते सौम्यवस्त्रा हि विद्यन्ते राजवेश्मसु ॥ १८ ॥ अथवा जग्म किं
द्रष्टुं किं महेशप्रवाचिनं । नूनमेवेति वो वच्मि प्रवक्तुश्चापि सत्तरं ॥ १९ ॥ यतः सोऽयं प्रवक्त्रा
य ईश्वदूतेन भाषितः । त्वदग्रेऽहोऽध्वप्रस्तुत्यै मच्चरं प्रेरयाम्यहं ॥ २० ॥ इत्युक्तान्वीश्वरचराद्यो
हन्नेः स्नापकान्नहि । आसीन्नार्य्युद्भवानां मध्ये कश्चित् क्वापि महत्तरः ॥ २१ ॥ किंतु स्वर्गीय

राज्ये यो लघिष्ठोऽपि भवेन्नरः । योहन्नेरपि नं विन्न भविष्यन्तं महत्तरं ॥ २२ ॥ तच्छ्रोतारः
समस्तास्तु करसंग्राहिणोऽपिच । ईशं स्वीचक्रिरे धर्म्मं योहन्निजलसंस्कृताः ॥ २३ ॥ फरी
ष्याध्यापकास्त्वेव तेन न स्नापिता जले । ततः स्वार्थे निराचक्रुरीश्वरस्यापि मन्त्रणं ॥ २४ ॥
योहन्नेस्तु परे नित्यमिदानीं चापि यत्नतः । स्वर्ग्यमाक्रम्यते राज्यं विक्रान्ताश्च हरन्ति
तत् ॥ २५ ॥ नित्यं तत्प्राक् स्थितं शास्त्रं सर्व्वे वेशप्रवाचिनः । आगते तु वेरे तस्मिन् संपूर्णा ८७
भूतदावली ॥ २६ ॥ स्वीकार्य्यं यदि युष्माभिरप्ययं यः प्रतिश्रुतः । मलाकीयेन सोऽलीयः शृणोतु
श्रुतिमानिदं ॥ २७ ॥ वर्त्तमानान्मनुष्यांस्तु केषां वक्ष्यामि सन्निभान् । ते बाला इव येऽन्यो
न्यमासीना आहुरापणे ॥ २८ ॥ वादयत्सु किलास्मासु वेणुं यूयं न नृत्यथ ॥ विलपत्स्वपि चा
स्मासु यूयं न रुदिथाहिताः ॥ २९ ॥ अभोजी स ह्यपायी च यदा योहन्निरागतः । तदा ते

प्रावदन् लोका भूतघ्नस्तोऽस्त्यसाविति ॥ ३० ॥ किंतु भोजी च पायी च नरपुत्रो यदागतः ।
उच्चुर्गृध्रः सुरापश्च पापिनामप्यसौ सखा ॥ ३१ ॥ इति तेऽसूयका अज्ञाः किंतु या संस्थितोभयोः ।
सद्बुद्धिः स्वसुतैः सर्वैर्विज्ञाता स्वीकृता च सा ॥ ३२ ॥ गुरुरुवाच ॥ तथा योहन्निनाये यो नलारण्ये
ऽपि लक्षितः । वनमाध्वीकभोक्त्रैव स्थिरेणाघविरोधिना ॥ ३३ ॥ स प्रभुर्नृसुतः स्वीयं प्रशशंसाग्रगं
तदा । तं प्रत्यप्यन्तिमां प्रैर्य्य स्ववार्त्तां बन्धपीडितं ॥ ३४ ॥ तथोक्तवन्तमेकस्तु येषूं तत्पुर ८८
वासिनां । सीमोनाख्यः फरीष्योऽपि स्वगृहेऽत्तुं न्यमन्त्रयत् ॥ ३५ ॥ तत्र गत्वा च भुञ्जानं फरीष्येण
सह प्रभुं । अहो काप्यभ्ययच्छत्स्त्री पापिनी तत्र विश्रुता ॥ ३६ ॥ सा हि तत्र तमासीनं प्राक्
श्रुत्वाघविमोचकं । सुचिक्कणदृशत्पात्रं सुगन्धैः पूर्णमानयत् ॥ ३७ ॥ पदोस्तस्य पतन्ती च रुदन्ती
चाश्रुधारया । अङ्घ्री अक्षालयत् सा वै प्रक्षरन्त्या निरन्तरं ॥ ३८ ॥ स्वमूर्द्धश्चापि केशैस्तौ

मुहुर्मुहुरमार्जयत् । चुम्बन्ती पर्यलिम्पच्च यत्नात्सा चन्दनादिभिः ॥ ३९ ॥ दृष्ट्वैतत्त्वद्गुरुं
जानन् फरीष्यः स निमन्त्रकः । स्वचित्तेऽचिन्तयच्चेत्स्यात्सत्य ईशप्रवाच्ययं ॥ ४० ॥ तदा
किं न सुविद्याद्वै कीदृश्यैषोऽधुना स्त्रिया । स्पृश्यते विदितेयं हि पापिनीत्यखिलैरिह ॥ ४१ ॥
तच्चित्तं तु प्रभुर्ज्ञात्वाब्रवीदिच्छामि किंचन । वक्तुं सीमोन त इति सत्यवादीद्गुरो वद ॥ ४२ ॥
श्रीयेषूरुवाच ॥ द्वावास्तामधमर्णौ वा एकः पंचशतं तयोः । मुद्रापादानुदधरत्पंचाशच्चापर ८९
स्तथा ॥ ४३ ॥ न किंचिदपि दातुं तु शक्तयोस्तदृणं तयोः । उत्तमर्णः प्रसादेन सम्यगक्षमत स्वयं
॥ ४४ ॥ कतरोऽथ तयोर्ब्रूहि त्वं सीमोनाधमर्णयोः । उत्तमर्णं दयालुं तमधिकं प्रीणयिष्यति
॥ ४५ ॥ फरीष्य उवाच ॥ योऽधिकोद्धारभारेण पीडितोऽभूद्गुरो स वै । अधिकं तद्विमोक्तारं
प्रीणयेदिति मे मतिः ॥ ४६ ॥ गुरुरुवाच ॥ एतदाकर्ण्य सत्यं वै प्रत्ययवादीरिति प्रभुः ॥ उक्त्वा

तां दर्शयन्नारीं फरीष्यं पुनरब्रवीत् ॥ ४७ ॥ श्रीयेषूरुवाच ॥ इमां त्वं वीक्षसे नारीं सीमोनाहं त्वदालये । विष्टा न त्वत्करात्किंचिदपि पाद्यमवाप्नुवं ॥ ४८ ॥ किंत्वेषा मत्पदौ यत्नादप्यक्षालयदश्रुभिः । केशैश्चापि स्वकैस्तौ वै पुनःपुनरमार्जयत् ॥४९॥ प्रविशन्तं गृहे ते मां नाचुम्बः किंत्वियं मम । नता तत्कालतोऽप्यङ्घ्री संचुचुम्ब निरन्तरं ॥ ५० ॥ तैलेनापि शिरस्त्वं मे नानञ्जिथ कदाचन । एषा तु चन्दनाद्यैर्मे पर्यलिम्पत्पदावपि ॥ ५१ ॥ ततोऽहं त्वामृतं वच्मि तत्पापानि बहून्यपि । विमुक्तानि महाप्रेम्णस्तस्यां लक्ष्म हि दृश्यते ॥ ५२ ॥ यो विमुक्ताल्पपापस्तु प्रीणयेदल्पमेव सः । किंतु ते नारि पापानि विमुक्तानीति मे शृणु ॥ ५३ ॥ गुरुरुवाच ॥ इति श्रुत्वाखिलास्तत्र ये स्थिताः सहभाजिनः । कोऽयं पापविमोक्तेति हृदि ते समचिन्तयन् ॥ ५४ ॥ येषूस्तु न मनस्तेषु संयोज्य स्त्रीं तदा पुनः । अभ्यूचे कुशलं याहि मुक्ता त्वं श्रद्धया स्वया

॥ ५५ ॥ यिरूषलेम्यमार्गे तु स प्रचल्य ततो वृतः । यात्रिकैर्बहुभिः पुर्य्यां महत्यामप्युपस्थितः ॥ ५६ ॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मलाकीयभव्यवाक्येभ्यो मत्थायस्यैकादशसर्गा ल्लूकस्य सप्तमसर्गाच्चोद्धृतो) दुर्विधार्थसुवार्त्ता नाम चतुर्द्दशोऽध्यायः ॥

शिष्य उवाच ॥ स प्रभुस्तु तदा कस्मात् स्वसंस्कृत्याः परे पुनः । गतो यिरूषलेमेऽथ यात्रिकै र्बहुभिर्वृतः ॥ १ ॥ गुरुरुवाच ॥ त्राणपर्व्वकृते पूर्व्वं यथा तत्र गतः प्रभुः । तथेदानीं द्वितीयाय ९१ पंचाशत्ख्यातपर्व्वणे ॥ २ ॥ उभयोर्ह्यखिलैर्योग्यं धर्म्मशीलैस्त्रयेलिभिः । दूरादपि समायातुमीश्वर स्यार्घ्यमन्दिरं ॥ ३ ॥ किंतु यद्दर्शितं येष्वाद्भुतं कर्म्म महापुरे । एतस्मिन्समये यच्च प्रोक्तं तच्छृणु शिष्य मे ॥ ४ ॥ आसीन्मेषापणे तत्र पंचघट्टसमावृता । यज्ञीयपशुशुद्ध्यर्थं शुभा पुष्करिणी स्थिता ॥ ५ ॥ सा दयालयनाम्नी वै यतस्तद्द्वारि लोडिते । परिचारकहस्तेन चिकित्साप्ता

रूजार्त्तिभिः ॥ ६ ॥ तेष्वतः पंचघट्टेषु वितर्ग्याच्छादितेषु वै । समास्तान्धाबलक्षीणपङ्गव्यूहो
निरन्तरं ॥ ७ ॥ पर्व्वपूर्व्वे शनै तां तु येषूः पुष्करिणीं गतः । अष्टत्रिंशाब्ददौर्बल्यपीडितं नर
मैक्षत ॥ ८ ॥ चिरादपि तथाभूतं तं सुजानन्नवोचत । स्वास्थ्यं किमिच्छसीत्युक्तः शयानस्त्व
ब्रवीदसौ ॥ ९ ॥ दुर्ब्बल उवाच ॥ न महाशय कोऽप्यस्ति हितो यो लोडितेऽम्भसि । मां नयेद्वट्ट
तोऽन्यस्तु मत्प्राग्विशति सन्ततं ॥ १० ॥ गुरुरुवाच ॥ इदं श्रुत्वा प्रभुः प्रोचे खट्वामुत्थाप्य वै चल । ९२
तत्क्षणाच्चापि सुस्थः स भूतः सम्यक् चकार तत् ॥ ११ ॥ यहूद्यास्तु चलन्तं तं दृष्टा केचित्ततो
ऽब्रुवन् । अद्य विश्रामवारोऽस्ति खट्वां त्वं वहसे कथं ॥ १२ ॥ दुर्बल उवाच ॥ यो मां सुस्थं
चकाराद्य चिराद्दौर्बल्यपीडितं । स एवेदमवादीन्मां खट्वामुत्थाप्य वै चल ॥ १३ ॥ यहूद्या
ऊचुः ॥ कः खट्वां परिवोढुं त्वां तथा मर्त्य उपादिशत् । विश्रामाहे तदापि प्राक् प्रवृत्तो रोग

मोचने ॥ १४ ॥ गुरुरुवाच ॥ इति संपृच्छनस्तान्न प्रतिवक्तुं शशाक सः । नाभ्यजानाद्धि येषूं
सोऽबलः स्वस्वास्थ्यकारिणं ॥ १५ ॥ बहुव्यूहावृतायाश्च पुष्करिण्याः प्रभुस्तदा । तच्चिकित्सां
समाचर्य्य गुप्तितोऽन्तर्हितोऽभवत् ॥ १६ ॥ विश्रामाहे समाप्ते तु यदायातं दिनं महत् । पंचा
शत्पर्व्वणः सर्व्वैरैत्त्रयेलैः समादृतं ॥ १७ ॥ तदा धर्म्मकृने येषूः स्थित ईश्वरमन्दिरे । दृष्ट्वा तं
दुर्बलं मध्येऽर्च्चिनामभ्यब्रवीदिदं ॥ १८ ॥ श्रीयेषूरुवाच ॥ अहो त्वं प्रापिथ स्वास्थ्यं मा कार्षीः ९३
किल्विषं पुनः । न चेदप्यधिका पीडा पूर्व्वस्यास्त्वयि सपतेत् ॥ १९ ॥ गुरुरुवाच ॥ इदं श्रुत्वा
गतोऽसौ तान् मन्दिरस्थान् यहूदिनः । गर्हकानब्रवीत्सोऽयं खट्वां यो वोढुमादिशत् ॥ २० ॥
इति ते ज्ञापितास्तेन येषूवैरोष्टमानसाः । अभिगत्य ततो वेगान्मन्दिरेऽभ्यब्रुवन्निदं ॥
२१ ॥ यहूद्या ऊचुः ॥ यं चतुर्थाज्ञया मोसिः शनौ विश्राममादिशत् । त्वं किमर्थं तमुच्छिद्य

परानुच्छदयस्यपि ॥ २२ ॥ श्रीयेषूरुवाच ॥ येन संपूर्णसर्गेण विश्रामाज्ञा कृता स हि । मत्पितातो
ऽपि कुरुते कुर्वेऽहमपि वै तथा ॥ २३ ॥ गुरुरुवाच ॥ एतत्प्राप्योत्तरं तेऽतोऽधिकमप्यभि
लेषिरे । प्रभुं हन्तुमतिक्रोधादन्योऽन्यं च तथोचिरे ॥ २४ ॥ यहूद्या ऊचुः ॥ विश्रामाज्ञां पुरा
पुण्यां स लंघित्वा स्वकर्म्मभिः । शप्यो गालील्य एतर्हि गरीयोऽप्यघमाचरत् ॥ २५ ॥ ईश
तुल्यं स आत्मानं चक्रेऽस्मज्ञोचरेऽत्रपः । विश्वकृन्मत्पितेत्युक्त्वा मृत्युदण्डार्हः स किं न हि ॥२६॥ १४
गुरुरुवाच ॥ इत्युक्ते तैः स्वधर्म्मार्थे गर्वमोहितमानसैः । न दृष्टा ह्यनुकम्पैशी पुत्रकर्म्मसु भान्त्यपि ॥
२७ ॥ गर्हिणां तु प्रभुस्तेषां चेतांस्येवं वचांसि च । विज्ञायेदं तदा प्रोचे तेभ्य ईश्वरमन्दिरे
॥ २८ ॥ श्रीयेषूरुवाच ॥ सत्यं युष्मान्ब्रवीम्येतन्न किंचिच्छक्नुयात्स्वयं । कर्तुं यद्यत्तु कुर्वन्तं
पितरं पुत्र ईक्षते ॥ २९ ॥ यद्यत्कर्म्म पिता कुर्य्यात्पुत्रोऽप्येवं करोति तत् । तं प्रियं हि पिता सर्वं

दर्शयत्यात्मना कृतं ॥ ३० ॥ एतेभ्यो ऽपि महीयांसि दर्शयिष्यति सो ऽचिरात् । कर्म्माणि येभ्य
उद्गाढं विस्मयं यूयमाप्स्यथ ॥ ३१ ॥ यथा जीवयति प्रेतान् पिता पुत्रस्तथेच्छया । नापि
पित्रा विचार्य्यास्ते न्यस्तं पुत्रे तु कर्म्म तत् ॥ ३२ ॥ अतः पुत्रस्तथादृत्यो ऽखिलैरेवं यथा पिता ।
पुत्रो यैर्नादृतस्तैर्नापि तत्प्रेरयिता पिता ॥ ३३ ॥ सत्यमेतद्धि वो वच्मि मद्वाक्यं संशृणो
ति यः । मत्संप्रेरयितारं च विभुं विश्वसिति ध्रुवं ॥ ३४ ॥ स प्राप्तानन्तजीवो ऽपि दण्डं नापि ९५
कदाचन । गमिष्यत्यधुनोत्तीर्णो मृत्युतः स हि जीवने ॥ ३५ ॥ कालस्त्वैत्यधुनाप्यत्रोपस्थितः
स मृता यदा । ईशपुत्रवचः श्रुत्वा संजीविष्यन्ति निश्चयं ॥ ३६ ॥ इति वो वच्मि यद्वद्धि
स्वयंजीवी पिता स्थितः । तद्वदेव स वै पुत्रे स्वयंजोवित्वमादधौ ॥ ३७ ॥ नृणामप्यक्षदर्शित्व
शक्तिं तस्मिन् समार्पयत् । यस्मात्स नरपुत्रो ऽस्ति संस्थितो ऽप्यात्मजो विभोः ॥ ३८ ॥ अत्र मा

विस्मयध्वं वै कालो ह्येति यदाखिलाः । शवगर्त्तोषितास्तस्य संश्रोष्यन्ति वचः स्थिरं ॥ ३९ ॥
उद्गमिष्यन्ति ते चापि जीवनाय सुकारिणः । तथा मन्दप्रवृत्ताश्चोद्गच्छेयुर्दण्डलब्धये ॥ ४० ॥
स्वयमेव न शक्नोमि किंचित्कर्त्तुं पितुर्विना । यं शृणोमि विचारं हि स मया क्रियते सदा ॥ ४१ ॥
मद्विचारस्तु धर्म्म्योऽस्ति यतः स्वां नहि किंतु मां । संप्रेरितवतस्तस्यैवेच्छामनुचराम्यहं ॥
४२ । यदि स्वार्थमहं साक्ष्यं प्रदद्यां तत्तदानृतं । किंतु मे साक्ष्यदोऽन्योऽस्ति वेद्मि यं सत्यसाक्षिणं ९६
॥ ४३ ॥ योहन्निं प्रति यूयं वै किं न प्रैरयत स्वयं । लैव्यान् पृष्ठै तदा चापि सत्यसाक्ष्यं
स वोऽददात् ॥ ४४ ॥ युष्माकं त्राणमात्रार्थं वाक्यमेतद्ब्रवीम्यहं । न कस्मादपि साक्ष्यं हि लब्धुं
योग्यं मया नरात् ॥ ४५ ॥ ज्वलदोजस्विदीपो वै स आसीत्प्रान्तरोषितः । तद्दीप्त्या चाचिरं
यूयमप्यानन्दितुमैच्छत ॥ ४६ ॥ तत्साक्ष्यात्तु महीयोऽपि मदर्थे तेषु विद्यते । यानि संपूरणी

यानि पिता कर्म्माणि मे ददौ ॥ ४७ ॥ पित्राहं प्रेरितो भूमावर्ति साक्ष्यं हि निश्चितं । मत्कृ
तान्यधुना तानि ददत्यखिलगोचरे ॥ ४८ ॥ यस्य यूयं तु न क्वापि शब्दं शुश्रुव नापि वा ।
रूपं ददृश साक्ष्यं मे स पितैव स्वयं ददौ ॥ ४९ ॥ किंतु तस्य विभोर्वाक्यं युष्मदन्तःस्थितं न
हि । यतो मां प्रेरितं तेन न विश्वसिथ गर्हकाः ॥ ५० ॥ अनुशीलयथ ग्रन्थान् पुण्यान् नित्यं
हि जीवनं । तेभ्योऽनुभवथ प्राप्तुं तेऽपि मे साक्ष्यदाः खलु ॥ ५१ ॥ जीवनाप्त्यै न माभ्येतुमिच्छ ९७
थातो न वोऽस्त्यलं । ईशप्रेमेत्यहं वेद्मि कीर्त्यलिप्सुर्मनुष्यतः ॥ ५२ ॥ पितुर्मां ह्यागतं नाम्ना
न स्वीकुरुथ दुर्हृदः । चेत्त्वागच्छेत्स्वनाम्नान्यस्तं नूनं स्वीकरिष्यथ ॥ ५३ ॥ अन्योऽन्यं तु यशो
यूयं नेशमात्रोत्थसद्यशः । याचमानाः कथं मूढाः प्रत्येतुं शक्नुथ ध्रुवं ॥ ५४ ॥ युष्मान् पित्रेऽप्रती
त्यर्थेऽभियोक्ष्यन्तं तु मां परे । मा मन्यध्वं परो ह्यस्ति योऽभियोक्ष्यति वो नरः ॥ ५५ ॥ स मो

र्सिर्यत्र वोऽप्याशा यदि तं विश्वसेत हि । तदा मां विश्वसेतापि तद्ग्रन्थैर्हि प्रकीर्त्तितं ॥ ५६ ॥
किंतु चेन्नापि तद्ग्रन्थान् विश्वसेत समन्ततः । तदा वै मम वाक्यानि विश्वसेत कथं दृढं ॥
५७ ॥ गुरुरुवाच ॥ तथा पर्व्वणि तस्मिन् वै मोसिशास्त्रप्रकीर्त्तिते । मोसिप्रोक्तो महीयान्स
प्रवाची समुपादिशत् ॥ ५८ ॥ द्वितीयः संस्कृतेः पश्चात्प्रभोः स स्वीयमन्दिरे । प्रवेशो वै यथा
ब्दः स भूतो यस्त्राणपर्व्वणि ॥ ५९ ॥ हेश्वरानुग्रहस्यैवं चित्रलक्ष्माङ्कितोऽपि सः । द्रोहनिन्दाजि ९८
घांसाभिरेवासीदन्वितो नृणां ॥ ६० ॥ इति श्रीख्रृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (योहन्नेः पंचम
सर्गादुद्धृतो) दयालयपुष्करिणी नाम पंचदशोऽध्यायः ॥

शिष्य उवाच ॥ अद्भुतं मोहलक्ष्मैनद्धुरो दुष्टयहूदिनां । तन्मध्ये तु कियत्कालं स्थितो येषू
र्महापुरे ॥ १ । गुरुरुवाच॥ एकाहे शिष्य संपूर्णे पंचाशत्पर्व्वणि प्रभुः । त्यक्त्वा यिरूषलेमीयान्

स्वीयदेशं पुनर्गतः ॥ २ ॥ पुरे कपर्णहूमे तु तं संश्रुत्यागतं निजे । गृहद्वारस्थितो व्यूहः संरो
धापि पद्धतिं ॥ ३ ॥ गृहान्तश्चापि तद्वाक्यश्रुत्यै नानाप्रदेशतः । अध्यापकाः फरीषाद्याः शास्त्र
विज्ञाः समागताः ॥ ४ ॥ प्रभोस्तत्र स्थितस्याग्रे खट्वायां शयितं तदा । पक्षाघातिनमानेतुं कमप्यै
च्छन् पुरस्थिताः ॥ ५ ॥ द्वारे वेष्टुमशक्तास्तु चत्वारो रोगिवाहिनः । उन्नयन्ति स्म यत्नेन तं
गृहच्छादनोपरि ॥ ६ ॥ तस्मिन् गत्वान्तरजिरं प्रति तेऽधोऽपि रज्जुभिः । येष्वग्रे निदधुः ९९
खट्वामुत्तोल्योल्लोचमप्यतः ॥ ७ ॥ यस्तेषां प्रत्ययं दृष्ट्वाथ पक्षाघातिनेऽब्रवीत् । खट्वास्थिताय हे
पुत्र मुच्यन्ते कल्मषाणि ते ॥ ८ ॥ इदमध्यापकाः श्रुत्वाचिन्तयन् हृदये तथा । कोऽयमीशाप
वादी कोऽघमोक्तास्तीश्वराद्विना ॥९॥ इति चिन्तयतोऽभ्यन्तर्न किंचिद्वदतोऽपि तान् । अनुभूय
क्षणादेतत्प्रत्यूचे सर्ववित्प्रभुः ॥ १० ॥ श्रीयेषूरुवाच ॥ किं तथा चिन्तयध्वे रे किं पक्षाघातिनं

प्रति । तव पापानि मुच्यन्त इति वाग्विद्यते गुरुः ॥ ११ ॥ खट्वामुत्थाप्य गच्छ त्वमिति ब्रूयामहं
यदि । तदैतद्वचसोर्ब्रूत लघीयः कतरद्भवेत् ॥ १२ ॥ किंत्वङ्गमोचनं ह्येवं नृपुत्रेण मया भुवि ।
कर्त्तुं वाक्यं सुदेक्ष्यामि युष्मान्निर्णीतलक्ष्मणा ॥ १३॥ निशामयत मद्वाक्यं पक्षाघातिन् ब्रवीमि ते ।
उत्तिष्ठ स्वीयखट्वां च त्वमुत्थाप्य गृहं चल ॥ १४ ॥ गुरुरुवाच ॥ एतद्वदति येष्वीह पक्षाघा
त्युत्थितः क्षणात् । खट्वामुन्नीय सर्व्वाग्रे निर्ययावीश्वरं स्तुवन् ॥ १५ ॥ सर्व्वे चापि ततोऽतीव १०
विस्मिताः परमेश्वरं ॥ दत्तवन्तं नरेभ्योऽपीयच्छक्तिं दद्रिरे स्तवैः ॥ १६ ॥ अन्योऽन्यं चाभ्यवो
चन्ताद्भुतकर्म्म वयं खलु । अद्यापश्याम यद्वन्नाप्यभूद्दृष्टं कदाचन ॥ १७ ॥ अपगत्य ततो
गेहाद्ध्रदकूलेऽव्रजत्प्रभुः । तत्र चाप्यन्विता व्यूहास्तस्यालम्भन्त शिक्षणं ॥ १८ ॥ आसीनं स तदा
प्राप्य नगरस्य करालये । अल्फायस्य सुतं लेवीं यो मत्थायाभिधोऽप्यभूत् ॥ १९ ॥ मामन्वेहीत्यु

वाचाथ लेवीः सन्न्यस्य सर्वशः । करसंग्रहणादीनि येष्वः पश्चादितो गतः ॥ २० ॥ स्वगेहं प्रति
चाहूय भोजनाय तदा गुरुं । करसंग्राहिणोऽनेकानपि तत्र न्यमन्त्रयत् ॥ २१ ॥ तद्गृहे तु
तमासीनं करसंग्राहिभिः सह । दृष्ट्वा महागुरुं तत्र फरीशाध्यापकाः स्थिताः ॥ २२ ॥
कुत्स्यं संमत्य संसर्गं रौम्यभृत्यैस्त्रयेलिनां । स्वीयैरवमतानां च शिष्यानभ्यब्रुवन् प्रभोः ॥
२३ ॥ अध्यापका ऊचुः ॥ किमर्थं युष्मदाचार्य्यः करसंग्राहिभिः सह । किल्विषाचारिभि १०१
श्चापि भुङ्क्ते पिवति चात्रपः ॥ २४ ॥ गुरुरुवाच ॥ इति श्रुत्वा प्रभोः शिष्या न किंचिदपि
तान् प्रति । ऊचुः किंतु स तत्कुत्सामनुभूयाब्रवीदिदं ॥ २५ ॥ श्रीयेशूरुवाच ॥ न सुस्थेभ्यो
गदिभ्यस्तु भिषगावश्यको यथा । तथा नाह्वयितुं धर्म्यान्पापिनस्त्वहमागतः ॥ २६ ॥
निर्गत्यान्विच्छत ततो यूयं शास्त्रविदः श्रमात् । प्रवक्त्रैतद्वचोऽर्थः को दयामिच्छामि न क्रतुं

॥ २७ ॥ गुरुरुवाच ॥ इत्यैशवचसः प्रोक्त्या होषेयस्य प्रवाचिनः । येषूर्निर्वर्त्तयामास विवादं
धर्म्मगर्विणां ॥ २८ ॥ नतु क्षान्ते ऽपि तद्दूरे वनमध्वशनस्य ते । प्रान्तरे घोषतः शिक्षां स्म
रन्तो ऽभ्यब्रुवन्निदं ॥ २९ ॥ अध्यापका ऊचुः ॥ योहन्नेरनुगा ये ये जखरीयात्मजस्य ते ।
अतीवोपवसन्त्येव फरीशा इव धर्म्मिणः ॥ ३० ॥ त्वदीयास्तु कथं शिषाः शुद्धै तद्वन्न कुर्व्व
ते । धर्म्योपोषणमाचार्य्य किंत्वश्नन्ति पिवन्ति च ॥ ३१ ॥ श्रीयेषूरुवाच ॥ जन्या उप १०ः
वसेयुः किं वरे तैः सह तिष्ठति । यदा सो ऽपहृतस्तु स्यादुपवत्स्यन्ति ते तदा ॥ ३२ ॥
मर्त्यैतैः सार्द्धमधुना नवशिष्यैर्वरे स्थिते । संतुष्टास्ते ऽपि तिष्ठन्तु नियमश्रान्त्यपीडिताः ॥
३३ ॥ न जीर्णवसने को ऽपि नवं चीरं निसीव्यति । यदतुल्यतया ह्यस्य गरीयश्छेदनं
भवेत् ॥ ३४ ॥ नवार्पयति नूत्नेरां कश्चिज्जीर्णकुतूष्वपि । तद्भङ्क्तैः स्रोष्यतीरा हि सार्प्यां

नूत्नकुतूषु तु ॥ ३५ ॥ तथैवेरा कुतूश्चापि रक्ष्या प्रत्नां नु पीतवान् । कोऽपि नेच्छत्यथो नूत्नां
जीर्णां वेत्ति हि सत्तरां ॥ ३६ ॥ गुरुरुवाच ॥ एतद्दृष्टान्तवाक्यानि यदा तान् प्रति सा
ब्रवीत् । वरो योहन्निना प्रोक्तः सच्चिदानन्ददायकः ॥ ३७ ॥ तदा कश्चिन्मठाध्यक्षो यैरो नाम
समागतः । प्रणिपत्यापि तत्पादौ प्रार्थयद्यत्नतस्तथा ॥ ३८ ॥ यैर उवाच ॥ प्रभो प्रायो मृते
दानीं बाला मे दुहिता स्थिता । दययैत्य कराभ्यां तां स्पृशाथानिष्यति ध्रुवं ॥३९॥ गुरुरुवाच ॥ १०३
इत्यशोचत्स यस्यापि न सन्तानस्तया विना । द्वादशाब्दकुमार्यासीद्वरदस्त्वशृणोत्प्रभुः ॥
४० ॥ प्रार्थनां तस्य गेहं चाभिगच्छन्तं तदा पथि । येषू महानपि व्यूहः पर्यपीडयदन्वितः ॥
४१ ॥ तन्मध्ये च स्थिता काचिद्रक्तपित्तेन या दृढं । उग्रेण द्वादशाप्यब्दान् दुःखिता
भून्निरन्तरं ॥ ४२ ॥ या स्वसर्वधनस्यापि विज्ञवैद्यान् प्रति व्ययं । कृत्वा नाभूत्ततः सुस्था वर

त्वधिकरोगिणी ॥ ४३ ॥ येष्वः पश्चात्तदा सायाञ्चिन्तयन्ती तथा हृदि । तद्वस्त्रस्पर्शमात्रेण रोगान्मु
क्तिमवाप्नुयां ॥ ४४ ॥ ततो व्यूहान्तरे नारी प्रभोर्वस्त्रान्तमस्पृशत् । निरुद्धं च क्षणात्तस्या रक्त
पित्तं समन्ततः ॥ ४५ ॥ परावृत्तस्ततो येषूः केन स्पृष्टोऽहमित्यमून् । ऊचे परिस्थितान् येऽथ न
मयेत्यब्रुवन् सकृत् ॥ ४६ ॥ प्रस्तराद्यास्त्ववोचन् हे पीडयन्तं तथा गणं । संपश्यंस्त्वं कथं पृच्छेः
स्पृष्टोऽहं केन नु प्रभो ॥ ४७ ॥ प्रत्यूचे स तु केनापि स्पृष्टोऽहमिति निश्चयं। वेद्मि मत्तो यतः १०४
शक्तिर्बुबुधेऽपि विनिःसृता ॥ ४८ ॥ स्पृष्टवन्तं विबोद्धुं च स यदा पर्यलोचत । नारी सा स्वकृतं
कर्म्मागुप्तमन्वभवत्तदा ॥ ४९ ॥ कम्पमाना भयाच्चेहाभ्येत्य येषूं प्रणम्य च । स्वीचक्रे वसनस्पर्शं
चिकित्सां चाप्यतः स्वकां ॥५०॥ मुक्तिदस्तु तदावादीद्दुहितः सुस्थिरा भव। विश्वासस्ते ददौ
मुक्तिं कुशलं याह्यरोगिणी ॥ ५१ ॥ इति येष्वि वदत्येव मठाध्यक्षनिकेतनात् । एनं प्रत्यद्रवद्दास

इदं चाभ्यब्रवीद्वचः ॥ ५२ ॥ यैरभृत्य उवाच ॥ इदानीं भवतः पुत्री मृता यैर ततो गुरुं । किमर्थं
गृहमानीय क्लेशयेरेव निष्फलं ॥ ५३ ॥ गुरुरुवाच ॥ इति दासं वदन्तं तु श्रुत्वा येषूरथाब्रवीत् ।
मा भैषीर्यैर विश्वासं कुर्वेवाथ सुखं भवेत् ॥ ५४ ॥ गृहं त्वागत्य कंचिन्नान्तर्निन्ये प्रस्तराद्विना ।
जिब्दीयसुताभ्यां च मठाध्यक्षेण सोऽन्वितः ॥ ५५ ॥ तैर्वृतस्तत्र विष्ट्वा सोऽवाप्नोद्विलपतो
बहून् । बन्धून्सगायकांस्तत्र तुमुलध्वनिकारिणः ॥ ५६ ॥ तान्निषेधन्नवादीत्स किं विलाप १०५
ध्वनिं तथा । कुरुतात्र कुमार्येषा न मृता किंतु निद्रिता ॥ ५७ ॥ इति श्रुत्वाहसंस्ते वै जानन्त
स्तन्मृतिं ध्रुवं । समस्तास्तु प्रभोराज्ञां संलभ्यातो विनिर्गताः ॥ ५८ ॥ कुमार्य्यास्तु पितृभ्यां स
सह शिष्यत्रयेण च । शयानामुपसृत्यामूं समादायापि तत्करं ॥ ५९ ॥ हे कन्ये जागृहीत्यूचे
ततः प्राणानवाप्य सा । उत्थिता प्राचलद्वेगाद्विस्मितेष्वखिलेष्वपि ॥ ६० ॥ ततो यैरं सपत्नीकं

विस्मयानन्दमोहितं । भोज्यं पुत्र्यै प्रदातुं स संजीवन्त्यै समादिशत् ॥ ६१ ॥ आज्ञाय सकलांश्चे
मां कस्मैचिन्नेरितुं क्रियां । स सप्रस्तरयाकोबयोहन्निर्निर्गतो गृहात् ॥ ६२ ॥ किंतु तत्रापि
विस्तीर्णे जीवदस्य प्रकीर्त्तने । मठाध्यक्षगृहाद्गूहाः प्रगच्छन्तं तमन्वयन् ॥ ६३ ॥ अनु
भूय तदा काणावपि मोक्तारमन्तिके । दयां नौ कुरु हे दावित्पुत्रेति प्रणनर्दतुः ॥ ६४ ॥
स्वगृहे चाप्युपस्थाय स पश्चादनुगामिनोः । तयोः सत्प्रत्ययं ज्ञात्वेदमूचे कुशलाधिपः ॥ ६५ ॥ १०६
एतत्कर्तुं समर्थो ऽहमिति वां प्रत्ययो ऽस्ति किं । तथा पृष्टौ ततो ऽस्त्येव भो इति प्रत्यवोचतां ॥
६६॥ अथ सो ऽक्षीणि संस्पृश्य तयोरभ्यब्रवीदिदं । यादृग्वां प्रत्ययस्तादृगस्त्वतो ऽपश्यतां च तौ ॥
६७॥ आज्ञातौ चापि मोक्त्रा तौ न कस्मैचिन्नदोरितुं । पुर्यां क्षेत्रे ऽखिले चापि कथयामासतुः क्रियां॥
६८ ॥ तत्पश्चात्तद्गृहे मूकं भूतग्रस्तं नरा अपि । आनयन् यं प्रभुर्भूते निःक्षिप्ते ऽवादयत्स्फुटं ॥

६९ ॥ विस्मिताश्च ततो व्यूहास्तद्वन्नाभूत्कदाचन । इस्रयेलान्तरे दृष्टमिति प्रोचुः परस्परं ॥७० ॥
फरीषास्तु तदा केचित्तत्संश्रुत्याब्रुवन्निदं । स भूताधिपशक्त्यैव भूतान्निःक्षिपति ध्रुवं ॥ ७१ ॥
इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मत्थायस्य नवमसर्गान्मार्कस्य द्वितीयपंचमसर्गाभ्यां
लूकस्य पंचमाष्टमसर्गाभ्यां चोद्धृतो) वरदयाप्रकाशो नाम षोडशोऽध्यायः ॥

शिष्य उवाच ॥ यैरूशलेमकैः पूर्व्वमवज्ञातोऽपि पर्व्वणि । ततः प्रत्यागतेराद्येऽह्न्येव कापर्णहू १०७
मिषु ॥ १ ॥ यो वै तान्यकरोत्किं न मठाध्यक्षादयस्तदा । तं वै वरदयादृष्ट्या सर्व्वेऽमन्यन्त
धार्म्मिकाः ॥ २ ॥ गुरुरुवाच ॥ मा विद्धयेवं यथा ह्यासीत्पंचाशत्पर्व्वयात्रिकैः । अमीभिः स तथैवै
तैः प्रतिरुद्धोऽचिरात्प्रभुः ॥ ३ ॥ शनावाद्ये परे तस्माद्द्वितीयाभिधपर्व्वणः । क्षेत्रे कापर्णहूम्ये स स्व
शिष्यैः सार्द्धमव्रजत् ॥ ४ ॥ तदा तत्र सुपक्वानि संछिद्य कणिशानि ते । संमर्द्द्य पाणिपुटकैरनु

मारेभिरे मुदा ॥ ५ ॥ तत्संदृश्य फरीषास्तु केचिद् ह्यस्तनकर्मणां । गर्हका इव संवक्तुमीर्ष
यातः प्रचक्रमुः ॥ ६ ॥ फरीषा ऊचुः ॥ धार्म्मिकैर्नास्ति यद्योग्यं कर्त्तुं विश्रामवासरे । तदेतान्
कुर्वतः पश्य चयनं मर्द्दनं तथा ॥ ७ ॥ गुरुरुवाच ॥ इत्याकर्ण्य वचस्तेषामात्मधर्म्मार्थगर्विणां ।
पुण्यग्रन्थोदितैर्वाक्यैस्तथा व्यवदत प्रभुः ॥ ८ ॥ श्रीयेषूरुवाच ॥ शास्त्रज्ञैः किं न युष्माभिः श्रुतं
तत्कर्म्म दाविदः । यद्गर्म्यो ऽप्याचरदसौ सानुगो ऽतिबुभुक्षितः ॥ ९ ॥ यानि ह्यैश्वरदूष्यस्य १०८
वेदौ दर्शनहेतवे । गोधूम्यपिष्टकान्यासन्नर्पितान्येव शाश्वतः ॥ १० ॥ तानि पुण्यान्यपि न
चादनीयान्यप्ययाजकैः । स महायज्वनो लेभे ऽभ्याथारस्य पितुः करात् ॥ ११ ॥ दूष्ये च तान्य
भुक्त्वापि स्वानुगांश्चाप्यभोजयत् । आवश्यार्थे स निर्दोषो दाविदीशप्रियो ऽधिपः ॥ १२ ॥ किं
वाधीतं न युष्माभिरीशशास्त्रे ऽपि यज्वनां । तद्गृहान्तःशनाविव नानाकर्म्मनियोजनं ॥ १३ ॥

मन्दिरात्तु महीयान् वै विश्रामाहस्य च प्रभुः । अत्रापि स्थित एतर्हि नृपुत्र इति वच्मि वः ॥
१४ ॥ नहि विश्रामवारार्थं नराः सर्व्वे निरूपिताः । नरार्थं तु स सद्वारो ऽतो नृपुत्रो ऽस्ति
तत्प्रभुः ॥ १५ ॥ अनघांस्तु तथा यूयं न वै दण्ड्यानवक्ष्यत । चेज्जानीयात वाक्यं तद्दयामिच्छा
मि न क्रतुं ॥ १६ ॥ गुरुरुवाच ॥ तथा तान्नीरवान्कृत्वा नृपुत्रो धर्म्मलिङ्गिनः । विश्रामाहे परे
तस्मात्तत्पुरः प्राविशन्मठं ॥ १७ ॥ शीर्णहस्ते स्थिते तत्र कस्मिंश्चिन्नर्हका अमी । अवालोकन्त १०९
किं येषूस्तं चिकित्सेत्तदा न वा ॥ १८ ॥ इति चिन्तयतस्तांस्तु विश्रामदिनलङ्घनात् । अभि
योगेच्छुकान् येषूः परीष्याध्यापकानवेत् ॥ १९ ॥ उपदेशाद्विरम्याथ मठमध्ये स निर्भयं ।
शीर्णहस्तं तमाहूय नर्हकानभ्यवोचत ॥ २० ॥ श्रीयेषूरुवाच ॥ सुक्रिया दुष्क्रिया वा किं
कर्त्तुं विश्रामवासरे । योग्यं किं रक्षितुं प्राणान्हन्तुं वेति प्रवक्त मे ॥ २१ ॥ गुरुरुवाच ॥ इति

पृष्टेषु दुष्टेषु नातः को ऽप्युत्तरं ददौ । परिदृश्य रूषा तांस्तु तत्काठिन्येन दुःखितः ॥ २२ ॥ प्रभुः
शीर्णकरायोचे शुष्कं हस्तं प्रसारय । अथ सुस्थीकृतं सो ऽमुं प्राप्नोद्धस्तान्तरं यथा ॥ २३ ॥ ततः
कोपोन्मदास्ते तु सहैरोद्याः फरोषकाः । मन्दिरस्था यथा पूर्व्वं यहूद्यास्ते तथोचिरे ॥ २४ ॥ किं
करिष्यामहे ऽमुं नु सद्विश्रामाहलङ्घिनं । अस्मन्मध्यस्थितं किं न मृत्युदण्ड्यः स सर्व्वथा ॥ २५ ॥
तां तु हिंसामतिं ज्ञात्वा जनव्यूहैर्वृतः प्रभुः । प्रायात्कपर्णहूमात्स नानादेशत आगतैः ॥ २६ ॥ ११०
तेष्वासन्वै गलीलीयास्तथा यैरूषलेमकाः । यर्द्दानोपरिवासाश्च तथा चापि यहूदिनः ॥ २७ ॥
अप्येषावोद्भवा लोका इदूमीयोषितास्तथा । शीदोन्या अपि तूर्य्याश्च कीर्त्तितक्षितिवासिनः ॥ २८ ॥
एतादृशो महाव्यूहाः प्रभोः कीर्त्त्या सुकर्म्मणां । आकृष्टास्तं तदान्वीयुस्तैवर्य्यहृदरोधसि ॥
२९ ॥ स तु तेष्वखिलांस्तत्राचिकित्सद्रोगिणः स्थितान् । भूतग्रस्तानपीशस्य पुत्रस्त्वमिति घोषतः

॥ ३० ॥ सर्व्वांस्तु स्वयशो वक्तुं न्यषेधीदपि यत्नतः । व्यूहैः संकुचितश्चापि स्वशिष्यान्नावमार्थ
यत् ॥ ३१ ॥ तथा दूरीकृतेनापि स्वपुरोऽध्यापकैस्तदा । निरहंकारिणा येष्वा प्रवक्तुः पूरितं
वचः ॥ ३२ ॥ इषाय उवाच ॥ अहो मन्मनोनीत एषोऽतिहार्दो वृतश्चापि सर्व्वाग्रियो मत्सुभक्तः ।
तदन्तर्मदात्मानमेवाहमीशोऽर्पयिष्ये विचारप्रकाशाय लोके ॥ ३३ ॥ विवादं न कर्त्ता नवा
नादमेष न रथ्यासु शब्दोऽस्य संश्रोष्यते वा । नलं वापि निष्पीडितं नैष भङ्क्ष्यत्यशां नापि ११९
निर्व्वापयेत्स्फूर्त्तधूमां ॥ ३४ ॥ स यावन्न सत्यानयेत्संजयेऽपि विचारं तथैवाचरेन्नित्यशान्तः ।
ततोऽप्यज्ञनातिप्रदेऽस्मिन् सुदूरान्निधास्यन्ति विश्वासमन्योऽद्भुवोऽपि ॥ ३५ ॥ इति श्रीखृष्टसंगी
तायां पुत्राभिषेकपर्व्वणि (संवेलचरित्रादिषायभव्यवाक्यानां द्वाचत्वारिंशसर्गान्मत्थायस्य द्वादश
सर्गान्मार्कस्य द्वितीयतृतीयसर्गाभ्यां लूकस्य षष्ठसर्गाच्चोद्धृतः) शान्तविचारो नाम सप्तदशोऽध्यायः ॥

गुरुरुवाच ॥ व्यूहेभ्यस्तु पृथक्स्थित्यै गिरिमारुह्य कंचन । स शान्तः प्रार्थयन्नीशमतिष्ठत्सर्व्व निश्यपि ॥ १ ॥ ततः सूर्य्योदये भूते स्वशिष्यान्व्यूहमध्यतः । शैलोपर्य्यात्मना सार्द्धं तदा स्थातुं समाह्वयत् ॥ २ ॥ तेष्वारूढेषु तत्राथ सहस्थित्यै विशेषतः । रुग्भूतदान्तिशक्त्यै च प्रोक्त्यै च द्वादशावृणोत् ॥ ३ ॥ तेषामाद्यस्तु सीमोनः प्रस्तराख्यस्ततः सुतौ । जिवोदीयस्य याकोबयोहन्नी पविजाभिधौ ॥ ४ ॥ अन्द्रियः प्रस्तरभ्राता फिलिप्पश्चापि तत्परे । ततो बार्थुलमायोऽपि रहितोपधिमानसः ॥ ५ ॥ मत्थायोऽपि करग्राही थोमाश्च दिदुमाभिधः । याकोवोऽल्फायजश्चापि प्रभोर्बन्धुरपि स्मृतः ॥ ६ ॥ तद्वन्धुश्च यहूदो यो लिब्बैथद्दायनामनी । अग्रहीदथ सीमोनः ख्यातः शास्त्रार्थकौतुकी ॥ ७ ॥ द्वादशस्तु यहूदोऽन्य इष्कार्य्योत्यभिधानकः । गणे पुण्यात्मके योऽस्मिन् ख्येय एव शठः परे ॥ ८ ॥ इति द्वादशसंख्यांस्तान् वृत्वा स्वप्रेरितान् प्रभुः । भूरीनुपादि

११२

शद्वर्म्मान् यथा प्राक् पर्व्वतोपरि ॥ ९ ॥ केनचिच्चार्थितः सोऽथ शिष्येण स्नापको यथा । योऽहन्निः
प्रार्थनां सर्व्वानुपदेष्टुं तथानुगान् ॥ १० ॥ अतस्तां पुनरुक्ता वै प्रार्थनां प्रभुसंज्ञकां । स्वर्गेऽपि
तास्मदित्याद्यामेतदप्यब्रवीद्वचः ॥ ११ ॥ श्रीयेषूरुवाच ॥ निशीथे यदि युष्माकं कस्यचिद्द्वार
सन्निधौ । समागत्य सुहृत्कोऽपि त्वामिह प्रार्थयेदिदं ॥ १२ ॥ हे सखे देह्यृणं मह्यं गौधूम्यं
पिष्टकत्रयं । यतोऽन्नं मद्गृहे नास्ति पान्थश्च सुहृदागतः ॥ १३ ॥ अथाभ्यन्तर उच्यास्त्वं तद्दातुं ११३
शक्नुयां कथं । पर्य्यङ्कस्थः सपुत्रोऽहं द्वारं संरुद्धमेव च ॥ १४ ॥ ततो मा यच्छ मे क्लेशमिति त्वं स्व
पूलिप्सुकः । प्रतिब्रूयाः स तु वहिस्तथैव प्रार्थयेन्मुहुः ॥ १५ ॥ तदा यद्यपि मैत्रार्थं तन्न दद्याः
समुत्थितः । तस्यानिर्व्वार्य्यताहेतोर्यद्यदिष्टं प्रदास्यसि ॥ १६ ॥ इति वो वच्म्यहं सत्यं ततो या
चध्वमीश्वरं । अनिर्व्वार्य्यास्तथा यूयं लप्स्यध्वे चैव निश्चयं ॥ १७ ॥ गुरुरुवाच । विशिष्टांस्तु

प्रभुः शिष्यान् वृत्वा द्वादशसंख्यकान् । तान्प्रत्यपि च संपूर्य्य नानाधर्म्मोपदेशनं ॥ १८ ॥
अवतीर्य्य सशिष्यो ऽद्रेः किमपि प्राविशद्गृहं । किंतु तत्र पुनर्व्यूहा व्यरुन्धन्नपि भोजनं ॥ १९ ॥
तदा तद्बान्धवाश्चापि स्वपुरादेत्य यत्नतः । अन्वैच्छन्नुन्मदं ज्ञात्वा तं दण्डमुदितं मठे ॥ २० ॥
अविश्वासैश्च तैः सार्द्धं मरीयापि तदा गता । सती पुत्रं प्रियं द्रष्टुमिच्छुकावमतं स्वकैः ॥ २१ ॥
तत्काले तु प्रभोरग्रे ऽनयंस्तत्र स्थिता नराः । भूतग्रस्तं जनं कंचिद्यो मूको ऽन्धो ऽपि चाभवत्
॥ २२ ॥ अथ भूतं वहिष्कृत्य दयालुः पीडितं नरं । द्रष्टुं वक्तुं च शक्तं तमकरोदपि तत्क्षणात् ॥ ११४
२३ ॥ तत्संदृश्याब्रुवन् व्यूहाः किं नैषो ऽस्ति प्रतिश्रुतः । यो ऽस्मभ्यं स महाराजो ऽभिषिक्तो
दाविदः सुतः ॥ २४ ॥ इत्यूचुः शरला एते फरीष्यास्तु य आगताः । यिरूषलेमतस्तत्र ते तदा
प्रोचुरीर्षकाः ॥ २५ ॥ फरीष्या ऊचुः ॥ बेलुबूलस्य साहाय्याद्विना भूताधिपस्य वै । नैव शक्नोति

निःक्षेप्तुं भूतांस्तत्सेवको ह्ययं ॥२६॥ गुरुरुवाच ॥ इत्यतो निन्दतां तेषां दुर्मनोऽनुभवन्प्रभुः ।
तदा तन्मन्दतर्कस्य विरोधं प्रावदत्स्फुटं ॥ २७ ॥ श्रीयेषूरुवाच ॥ यस्मिन् राज्ये प्रजान्योऽन्यं
युध्यति क्षीणमेव तत् । यत्पुरं वा गृहं वान्तर्भिन्नं तदपि नश्यति ॥ २८॥ साटानश्चेत्तथात्मानं
निःक्षिपेत्स्वरिपुः स्थितः । तदा तस्य कथं राज्यं जगति स्थास्यति ध्रुवं ॥२९॥ बेल्जबूलस्य
शक्त्या तु भूतांश्चेन्निःक्षिपाम्यहं । पुत्रा वः केन तत्कुर्य्युस्तेऽतः स्युर्वोऽक्षदर्शिनः ॥ ३० ॥ किन्त्वी ११५
शस्यात्मना भूतान्निःक्षिपेयमहं यदि । तदेशस्यागतं राज्यं युष्मास्वत्र न संशयः ॥३१॥
बलिनोऽस्त्रभृतो विष्ट्वा गृहं तद्द्रव्यमेव कः । हर्त्तुं शक्नोति चेन्नादौ बध्नीयात्तं बलान्वितं ॥३२॥
सुरक्षितगृहं तं तु बलीयान्कोऽपि चेज्जयेत् । स्थिरं तद्वर्म्म हृत्वा स तद्द्रव्यमपि लुण्ठति ॥३३॥
भूतराजं तथेदानीं जिनं वित्त बलीयसा । तद्द्विषा हरता तस्मान्नृणां सर्वेन्द्रियाण्यपि ॥३४॥

मत्सहायस्तु यो न स्यान्मद्विपक्षं सुविन्न तं । मया सार्द्धं फलं यो न चिनुयाद्विस्तृणोति सः ॥३५॥
ततो वक्ष्येतदपि वः सर्व्वपापं नरैः कृतं । क्षन्तव्यं निन्दनं चापि विना निन्दां सदात्मनः ॥
३६॥ नृपुत्रमपि यो निन्देत्क्षमामाप्तुं स शक्नुयात् । न सदात्मापवादी तु नैतल्लोके न वा
परे ॥३७॥ नित्यदण्ड्या अपि स्युस्ते ये सदात्मोत्थिताः क्रियाः । असद्भूताधिपकृता आख्या
न्त्येवापवादकाः ॥३८॥ वृक्षं कुरुत वा भद्रं तत्फलं भद्रमेव च । मन्दं वा सफलं वृक्षं स हि वि ११६
ज्ञायते फलात् ॥३९॥ रे सर्पतनया यूयं कथं भद्रवचांसि वै । ईरयेत स्थिता मन्दा हृत्पूर्ते
र्ह्याह वो मुखं ॥४०॥ सन्नरः स्वहृदः कोषाद्भद्राद्भद्रमुदीरयेत् । मन्दस्तथैव मन्दानि स्वहृदो
ऽधमकोषतः ॥४१॥ किंतु यद्यद्वचोऽनर्थमपि ब्रूयुर्नराः परे । प्रतिवाच्यं विचाराहे तत्तैरिति
वदामि वः ॥४२॥ वचोभ्यो हि स्वकेभ्यस्त्वं नर निर्द्दोषयिष्यसे । स्ववचोभ्यस्तथा दोषदण्डा

र्हत्वं प्रलप्स्यसे ॥४३॥ गुरुरुवाच ॥ इत्याकर्ण्य वचः केचित्फरीष्याध्यापकाः प्रभोः । प्रत्यूचु
श्चिह्नमिच्छामस्त्वत्त एवेक्षितुं गुरो ॥४४॥ इदं श्रुत्वा स आचार्य्यो दान्तभूतो ऽद्भुतक्रियः ।
अर्थयद्भ्यो ऽधिकं तेभ्यो व्यूहसाक्षादवोचत ॥४५॥ श्रीयेषूरुवाच ॥ चिह्नमिच्छन्त्यमी प्राप्तुमधमा
व्यभिचारकाः । न त्वन्यत्किमपि प्राप्यं योनचिह्नाद्विनैव तैः ॥४६॥ स यथेशप्रवक्ता हि
मत्स्यगर्भे ऽवसत्त्र्यहं । नरपुत्रस्तथैव स्यात्त्र्यहं भूम्युदरस्थितः ॥४७॥ किंतु तत्प्रत्नचिह्नाप्ता ११७
नीनिवीपुरवासिनः । उत्थास्यन्ति विचाराहे दण्डायैतन्नृणां ध्रुवं ॥४८॥ भीषणैर्योन
वाक्यैर्हि नीनिवीयाः समन्ततः । अनुतेपुः स्थितस्त्वत्र योनादिको महत्तरः ॥४९॥ दक्षिणीया
तथाराज्ञी साब्यानां सा प्रकीर्त्तिता । उत्थास्यति विचाराहे दण्डायैतन्नृणां ध्रुवं ॥५०॥ ज्ञानं
श्रोतुं सलोम्नः सागता ह्युर्व्यन्तसीमतः । एषां मध्ये स्थितस्त्वेकः सलोम्नो ऽपि महत्तरः ॥५१॥

तं महत्तरमप्यत्र दान्तभूतमिमे जनाः । अवमत्य यदाप्स्यन्ति तन्मत्तः शृणुताधुना ॥५२॥ नर
देहादसङ्गतो विनिःक्षिप्तो यदा भ्रमेत् । मरुभूमिषु विश्रामं ढुण्ढन्नत्वाप्नुवन् क्वचित् ॥५३॥
तदाह स्वगृहाद्यस्मान्निर्गतोऽहं पुरा पुनः । तत्रैष्यामीत्यथाप्नोति तच्छून्यं मृष्टमेव च ॥५४॥
ततो गत्वान्यभूतान्स सप्त मन्दतरानपि । समानयति वासाय तच्छोभितगृहान्तरे ॥५५॥
स तु व्याप्तो मनुष्यो ऽतो विविधासत्प्रवर्त्तकैः । तैस्तदोग्रतरावस्थां पूर्व्वाया अप्यवाप्नुयात् ॥५६॥ ११८
गुरुरुवाच ॥ एतद्भीमवचोभिः सोऽभर्त्सयन्मोचको यदा । ईशकर्म्मावमन्तॄन् वै भूतध्वंसदृशो
ऽपि तान् ॥५७॥ तदा कश्चित्तमभ्यूचे माता ते भ्रातरोऽपि च । वहिस्तिष्ठन्ति संवक्तुं समिच्छन्त
स्त्वया सह ॥५८॥ नार्य्यप्येतत्क्षणे काचिद्गृहमध्ये ननाद हे । धन्यो गर्भस्त्वदाधारो धन्यौ पोतौ
त्वया स्तनौ ॥ ५९ ॥ इदं येषूस्तु संश्रुत्याब्रवीन्माना ममैव का । के वा मे भ्रातरः के वा

धन्याः स्व्येया नु मत्कृते ॥ ६० ॥ इत्युक्त्वा स समासीनान् स्वशिष्यान्परितः करं । विस्तीर्य्योवाच
माता मे भ्रातरश्च स्थिता इमे ॥ ६१ ॥ मत्स्वर्गीयपितुर्यो हि वाक्यं श्रुत्वा सुपालयेत् । स मे भ्रातैव
माता च स्वसापि स च मङ्गलः ॥ ६२ ॥ गुरुरुवाच ॥ तद्गृहात्तु विनिःसृत्य पूर्णेऽस्मिन्नुपदेशने ।
धन्यां मातरमीक्षित्वा भ्रातॄंश्चापि तदा प्रभुः ॥ ६३ ॥ तस्मिन्नेव दिने नावं यां शिष्या ह्रद
रोधसि । प्रास्तुवन्व्यूहसंकोचात्तां ततः प्राविशन्मुदा ॥ ६४ ॥ तदुपर्य्येव चासीनो व्यूहांस्तान् ११९
रोधसि स्थितान् । नानापुरसमायातान् दृष्टान्तैरित्यशिक्षयत् ॥ ६५ ॥ श्रीयेषूरुवाच ॥ वीजं
वप्तुं कदाचिद्वै कृषकः कोऽपि निर्गतः । पद्धतौ तु पतत्किंचित्प्राप्याद‍न्पक्षिणो द्रुतं ॥ ६६ ॥
शिलास्वन्यत्तु पतितमादावाश्वल्पमृत्सु वै । प्ररुह्याथातपैः शुष्कं हीनमूलाभिषेचनं ॥ ६७ ॥
पतितं कण्टकेष्वेवान्यत्प्ररूढमिमैः सकृत् । वर्द्धितैः पीडितं चापि शेषेऽक्षीयत सर्वशः ॥ ६८ ॥

तितं तु सुमृद्यन्यत्प्ररूढं चापलन्ततः । किंचित्त्रिंशद्गुणं किंचित्तथा शतगुणाद्यपि ॥ ६९ ॥ यस्य
ष्मद्गणे कर्णौ श्रवणार्थैव संस्थितौ । आत्मार्थे स इदं वाक्यमाकर्णयतु यत्नतः ॥ ७० ॥ गुरुरुवाच ॥
था संपूर्य्य स कथां शिष्यैः पृष्टः पृथक्तदा । त्वं तथोपदिशस्येतान् दृष्टान्तैर्नु कुतः प्रभो ॥ ७१ ॥
ति पृष्टोऽब्रवीत्सोऽतः स्वानुगान्नावि संस्थितान् । स्वर्गराज्यरहोज्ञानं नैभ्यो दत्तं हि किंतु वः ॥
२ ॥ यो दद्याद्धि नरस्तस्मै देयमप्यधिकं ततः । न दद्याद्यस्तु तस्माद्धि हार्य्यं तेनापि यद्धृतं ॥ १२०
३ ॥ तत एतेऽपि दृष्टान्तैरुपदेश्या मया यतः । पश्यन्तोऽपि न पश्यन्ति शृण्वन्तोऽपि न
जानन्ते ॥ ७४ ॥ एतेष्वपि च तद्वाक्यं संपूर्णं यत्पुरोदितं । इषायाय महेशेन तन्मुखं स्पृशता
ज्वलैः ॥ ७५ ॥ त्वमेतत्प्रयातः कुलं ब्रह्मपूतं समाकर्ण्य यूयं न भुत्स्यध्व एव । अभिप्रेक्षमाणा
अपि स्थूलनेत्रैर्न किंचित्ततो द्रक्ष्यथैव भ्रमन्तः ॥ ७६ ॥ भवेत्स्तब्धहृज्जैष लोकः समस्तो निरुद्ध

श्रुतिर्मुद्रिताक्षश्च सम्यक् । यतो नेक्षणाकर्णनज्ञानभागी परावृत्तहृच्चाप्नुयान्मच्चिकित्सां ॥
७७ ॥ तद्वद्देषो ऽधुनाप्योघः किंतु वो मङ्गला दृशः । पश्यन्त्यो हि तथा कर्णाः शृण्वन्तो
वो ऽपि मङ्गलाः ॥ ७८ ॥ बहवो हि प्रवक्तारः प्राक्तना धर्म्मिणो ऽपि च । युष्मद्दृष्टश्रुतान्यै
च्छन्द्रष्टुं श्रोतुं च निष्फलं ॥७९॥ ततः शृणुत वप्तुर्वै दृष्टान्तं यच्छ्रुतेर्विना । समस्तानपि दृष्टान्तान्
कथं बोद्धुं शक्ष्यथ ॥ ८० ॥ बीजं तन्निश्चयं वित्त वाक्यमैशं सुविस्तृतं । पद्धतौ पक्षिभुक्तं १२१
तु यद्बीजं शृणुतैव तत् ॥ ८१ ॥ श्रुतमैशवचो ऽज्ञेनागत्य दुष्टो ऽभिशाप्यथ । तद्धृदो ऽपहरत्याशु
तच्छ्रद्धामोक्षरुद्धये ॥ ८२ ॥ इत्यध्ववीजमथ यच्छिलोप्तं शृणुतैव तत् । श्रुतमैशं वचः कैश्चि
द्गृहीतं वापि हर्षतः ॥ ८३ ॥ ये ऽन्तःसुस्थिरसंकल्पमूलहीनास्ततो ऽचिरात् । धर्म्मार्थे वा
धनोष्णैर्वै संक्षुब्धा विसृजन्ति तत् ॥ ८४ ॥ इत्यश्मवीजमथ वः श्राव्यं यत्कण्टकस्थितं ।

ऽ ऽशमाकर्णितं वाक्यं कैश्चित्स्वीकृतमेव च ॥ ८५ ॥ ये परे चिन्तनैर्भिन्नैः संसारस्य धनस्य च ॥
भ्रान्तिलोभैः समाकीर्णा हते वाक्ये ऽफलाः कृताः ॥ ८६ ॥ कण्टकस्थमिति ज्ञेयं सुभूम्युप्तं तु
यत्तथा । तद्विशुद्धर्जुहृदयैरेवात्तं वच ऐश्वरं ॥ ८७ ॥ ईदृशा हि नरा वाक्यं श्रुत्वा रक्षन्ति
यत्नतः । क्षमाद्यातः फलं भूरि दधति श्रेष्ठकर्म्मणां ॥ ८८ ॥ गुरुरुवाच ॥ स्वदृष्टान्तं महा
वप्ता स संज्ञाप्यानुगांस्तथा । तदान्यैरपि दृष्टान्तैस्तान् स्थितो नाभ्युपादिशत् ॥ ८९ ॥ १२२
श्रीयेषूरुवाच ॥ भद्रवीजं यथा स्वीये क्षेत्र उप्त्वा श्रमान्नरः । अथापैति हिते काले ऽपेक्ष्यमाणः
परे फलं ॥ ९० ॥ ईशराज्ये तथा भव्यं वित्त सा हि क्षितिः स्वयं । वीजं तद्वापके किंचि
न्नजानत्यपि वर्द्धयेत् ॥ ९१ ॥ एतस्मिंश्च शयाने ऽपि जागर्त्येवमहर्निशि । उत्थितं पत्र
माद्ये ऽतः कणिशं शस्यमप्यतः ॥ ९२ ॥ शयितस्तु यदा स्वामी समस्तैः सह कर्षकैः । तदा

कोऽप्यरिरायातः काशवीजमिहावपत् ॥ ९३ ॥ दुष्टे तस्मिन्गते चात उत्थितं कणिशं यदा ।
तन्मध्येऽप्युप्तकाकेक्षुर्वर्द्धितः संबभौ तदा ॥ ९४ ॥ ततोऽभ्येत्य पतिं प्रोचुर्भृत्याः किं भवता निजे ।
क्षेत्रे नोप्तं वरं वीजमथ काशा इमे कुतः ॥ ९५ ॥ तान्प्रत्यूचे स निःशङ्कं तत्केनाप्यरिणा कृतं ।
तदोचुर्भवदिष्टं चेत्काशानुत्पाटयेम तान् ॥ ९६ ॥ तदा पतिरुवाचेदं मा कुरुध्वं कदाचन ।
तदुन्मूलात्सुशस्यस्यैवं समुत्पाटनं भवेत् ॥ ९७ ॥ उभयान्यपि वर्द्धन्तां यावन्न स्यात्सुपक्वता । १२३
ततस्तानि सकृच्छेत्तुं समादेक्ष्यामि कर्षकान् ॥ ९८ ॥ अथादौ किल काकेक्षून् बन्धं बन्धं प्रदग्धये ।
निदधीताथ शस्यं मे संचिनुध्वं खलोदरे ॥ ९९ ॥ तद्वद्वेद्यमपि स्वर्गराज्यमन्यत्तु किं मया ।
तत्तुल्यमधुना वाच्यं दृष्टान्तोऽर्हः क एव वा ॥१००॥ एकसर्षपवीजस्य तुल्यं तद्विन्न केनचित् ।
स्वक्षेत्रे स्वामिनोप्तस्य सर्व्ववीजलघीयसः ॥ १०१ ॥ एतस्माद्युत्थिताद्रूढो महावृक्षः समावृतः ।

शाखाभिर्यासु संछिन्ना वसन्त्याकाशपक्षिणः ॥ १०२ ॥ स्वर्गीयराज्यं पुनरेव वेद्यं रसो
यथा स्फीतिकरोऽल्पमात्रः । त्रिद्रोणमाने निहितः स्त्रिया यो व्याप्नोति चूर्णं क्रमशः समस्तं ॥
१०३ ॥ गुरुरुवाच ॥ इदं सर्वं नरौघेभ्यो दृष्टान्तैरब्रवीत्प्रभुः । नवा किमपि तेभ्यः स विना
दृष्टान्तमैरयत् ॥ १०४ ॥ खृष्टार्थे यच्चिरादुक्तमासाफेन प्रवाचिना । तत्तथा हि समायातो
वाक्यैः सोऽपूरयद्ध्रुवं ॥ १०५ ॥ आसाफ उवाच ॥ अहो मोचयित्वा चिराद्बद्धमास्यमहं ज्ञान १२४
दृष्टान्तसार्थान्प्रवक्ष्ये । जगत्सृष्टिकालादपि भ्रान्तिकूपे यदासीत्प्रगुप्तं तदेवेरयिष्ये ॥ १०६ ॥
गुरुरुवाच ॥ स तु व्यूहांस्तथा प्रोच्य यथा श्रोतुमशक्नुवन् । भ्रान्तिकूपोषितास्तेऽथ तन्नावो
निर्गतः प्रभुः ॥ १०७ ॥ गृहसंस्थं च तं शिष्या अभ्येत्य स्वच्छदृष्टयः । पृथक् प्रार्थयितुं तासां
वाचामर्थं प्रचक्रमुः ॥ १०८ ॥ शिष्या ऊचुः ॥ अस्मभ्यं वरद स्वामिंस्त्वं दृष्टान्तं प्रकाशय । यम

वादीर्नरौघेभ्यः क्षेत्रकाशकथायुतं ॥ १०९ ॥ श्रीयिषूरुवाच ॥ स्वक्षेत्रे भद्रवीजं य उवाप स नरा
त्मजः । यत्क्षेत्रं तु मया प्रोक्तं तदिदं वै चराचरं ॥ ११० ॥ भद्रवीजं तथा विद्ध स्वर्गराज्यस्य
सन्ततिं । दुष्टजान् काशवीजं तद्वप्तारं चाभिशापिनं ॥ १११ ॥ शस्यच्छेदनकालस्तु जगतः
शेष एव सः । छेत्तारः कर्षकाश्चोक्ताः स्वर्ग्यदूतास्तथैव ते ॥ ११२ ॥ यथा दाह्यास्तदा काशा
ये ऽधुना पीडनाद्विना । शस्यैः सहापि वर्द्धन्ते तथान्ते जगतो भवेत् ॥ ११३ ॥ नृपुत्रो निज १२५
राज्याद्धि पातकान्यखिलान्यपि । कुक्रियांश्च वहिष्कर्त्तुं स्वदूतान् प्रेरयिष्यति ॥ ११४ ॥
ये संचित्याग्निकुण्डे ऽपि क्षेपिष्यन्त्यखिलानिमान् । यत्र भीमो विलापः स्याद्दन्तां च विकटा
कृतिः । ११५ ॥ धार्म्मिकाः स्वपितूराज्ये प्रभास्यन्त्यर्कवत्तदा । यस्य कर्णौ स्थितौ श्रुत्यै स
आकर्णयतु ध्रुवं ॥ ११६ ॥ स्वर्गीयराज्यं पुनरेव तुल्यं क्षेत्रप्रगुप्तस्य निधेर्यमाप्त्वा । नरो ऽथ

हर्षाद्गत आत्मवस्तु विक्रीय तत्क्षेत्रपणं ददाति ॥ ११७ ॥ पुनर्यद्वद्वणिङ्मुक्ता अन्विच्छन्नति
शोभिताः । अथैकां प्राप्तवान्मुक्तां तत्सर्व्वास्वधिमूल्यकां ॥ ११८ ॥ आत्मवस्त्वखिलं तस्याः
प्राप्त्यै विक्रीतवांस्ततः । तद्वत्स्वर्गीयराज्येऽपि भविष्यद्वित्त मेऽनुगाः ॥११९॥ पुनः स्वर्गीय
राज्यं वै जालं क्षिप्तमिवार्णवे । संहृता येन मत्स्यौघा उत्तमाधममध्यमाः ॥ १२० ॥ रोधस्या
कृष्य पूर्णं तद्धीवरा उत्तमान्झषान् । कुवेणीष्वथ रक्षन्ति निक्षिपन्त्यपरांस्तथा ॥ १२१ ॥ १२६
जगच्छेषे भवेत्तद्वदीशदूताः समागताः । धार्म्मिकेभ्यः पृथक्कुर्य्युर्यत्नतोऽप्यधमान्नरान् ॥
१२२ ॥ तान्संचित्याग्निकुण्डेऽपि निक्षेपिष्यन्त्यशेषकान् । यत्र भीमो विलापः स्याद्दंता च
विकटध्वनिः ॥१२३॥ गुरुरुवाच ॥ इत्युक्त्वापृच्छदाचार्य्यः किं बुध्यध्वेऽखिलान्युत । प्रत्यूचुश्च
ततो नूनं प्रभो बुध्यामहे वयं ॥ १२४ ॥ श्रीयेषूरुवाच ॥ स्वर्गीयराज्याय ततो हि यो यः सुप्रस्तु

तोऽध्यापक एव योग्यः । स वै गृहस्थस्य निभः स्वकोषाच्छुत्नस्य नूत्नप्रतनानि नेतुं ॥ १२५ ॥

इति श्रीख्रीष्टसंगीतायां पुत्राभिषेकपर्व्वणि (राजचरित्रादिषायभव्यवाक्यानां षष्ठसर्गाद्द्वाविद्य गीतानामष्टसप्ततितमाद्योनभव्यवाक्येभ्यो मत्थायस्य द्वादशत्रयोदशसर्गाभ्यां मार्कस्य तृतीयचतुर्थसर्गाभ्यां लूकस्य षष्ठाष्टमदशमैकादशत्रयोदशसर्गेभ्यश्चोद्धृतः) स्वर्गीयदृष्टान्तसार्थो नामाष्टादशोऽध्यायः ॥ १२७

गुरुरुवाच ॥ तद्दिनस्य तु सन्ध्यायां शिष्यान्सोऽभ्यब्रवीदहो । हृदमुत्तीर्य्य गच्छाम दश पुर्य्यभिधां भुवं ॥१॥ तस्य संकल्पनं त्वेकोऽनुभूयाध्यापकोऽब्रवीत् । त्वया सार्द्धं गमिष्यामि यत्र यत्र व्रजेर्गुरो ॥ २ ॥ इति श्रुत्वाविदस्तस्यान्वेतुमिच्छोर्वचः प्रभुः । स्वविपज्ज्ञापनार्थेऽतो वाक्यं प्रत्यब्रवीदिदं ॥ ३ ॥ श्रीयेषूरुवाच ॥ लोमशाभिः श्रिता गर्त्ता नीडा एव च पक्षिभिः । नृपु

त्रस्य तु मूर्द्धार्थे स्थानं नास्त्यपि कुत्रचित् ॥ ४॥ गुरूरुवाच ॥ इत्युक्त्वाथावगच्छन्सो ऽभ्युक्तः शिष्ये
ण केनचित् । पित्रन्त्येष्टिक्रियार्थे ऽद्यात्रानुमन्यस्व मां स्थितं ॥ ५ ॥ श्रीयेषूरुवाच ॥ मृता एव
मृतानां वै क्रियाः कुर्व्वन्तु साम्प्रतं । किंतु त्वं जीवनप्राप्तस्ता विवर्ज्यान्विहीह मां ॥ ६ ॥
गुरूरुवाच ॥ इत्युक्त्वा जीवदो येषूरात्मशिष्यैः समन्वितः । व्यूहान् रोधसि संत्यज्य गालील्यान्
प्राविशन्तरिं ॥ ७ ॥ हूदे दूरं ततो गत्वा गर्लालागदरान्तरे । यदाशेत तरौ क्लान्तः सो ऽन्यनौ १२८
च्चन्तिकास्वपि ॥ ८ ॥ भीमया ते तदा व्याप्ता वात्ययैव महोर्म्मिषु । अभिगच्छत्स्वपि मुहुर्मग्ना
इव परिप्लुताः ॥ ९ ॥ अथातिबिभ्यतः शिष्याः शयानमभिगत्य तं । अभिजागर्य्य चोचुः किं
प्रभो ऽस्मान्नेक्षसे प्लुतान् ॥ १० ॥ अथोत्थाय स वायुं वै लहरीश्चाप्यभर्त्सयत् । तत्क्षणाच्चाप्य
भूच्छान्तिर्नैस्थानां सर्व्वतो हूदे ॥ ११ ॥ शिष्यांश्चोचे ऽल्पविश्वासा इत्थं वो ऽभूद्भयं कुतः । अति

भीतास्त्विमे सर्व्वे ऽन्योन्यमभ्यब्रुवंस्तदा ॥ १२ ॥ नौस्थिता ऊचुः ॥ को वै मानुष एवायं येन
ह्याज्ञापितास्तथा । वायवो ऽपि तरङ्गाश्च विनीताः किङ्करा इव ॥ १३ ॥ गुरुरुवाच ॥ ततस्ते हृद
मुत्तोर्य्य नवदेश उपस्थिताः । गदर्य्यैरुषिते लोकैर्गिरषीयाभिधैः पुरा ॥ १४ ॥ अथ को ऽपि
स्थितस्तत्रापूतभूताश्रितश्चिरात् । शवस्थाननिवासीह सर्व्वपान्थभयंकरः ॥ १५ ॥ शृङ्खलै
रपि यो बद्धो दमनार्थं मुहुर्मुहुः । तान् बलेन सदा भंक्त्वा खण्डखण्डमवाकिरत् ॥ १६ ॥ १२९
नृभ्यो दूरमहोरात्रे ऽद्रिषु चित्यासु च स्थितः । सहान्यो ऽपि सदा नर्द्दन्प्रस्तरच्छिन्नमांसकः ॥
१७ ॥ तयोराद्यः प्रभुं दृष्ट्वा दूरतो ऽभ्यद्रवत्तदा । तदग्रे प्रणिपत्यापि भूतव्याप्तस्तथानदत् ॥
१८ ॥ भूत उवाच ॥ किमस्माकं त्वया सार्द्धं हे ऊर्द्धिष्ठेश्वरात्मज ॥ येषूस्त्वां प्रार्थयाम्यस्मान्
कालात्प्राङ्मा प्रपीडय ॥ १९ ॥ गुरुरुवाच ॥ इत्यूचे स वचः शृण्वन् येष्वस्तन्नरतो वहिः । समाज्ञा

पयतो गन्तुं भूतोऽन्तःस्थो दुरात्मकः ॥ २० ॥ येषूं तु तव किं नामेति पृच्छन्तं तदा शठः । प्रत्यू

वेऽहं गणो नामास्मत्संख्या बहुरस्ति हि ॥ २१ ॥ किंतु चेन्निःक्षिपेर्नृभ्यां तदा नैतत्प्रदेशतः ।

नैवतद्ध्रदमध्येऽस्मान् पशूनां त्वन्तरीरय ॥ २२ ॥ इत्युवाच गणोऽपूतो वरंचासीद्गिरौ तदा ।

तद्ध्रदस्योपरि महान् कोलानां समजः स्थितः ॥ २३ ॥ ततोऽपूतगणस्यापि स्वीकृत्य प्रार्थनां प्रभुः ।

पीडिताभ्यां वहिर्नृभ्यामैरयच्छूकरोदरे ॥ २४ ॥ अथ ते शूकरा भूतैराविष्टा अतिवेगतः । शृङ्गे १३०

ऽभिद्रुत्य निःपेतुर्मग्नाश्चासन् ह्रदेऽखिलाः ॥ २५ ॥ ततस्तद्द्विसहस्राणां कोलानां पालका भयात् ।

गदरापुर्य्यभिद्रुत्यावोचन् क्षेत्रेऽपि कर्म्म तत् ॥ २६ ॥ अथ पुर्य्युषिताः सर्व्वे कोलानां तु विशेषतः ।

मोसिशास्त्रविरुद्धं ये पुण्योर्व्यां स्वामिनोऽभवन् ॥ २७ ॥ ते विनिर्गत्य मिलिता यत्नात्तत्कर्म्मदृष्टये ।

स्थितं येष्वा सहापुस्तं भूतग्रस्तं प्रकीर्त्तितं ॥ २८ ॥ यश्चादम्यः पुरा नग्नः सदा पान्थभयानकः ।

स सवस्त्रो ऽधुना सभ्यो ऽतिष्ठद्येषूपदान्तिके ॥२९॥ ततो भीता गदर्य्यास्ते ऽशृण्वन् शूकरपालतः ।
नरोन्मादः कथं यातः पशुषु प्रभुवाक्यतः ॥ ३० ॥ इदमज्ञास्तु ते श्रुत्वा प्रार्थयन् भयविह्वलाः । हे
प्रभो दययापेहि रौद्रकृन्नः प्रदेशतः ॥ ३१ ॥ ईदृशीं प्रार्थनां येषूराकर्ण्य गदराभुवः । गलीलां
प्रति गत्यर्थमारुरोह पुनस्तरिं ॥ ३२ ॥ किंत्वारोहत्तमाहूय हीनभूतगणः स तं । सह गन्तुं ययाचैव
प्रत्यूचे तं तु मोचकः ॥ ३३ ॥ श्रीयेषूरुवाच ॥ मा मया सार्द्धमागच्छ किंतु गेहं पुनर्गतः । स्वीये १३९
भ्यो ब्रूहि कर्म्मैतत्त्वदर्थे च दयां प्रभोः ॥ ३४ ॥ गुरुरुवाच ॥ तच्छ्रुत्वा स गतस्तस्मिन्देशे
दशपुराभिधे । येष्वः शुद्धीकृतः कीर्त्तिं सर्वत्रासूचयन्मुदा ॥ ३५ ॥ इति श्रीख्रीष्टसंगीतायां
पुत्राभिषेकपर्व्वणि (मत्थायलूकयोरष्टमनवमसर्गाभ्यां मार्कस्य चतुर्थपञ्चमसर्गाभ्यां चोद्धृतो)
भूतोपसर्गदमनं नामोनविंशोऽध्यायः ॥

गुरुरुवाच ॥ तं देशं तु प्रभुस्त्यक्त्वाज्ञैर्गदर्य्यैः समाश्रितं । एकस्मिन् दर्शिते तत्रैश्वर्य्यानुग्रह
लक्ष्मणि ॥ १ ॥ तैबर्य्यं पुनरुत्तीर्य्य तर्य्यां शिष्यान्वितो हृदं । गलीलां स्वपुरं चापि पुनरेव
मुपस्थितः ॥ २ ॥ तं च तत्र स्थितः कूले व्यूहः कापर्णहूमिणां । महानप्युत्तरिष्यन्तं संप्रत्यैक्षत
सद्गुरुं ॥ ३ ॥ तेष्वध्यक्षस्तु यत्कन्या मृत्युतो जीविताभवत् । यैरनामा तथान्ये च प्रधानाद्या
श्चिकित्सिताः ॥ ४ ॥ ते येषूं दण्डामप्युक्तं हैरोद्यैः सफरीष्यकैः । मठे जिघांसितं चापि १३२
समगृह्णन्त वै मुदा ॥ ५ ॥ नत्वैच्छत्तत्पुरे स्थातुं प्रभुः किंत्वखिलास्वपि । गलीलापूर्षु सद्राज्यं
प्रवक्तुं प्रेरितैः सह ॥ ६ ॥ ततः सर्व्वपुरग्रामान् स तैर्द्वादशभिर्वृतः । शिष्यैः पर्य्यव्रजद्यत्नात्सु
वार्त्तां विप्रकाशयन् ॥ ७ ॥ तमप्यनुगतास्तत्र स्त्रियः काश्चिद्विशेषतः । याः पुरा रोगभूतार्त्ता
आसंस्तेन चिकित्सिताः ॥ ८ ॥ तासु मुख्या मरीया सा यस्याः सप्त निराकृताः । मन्दभूताः

प्रभोः शक्त्या मग्दलिन्यभिधानिका ॥ ९ ॥ योहन्ना चापि खूजस्य येषूविश्वासिनो वधूः ।
यं भूपो ऽप्यन्तिपाश्चक्रे स्वकर्म्मसचिवं पुरा ॥ १० ॥ सूसन्ना चाप्यनेकाश्च कुलीनास्तत्समा अपि ।
स्वधनव्ययतो यास्तमसेवन्त मुदा गुरुं ॥ ११ ॥ शिष्य उवाच ॥ महाग्रगस्य बद्धा सो ऽन्तिपा
हेरोदिजस्तदा । क्वासोत्किमकरोद्वापि गलीलाया महीपतिः ॥ १२ ॥ गुरुरुवाच ॥ दूरे
दक्षिणदेशे स आरब्याजिकृते स्थितः । नावेत्स्वसचिवादीनां खृष्टे विश्वासितां प्रभौ ॥ १३ ॥ १३३
निन्दितस्य गलीलायां येष्वो हैरोद्यनामकैः । नाशृणोदपि नामासौ स्वर्गराज्यविधायिनः ॥
१४ ॥ तस्याप्यग्रचरं हत्वा कारायां स महात्मकं । तद्दुष्कर्म्मपरे चोग्रैः सदा द्विड्भिः परा
जितः ॥ १५ ॥ शिष्य उवाच ॥ अथाचार्य्य कथं मृत्युं गतस्तत्र महात्मकः । वरस्निग्धः स
सर्व्वेभ्यः प्रवाचिभ्यो महत्तरः ॥ १६ ॥ यो ऽपि शिष्यद्वयात्स्वीयाल्लेभे स्वानन्दपूरकं । खृष्टस्या

गामिनः साक्ष्यं क्रियाविद्यौघनिश्चितं ॥ १७ ॥ गुरुरुवाच ॥ घोरां तामापदं शिष्य भूतां तत्स
मयेऽपि ते । इदानीं कथयिष्यामि नारीशाठ्यसमुत्थितां । १८ ॥ भूपपत्नी हि हैरोद्या स्व
विवाहविगर्हणात् । योहन्न्युन्नातपरे वैरं न व्यस्मार्षीत्कदाचन ॥ १९ ॥ तद्धिंसायास्तु समयं
हितं नावाप कर्हिचित् । यावन्नोपस्थितं तस्याः पत्युर्जन्मदिनं शुभं ॥ २० ॥ तदा तेन हि
याम्यायां प्रस्तुतं भोजनं महत् । पिरायारण्ययोर्मध्ये स्वीयदुर्गे मखैर्नृष ॥ २१ ॥ आमन्त्रिता १३४
स्तदर्थं च वाहिनीपतयोऽखिलाः । पिरायीयाः सगालील्या ये ये नासंस्तदा युधि ॥ २२ ॥ तन्नो
जेऽपि गलीलायाः प्रधानैरावृता स्थिता । स्वपुत्र्या सह सा राज्ञी यून्या पूर्वधवोद्भवा ॥ २३ ॥
सलोमी नाम सा कन्यान्तिपो याधर्म्म्यभूभुजः । भ्रातृजा क्षेत्रजा चापि भूतानृत्यत्तदोत्सवे ॥
२४ ॥ तन्नृत्यपरितुष्टः स सह सर्व्वैर्निमन्त्रितैः । किं ते वत्से प्रदास्यामीयत्सुखायेत्युवाच तां ॥

२५ ॥ शपित्वा चाप्यतो मत्तोऽब्रवीद्यद्यत्त्वमर्थयेः । कन्ये तत्किल दास्यामि राज्यार्द्धमपि
वेद्भूतं ॥ २६ ॥ इत्युक्त्वा सा तदा कन्या गता स्वां मातरं प्रति । किं भूपात्प्रार्थयिष्यामि प्र
दित्सोरित्यवोचत ॥ २७ ॥ ततो हिंसकहैरोद्या गुप्तमाकर्ण्य मन्त्रणं । पुत्री तद्वाक्यतो
भूपं पुनर्गत्वेदमब्रवीत् ॥ २८ ॥ सलोम्युवाच ॥ एतदेव महाराज देहि मह्यमनुग्रहात् ।
स्नापकस्येह योहन्नेर्भक्ष्यपात्रेऽर्पितं शिरः ॥ २९ ॥ गुरुरुवाच ॥ इत्युग्रं प्रार्थनं श्रुत्वा व्याकुला १३५
त्माभवत्तदा । भूप आद्रियमाणो हि तं बद्धमपि सद्गुरुं ॥ ३० ॥ किंतु तच्छपथं पूर्वं सर्वाहूताग्र
उक्तवान् । अतस्तं निष्फलं कर्तुं नैच्छन्मूढः स लज्जया ॥ ३१ ॥ ततो योहन्निकारायां तद्दु
र्गान्तःप्रहारिणं । सशस्त्रं प्रैरयच्छेत्तुं शिरस्तस्य महात्मनः ॥ ३२ ॥ अथासौ तच्छिरश्छित्त्वा
भक्ष्यपात्रे निधाय च । आज्ञयानीतमददात्सलोम्यै सर्वसम्मुखे ॥ ३३ ॥ दृष्ट्वा चापि कुमार्य्येषा

हैरोद्यायै समार्पयत् । मात्रे जिघांसवे तद्वै दुर्मनःकामपूरकं ॥ ३४ ॥ तथा यं नारुणद्राज्ञो
नवा राज्यः कुकर्म्मणः । भीतिस्तयोर्भर्त्सनतोऽलीयात्मानं महागुरुं ॥३५ ॥ अबधीत्तमहाबात्मा
भूप हेरोदाध्ववर्जकः । तत्पत्न्या हिंस्रया राज्याकृष्ट ईजबलात्मना ॥ ३६ ॥ विलपन्तस्तु
तच्छिष्या हित्वैव स्वगुरोः शिरः । राज्याः करेऽतिरौद्रं तन्नेत्रयोस्तृप्तिकारकं ॥३७ । जीवितं
तु तदात्मानं परात्माये सुमत्य वै । तत्कबन्धं गृहीत्वोर्व्यां निदधुर्धर्म्यरीतिभिः ॥ ३८ ॥ शिष्य १३६
उवाच ॥ किं न शोच्योऽखिलैरेषोऽतिरौद्रः सद्गुरोर्बधः । किं नापीश्वरतः क्रूरा योग्यं ते
दण्डमाप्नुवन् ॥ ३९ ॥ गुरुरुवाच ॥ परे भव्यस्तयोर्दण्डो दम्पत्योरतिपापयोः । यस्त्वेतर्ह्य
प्यभूद्दण्डस्तं शिष्य कथयामि ते ॥ ४० ॥ हांरिथो नृप आरब्यो यत्सुतापरिवर्जनात् ।
अन्तिपाघावली जाता हिंसापर्य्यन्तिका क्रमात् ॥ ४१ ॥ दुष्टजामातृदण्डार्थं स्वराज्यस्यापि

वृद्धये । स भीमैरावृतः सैन्यैर्युद्धं चक्रेऽतियत्नतः ॥४२॥ तन्महाबलयोः शिष्य स्वस्वसैनिक
नीतयोः । यदातः समुदायोऽभूद्रणसंकुलसंवृतः ॥ ४३ ॥ तदा निर्ग्रन्थनैर्घोरैर्हैरोद्यस्याखिलं
बलं । ससेनान्यप्यपहतमारबैः प्रियलोप्नकैः ॥ ४४ ॥ अन्तिपास्तु तदापत्तो भीतिवैकुल्य
विप्लुतः । द्रुतोऽरिभ्यः सहायार्थी कैशरं प्रैरयल्लिपिं ॥ ४५ ॥ यहूद्यास्त्वपि भूयांसो हतमो
शेन तद्बलं । योहन्नेर्बधदण्डार्थममन्यन्ताब्रुवन्नपि ॥ ४६ ॥ इति श्रीखृष्टसंगीतायां पुत्राभि १३७
षेकपर्व्वणि (मत्थायस्य नवमचतुर्दशसर्गाभ्यां मार्कस्य पञ्चमषष्ठसर्गाभ्यां लूकस्याष्टमसर्गात्
फ्लाव्ययोसेफरचितयहूद्यपुरातनप्रबन्धाच्चोद्धृतः) सद्यचरशिरश्छेदो नाम विंशोऽध्यायः ॥

गुरुरुवाच ॥ योहन्नेस्तु शिरश्छेदं तच्छिष्याः प्रस्थिताः प्रभुं । गलीलायां समाचख्युर्भ्रमन्तं
स्वानुगैः सह ॥१॥ तत्परिभ्रमणे त्वेष लोकान् रुग्भूतपीडितान् । सुस्थीकुर्व्वंश्च सर्व्वत्र शिक्षयंश्च

मठे मठे ॥२॥ श्रान्तांस्तान् क्लान्तचित्तांश्चावीन् हीनान् पालकैरिव । संदृश्य करुणाविष्टः स्व
शिष्यानिदमब्रवीत् ॥ ३ ॥ श्रीयेषूरुवाच ॥ अतीवभूर्य्येव सुपक्वशस्यं तच्छेदका अल्पतमास्तु
सन्ति । छित्त्यै ततो वैतनिकान्प्रणोत्तुं तत्पक्वशस्येश्वरमर्थयध्वं ॥ ४ ॥ गुरुरुवाच ॥ इत्युक्त्वा
स्वान्तिके येषूस्तान् द्वादश पुरावृतान् । प्रस्तरादीन्समाहूयारेभे प्रेरयितुं तदा ॥ ५ ॥ सर्वा
पवित्रभूतानां वहिष्कृत्यै रुजामपि । दौर्बल्यानां च मोक्षाय तेषु शक्तिं समार्पयत् ॥ ६ ॥ १२८
ज्वलदोजस्विदीपे चायगे निर्वापिते नरैः । तामसैर्जगदेतान् स प्रकाशयितुमादिशत् ॥ ७ ॥
श्रीयेषूरुवाच ॥ मा यात मार्गे क्वचिदन्यजानां सामर्थ्यका नापि पुरीर्विशेत । श्रान्तांस्त्ववीनेव
य इस्रयेलगोत्रोद्भवास्तानुपयात दीनान् ॥८॥ यद्यत्स्थले यूयमुपस्थितास्तु तस्मिन्मदादिष्टवचः
प्रवक्त । अहो समायाति चिरादभीष्टा स्वर्ग्यान्तिकेऽपीश्वरराजतेति ॥ ९ ॥ चिकित्सतात्रा

मयिनः पुनीत कुष्ठार्त्तिनो जीवयत प्रमीतान् । भूतान्निरस्येत विमूल्यमेव यूयं यथा प्राप
तथैव दत्त ॥ १० ॥ न हेमरूप्यं च नवापि ताम्रं काञ्चीषु गृह्णीत पथि व्ययार्थं । पाथेयकोषं न
वहध्वमंसे वस्त्रद्वयं नापि तथाददीत ॥ ११ ॥ मार्गाय मा यूयमुपानहोऽपि गृह्णीत किंत्वेक
कमेव दण्डं । सर्व्वे हि भृत्या निजवेतनार्हा अन्नं लभेरंस्तत एव नूनं ॥ १२ ॥ यस्मिंस्तु यूयं
नगरे प्रविष्टा ग्रामे च यस्मिन्नथ कोऽस्ति योग्यः । तस्मिन् समन्विच्छत तस्य चापि निके 
तने तिष्ठत निर्व्विकारं ॥ १३ ॥ गृहे विशन्तः प्रथमं तु वक्त कौशल्यमत्रास्त्विति चेत्त्विह
स्यात् । कौशल्यपुत्रोऽत्र वसेद्व आशीर्नवेतु युष्मान्प्रतिवर्त्तिता सा ॥ १४ ॥ युष्मांस्त्वनर्हो
नगरे गृहे वा न वेशयेद्यो न निशामयेद्व । तस्याथ निर्गत्य पुराद्गृहाद्वा साक्ष्याय मथ्नीत रजो
ऽपि पद्भ्यः ॥ १५ ॥ भीमे विचारस्य दिने ह्यमुष्य पुरस्य दण्डाद्भविता लघीयान् । दण्डः

सुदूरस्था अपि दुष्टभूमेर्घुमूर्ध्यकायाश्च तदेव वच्मि ॥ १६ ॥ अहो यथावीन्वृकवृन्दमध्ये तथात्र युष्मानहमीरयामि । ततो भुजङ्गा इव पेशलाः स्त पारावताश्चेव तथाप्यहिंस्राः ॥ १७ ॥ नृभ्यस्तु यूयं भवताप्रमत्ताः स्वीयासु ते वो हि महासभासु । समर्पयिष्यन्ति तथा मठेषु ते ताडयिष्यन्त्यपि वः कशाभिः ॥ १८ ॥ अप्यार्श्च तैर्यूयमतः प्रदेशाध्यक्षान्तिके भूपतिसम्मुखेऽपि । मदर्थमेवोपगमिष्यथैनत् साक्ष्याय तेषां च परोद्भवां च ॥ १९ ॥ हृतास्तदग्रेऽपि तदोत्तरं किं देयं न संचिन्तयतातियत्नात् । यद्यद्वचो ह्यहथ वक्तुमत्रैवात्मा पितुर्वक्ष्यति वोऽन्तरस्थः ॥ २० ॥ भ्राता तदा भ्रातरमर्पयेद्वै मृत्यै पिता वापि सुतं दुरात्मा । आक्रम्य पुत्राः पितरौ तथैव समानयिष्यन्त्यतिरौद्रमृत्युं ॥ २१ ॥ सर्वत्र मन्नामकृते मनुष्यैर्विद्रुह्यमाणा हि भविष्यथैव । यस्त्वन्तपर्य्यन्तमपि स्थिरात्मा सहेत सर्व्वं स लभेत मुक्तिं ॥ २२ ॥ निस्ताडिता

स्त्वेकपुरस्थितैश्चेद्यूयं तदा विद्रवतान्यपुर्य्यां । तथेस्रयेल्यासु हि सर्व्वपूर्षु भ्रम्यं नृपुत्रागमना
वधीतः ॥ २३ ॥ न कोऽपि शिष्यः स्वगुरोर्महीयान्नवा स्वनाथात्किल कोऽपि दासः । आर्य्यं
तु शिष्यस्य गुरूपमत्वं दासस्य नाथोपमता तथैव ॥ २४ ॥ गृहप्रभुं वै यदि बेल्जबूलेत्याख्यायु
रत्यन्तमसूयकास्ते । किं नाधिकं तत्परिवारलोकान् भूतेशरूपान् कथयेयुरेवं ॥ २५ ॥ मा भैष्ट
तद्भर्त्सनतस्तु यूयं नह्यस्ति गुप्तं किमपीह लोके । यदप्रकाश्यं नच किंचिदेव रहस्यमेतर्हि १४१
परेऽस्त्यवेद्यं ॥ २६ ॥ तमस्यतो वः प्रति यद्ब्रवीमि तन्मानुषान् श्रावयत प्रकाशे । यद्वोऽपि दिष्टं
श्रवणे गृहान्तस्तन्मन्दिरोपर्य्यनुघोषतोच्चैः ॥ २७ ॥ ये देहमात्राहनने समर्था नत्वात्मघाते न
बिभीत तेभ्यः । किंत्वात्मदेहौ नरके निहन्तुं शक्तात्परादेव विभीत गाढं ॥ २८ ॥ अहो किमे
केन पणेन नूनं न विक्रयःस्याच्चटकद्वयस्य । न युष्मदीयस्य पितुस्त्वसाक्षात्कुत्रापि भूमौ प्रपतेत्न

देकः ॥२९॥ वरंच युष्मच्छिरसोऽपिबालास्तेनाखिलाः संगणिताभवन्ति । अतोभयं मा कुरुताधि
मूल्या यूयं हि सम्यक्कूटकौघतोऽपि ॥ ३० ॥ यो योऽङ्गीकुर्य्यान्नराग्रे दृढं मां मत्पित्रग्रेऽङ्गीकरि
ष्याम्यहं तं । भूमौ येनास्वीकृतोऽहं मया सोऽस्वीकार्य्योऽतः स्वर्ग्यपित्रग्र एवं ॥ ३१ ॥ सन्धिं तु
संस्थापयितुं पृथिव्यां मामागतं मानुभवधमेव । यतो न सन्धिं खलु मर्त्यमध्येऽहं सन्निधा
स्यामि वरंतु खड्गं ॥ ३२ ॥ परस्परं भेदयितुं ह्यहं वै समागतस्तातसुतौ समन्तात् । कन्या
जनन्यौ च तथा मदर्थं श्वश्रूस्नुषे चापि विरोधनीये ॥ ३३ ॥ तदा भविष्यन्त्यरयो नरस्य स्व 142
बान्धवा एव वरंच यो यः । मत्तोऽधिकं स्वं पितरं प्रसूं वा स्निह्येत्सुतौ वापि स मेऽस्त्यनर्हः ॥
३४ ॥ स मेऽप्यनर्हो मनुजोऽस्ति यो न स्वशूलमुत्थाप्य ममानुगः स्यात् । जीवं हि यो विन्दति
नाशयेत्स त्यजेन्मदर्थे तु य आप्नुयात्सः ॥ ३५ ॥ यो यस्तु युष्मान् प्रलभेत हर्षात् स मां प्रभुं

वै लभते तदैवं । यो मां तु गृह्णीत तथैव सोऽथ गृह्णाति मत्प्रेरयितारमेवं ॥ ३६ ॥ ईशप्रवक्ता
रमितो य एव प्रवक्तृनाम्ना प्रलभेत सोऽतः । एतत्फलाप्तोऽथ लभेत यः सन्नाम्नापि सन्तं स
सतः फलाप्तः ॥ ३७ ॥ एतच्छिशूनामपि कंचिदेकं यः पाययेद्वै मम शिष्यनाम्ना । स्नेहात्सु
शीतोदकपात्रमेकं न निष्फलः स्यात्स इति प्रवच्मि ॥ ३८ ॥ गुरुरुवाच ॥ इत्यादिष्टा अमी
येष्वा द्वादश प्रेरितास्ततः । द्वौ द्वौ भूत्वा गलोलीयान्ग्रामान्पर्य्यव्रजन्नितः ॥ ३९ ॥ अनुताप १४३
वचः प्रोचुरैशराज्यागतिं च ते । बहूंश्चाभ्यज्य तैलेनाचिकित्सुः क्षीणदेहिनः ॥ ४० ॥ इति
श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मत्थायलूकयोर्नवमदशमसर्गाभ्यां मार्कस्य षष्ठसर्गाच्चो
द्धृतः) शस्यच्छेदकप्रेरणं नामैकविंशोऽध्यायः ॥

गुरुरुवाच ॥ तदा हीनः स्वशिष्यैः स वृतैर्द्वादशभिः प्रभुः । शिक्षयंश्च चिकित्संश्च तथा पर्य

व्रजत्पुरीः ॥ १ ॥ सर्वत्रानननुतापं च गलीलापुरवासिनां । दृष्ट्वाश्चर्य्यक्रियौघानामप्यालोक्या

ब्रवीदिदं ॥ २ ॥ श्रीयिषूरुवाच ॥ धिक्त्वां खोराजिनपुर तथा बेथ्शैदापि धिक्त्वां यस्माद्यानि

ध्रुवमिह मुहुर्वां प्रदिष्टानि मध्ये । कर्म्माण्येतान्युत यदि कृतानीतरार्च्चिष्वपि स्युस्ते वै भस्म

प्रवृतवपुषः स्युर्वराश्यावृताश्च ॥ ३ ॥ एतत्कुर्य्युश्चिरसमयतस्तूरशीदोनलोका मन्दा अप्य

द्भुतनिकरतः खिन्नचित्तानुतप्ताः । तस्माद्दण्डश्चरमदिवसे तूरशीदोनयोर्वैं दण्डाद्वां स्याल्ल १४४

घुतर इति प्रब्रवीम्येव सत्यं ॥ ४ ॥ किंतु त्वं रे मदुषितपुर ख्यातकापर्णहूम स्वर्गोन्नीतो

ऽप्यहह नरके क्षेपणीयं परे ऽध : ॥ आश्चर्य्याणि त्वयि हि चरितान्येव कर्म्माणि चेद्वै सौदूम्ये

स्वल्वतिशठपुरे स्युस्तदद्यापि तिष्ठेत् ॥ ५ ॥ तल्लोका ह्यद्भुतनिकरतः खिन्नचित्तानुतप्ता हन्तव्या

न स्युरत इह पाक्याग्निगन्धाश्मवृष्ट्या । तद्दण्डोऽतश्चरमदिवसे भीमरौद्रोऽपि भव्यो दण्डात्ते

घ्यात्लघुतर इति प्रब्रवीम्येव सत्यं ॥ ६ ॥ गुरूरुवाच ॥ समाप्यैतद्वचः सम्यग्भर्त्सकं क्षुण्णमानसः।
ततो विश्वासिनः शिष्यान् स्वान् पर्यालोचत प्रभुः ॥ ७ ॥ तांश्च द्वादशभिर्हीनान् श्रेयोभिरपि
तैर्बहून् । दृष्ट्वा स परिसन्तुष्टोऽत इमां प्रजगौ स्तुतिं ॥ ८ ॥ श्रीयेषूरुवाच ॥ दिवः पृथिव्या
अपि चेश मत्पितः सुधीभ्य एतद्यदगोपयोऽखिलं । अवेदयश्चैव शिशून् स्फुटं ततो मुदा प्रशं
सामि तवोत्तमां स्पृहां ॥ ९ ॥ तथास्तु सर्वाणि हि मे पिता ददौ न वेत्त्यतः कोऽपि पितु १४५
र्विना सुतं । न कोऽपि विद्यात् पितरं सुताद्विना सुतेच्छया वापि सुदीक्षितान्नरात् ॥ १० ॥
अहो परिश्रान्तहृदोऽत्र मानुषास्तथैव यूयं गुरुभारपीडिताः । अतीवदुर्वाह्यपरिश्रमव्यथा
विमुक्तये मां समुपैत हेऽखिलाः ॥११॥ युगं मदीयं स्वगलोपरि स्वयं प्रगृह्य शिक्षध्वमथैव मद्ध्रुवं।
अहं यतः शान्तविनीतमानसस्ततः सुविश्राममवाप्स्यथात्मकं ॥ १२ ॥ नहि दुःसहनीयं वै

II U

मदीयं विद्यते युगं । मदीयश्च तथा भारो न दुर्वाह्यो लघुस्तु सः ॥ १३ ॥ गुरुरुवाच ॥ इति प्रोच्य
प्रभुः शान्तो बहुशिष्यावृतो व्रजन् । गलीलापूर्ष्वगच्छत्स्वं नशरेतं पुरालयं ॥ १४ ॥ तन्मठे च
यथा पूर्व्वं शैशवेऽपि सदाविशत् । विश्रामाहे तथेदानीं गुरुर्भूतोऽप्युपस्थितः ॥ १५ ॥ तत्र दत्त
मधीत्यर्थमिषायस्य प्रवाचिनः । पुस्तकं स विमुच्यात्रैतत्प्राप्याध्यैत सद्वचः ॥ १६ ॥ श्रीयेषू
रुवाच ॥ सदात्मा महेशस्य मय्येव संस्थो यतो दुर्व्विधेभ्यः सुवार्त्तां प्रदातुं । तथा खिन्नहृत्सा १४६
न्त्वनं बद्धमुक्तिं तथान्धानुदृष्टिं च नुन्नोऽस्मि कर्त्तुं ॥ १७ ॥ नरान्दुष्टकारात उद्धर्त्तुमेव महेश
प्रसन्नाख्यसंवत्सरं च । रुदत्येव शीयोनलोके प्रवक्तुमिदानीं सदात्माभिषिक्तोऽहमेतः ॥
१८ ॥ गुरुरुवाच ॥ इत्यधीत्य पुरोक्तं तत्खृष्टस्यागामिनः परे । नाम्ना निहितचिह्नौघं भव्य
वाक्यं प्रकीर्त्तितं ॥ १९ ॥ प्रभुर्ग्रन्थमिषायीयं पुनर्बद्ध्वा समर्प्य च । परिचारकहस्तेऽथ समासीनो

॰भवन्मठे ॥ २० ॥ सर्वेषां तत्र संस्थानां नशरेत्पुरवासिनां । तस्मिन् पतत्सु नेत्रेषु पुनरुक्तं तथा
वचः ॥ २१ ॥ श्रीयेषूरुवाच ॥ अद्यैवैतद्वचो विन्न पूरितं वोऽपि गोचरे । येन ह्युक्तं क्रियौघं
वै कार्य्यं शुश्रुव सोऽस्म्यहं ॥ २२ ॥ गुरुरुवाच ॥ तथारिभेऽभिषिक्तः स तद्गण्यवचसः स्फुटां । टीकां
ते त्वतिविस्मित्य समवोचन् परस्परं ॥ २३ ॥ नाशरेत्या उचुः ॥ कोऽयं वै यो वचांसीयत्प्रसादानि
ब्रवीति नः । कुतस्तस्येयती बुद्धिरियत्यः शक्तयोऽपि च ॥ २४ ॥ किं नायं सूत्रधारस्य पुत्रः १४७
किं वा न तत्प्रसूः । मरीया भ्रातरः किं न ज्ञाता अस्माभिरस्य वै ॥ २५ ॥ याकोबयोसि
सीमोनयहूदाख्या न सन्ति किं । किं वा नास्य स्वसारोऽपि समीपे नोऽधुना स्थिताः ॥ २६ ॥
गुरुरुवाच ॥ एतद्विधमविश्वासं प्रभुः स्वपुरवासिनां । समालोच्य ततो वाक्यमेतन्निष्ठुरमब्र
वीत् ॥ २७ ॥ श्रीयेषूरुवाच ॥ निःशङ्कं यूयमेतन्मे प्रवदिष्यथ वै वचः । हे ख्यातभिषगात्मानं

त्वं चिकित्सितुमर्हसि ॥ २८ ॥ कृतं कपर्णह्रूमे यं क्रियौघं शुश्रुम त्वया । तं तथा स्वप्रदेशेऽपि
कुरु त्वमिह साम्प्रतं ॥ २९ ॥ सत्यमेतत्तु वो वच्मि ग्राह्यो नेशप्रवाच्यपि । स्वप्रदेशे स तत्रै
वानादृतो ह्यात्मबन्धुभिः ॥ ३० ॥ अलीयसमये नूनं यदा सार्द्धत्रिवत्सरं । अनावृष्ट्याखिला
भूमिर्दुर्भिक्षेण च पीडिता ॥ ३१ ॥ तदा किं नैस्त्रयेलेषु विधवा बहवः स्थिताः । न कांचित्प्रति
तासां तु प्रेरितः स महागुरुः ॥ ३२ ॥ किंतु सीदोन्यदेशस्य शारिप्तनगरे स्थिता । विधवैका १४८
महालीयाद्भुतकार्य्यैः सुतर्पिता ॥ ३३ ॥ तथालीषायसमय इस्त्रयेलेष्वपि स्थिताः । बहवः
कुष्ठिनः किंतु नैकस्तेन चिकित्सितः ॥ ३४ ॥ नहमानस्तु सुर्य्याणां सेनानीर्योऽभवत्तदा ।
कुष्ठी भूत्वैककः पूतोऽलीषायेण प्रवाचिना ॥ ३५ ॥ गुरुरुवाच ॥ एतन्महागुरोः श्रुत्वा नाद्भुतं
किमपीच्छतः । अविश्वासत एवैषां मध्य आचरितुं दृढं ॥ ३६ ॥ नाशरेत्याः क्रुधा पूर्णा मठान्तं

पुरतोऽपि च । वहिष्कृत्यानयन् शैले यदग्रे स्थापिता पुरी ॥ ३७ ॥ प्रपातयितुमप्यस्माद्गि
रेष्विच्छत्सु तेष्वथ । प्रभुर्मध्यस्थितोऽप्यन्तर्हितो भूत्वा विनिर्गतः ॥ ३८ ॥ न तन्मूर्खपुरे के
ऽपि विनाल्पैर्दुर्बलैर्नरैः । तत्स्पृष्ट्वा स्वास्थ्यमापन्नैस्तत्क्रियाभिः सुनर्पिताः ॥ ३९ ॥ इति
श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (राजचरित्रादिषायभग्यवाक्यानामेकषष्टितमसर्गान्मत्था
यस्यैकादशत्रयोदशसर्गाभ्यां मार्कस्य षष्ठसर्गाल्लूकस्य चतुर्थदशमसर्गाभ्यां चोद्धृतो) गलीला १४९
पुरभर्त्सनं नाम द्वाविंशोऽध्यायः ॥

गुरुरुवाच ॥ एतस्मिन्समये भूपो गलीलां पुनरागतः । अमङ्गलयुताजेः स्वात्स हेरोद्यो
ऽन्तिपाभिधः ॥ १ ॥ येष्व आश्चर्य्यकर्म्माणि परिख्यातानि सर्व्वतः । आकर्ण्य स्वीयभृत्येभ्यो
यत्नात् प्रष्टुं प्रचक्रमे ॥ २ ॥ कोऽयमित्यथ तं केचिदलीयोऽयं महागुरुः । स्वर्गात्प्रत्यागत इति

प्रोचुः किंत्वन्य ऊचिरे ॥ ३ ॥ प्रत्नानां भव्यवक्तृणामेकोऽयं मृत्युतः पुनः । समुत्थित इति श्रुत्वा भूपोऽवादीद्भयाकुलः ॥ ४ ॥ अन्तिपा उवाच ॥ योऽहन्निःस्नापकोऽस्त्येष लूनं यन्मस्तकं मया । मृत्योः स पुनरुत्तस्थावतः शङ्कयावृतो ध्रुवं ॥ ५ ॥ गुरुरुवाच ॥ इत्युन्मत्तवचः स स्वदुष्क्रिया क्षुब्धमानसः । प्रोचे येषूमपि द्रष्टुमन्विच्छन् बहुयत्नतः ॥ ६ ॥ भूभुजोऽन्वेषणं चैतद्गलीलायां प्रकीर्त्तितं । तेऽपि द्वादश संश्रुत्य प्रेरिताः पूर्षु ये पुरा ॥ ७ ॥ प्रभुं प्रति समागत्य वच एतद सूचयन् । स्वकृतान्यपि कर्म्माणि श्रान्तानां शिक्षणानि च ॥ ८ ॥ सत्वमुं दुर्नृपं द्रष्टुं नेच्छंस्तैः सह धन्वनि । बेथ्शैदपुरासन्ने ययौ नावा ह्रदोपरि ॥ ९ ॥ तं तु तत्र गतं ज्ञाता महाव्यूहास्तटस्थिताः । पद्भ्यां नानापुरीभ्योऽपि यत्नात्तद्धन्वनि द्रुताः ॥ १० ॥ तांश्च यातान्समालोच्य पालहीनानवीनिव । करुणाविष्टहृत्सोऽन्त उपदेष्टुं प्रचक्रमे ॥ ११ ॥ ईशराज्यसुवार्त्तां तान्

सूचयामास सर्वशः । रोगिणोऽपि च तन्मध्ये स्थितान् सुस्थांचकार सः ॥ १२ ॥ प्रायः
सायं समायाति स्वकार्य्यामचिरात्क्रियां । निश्चित्यापि फिलिप्पं सोऽब्रवीदेव परीक्षितुं ॥
१३ ॥ यीयिषूरुवाच ॥ बेथशैदीय हे शिष्येयतो व्यूहान् समागतान् । कथं भोजयितुं द्रव्यं
क्रीणीयामात्र संस्थिताः ॥ १४ ॥ फिलिप्प उवाच ॥ इयतां क्रेतुमन्नार्थं किंचित्किंचिदपि
प्रभो । न भवेदेव निर्व्वाहः शतकर्षद्वयव्ययैः ॥ १५ ॥ गुरुरुवाच ॥ अथान्येऽपि समागत्या १५।
ब्रुवन् शिष्याः प्रभुं प्रति । इयं वै धन्वभूम्यस्ति गतः प्रायोऽपि वासरः ॥ १६ ॥ अतो ग्रामे
ष्विमान् यातुं भोजनक्रीतयेऽधुना । क्षेत्रेषु च परिस्थेषु गुरो प्रस्थापय द्रुतं ॥ १७ ॥ एतच्छ्रुत्वा
ब्रवीद्यिषूर्यूयं भोजयतेत्यथ । किं कर्षद्विशतेनान्नं गत्वा क्रेष्याम आपणं ॥ १८ ॥ इत्यपृच्छन्
प्रभुं शिष्याः स च प्रत्यब्रवीत्ततः । कियदन्नास्ति वः कोषेऽन्नं ब्रूतान्विष्य मेऽधुना ॥ १९ ॥ इत्या

द्विष्टेषु शिष्येषु गतेष्वपि च संशयं । एकोऽतः प्रस्तरभ्रातान्द्रिय एतद्वचोऽब्रवीत् ॥ २० ॥
अन्द्रिय उवाच ॥ बालकस्य स्थितस्यात्र कोषे मीनद्वयं तथा । पंचैव यवपिष्टानि तैस्तु किं
स्यादिहेयतां ॥ २१ ॥ गुरुरुवाच ॥ इत्याकर्ण्य प्रभुः प्रोचे तान्यानयत मेऽन्तिके । भूमौ
सर्व्वानपि व्यूहान् समासयत पङ्क्तिशः ॥ २२ ॥ अथातः स महाव्यूहः पंचसाहस्रसंख्यकः ।
पंचाशच्छः समासीनोऽभवत्तत्र हरित्तृणे ॥ २३ ॥ ततस्तु यवपिष्टानि पंचादाय प्रभुः स्थितः । १५२
उर्द्ध्वास्यः स्तुतिवाक्येन निवेद्य परमात्मने ॥ २४ ॥ भंक्त्वा चापि स्वशिष्येभ्यो विभक्तुमददात्तदा ।
व्यूहे क्रमश आसीनि तथा चैव झषद्वयं ॥ २५ ॥ ये ये चासन्नरास्तत्र बालकाश्च स्त्रियोऽपि च ।
शतपङ्क्तिषु संविष्टास्तृप्तास्तेऽन्नेन सर्व्वतः ॥ २६ ॥ सुतृप्तेष्वथ सर्व्वेषु स्वशिष्यान् पोषको
ऽब्रवीत् । शेषखण्डानि चिनुत मा कस्यापि क्षयोऽस्त्वतः ॥ २७ ॥ यवपिष्टकमीनानां शेषखण्डानि

ते तथा । संचित्यापूरयन्नेभिरिव द्वादश उल्लकान् ॥ २८ ॥ एतद्येषूकृतं कर्म्माद्भुतं संदृश्य ते
नराः । उचुरीशप्रवाची यो भुव्यपेक्ष्योऽस्त्ययं ध्रुवं ॥ २९ ॥ स्वशिष्यांस्तु प्रभुः प्रोचे यूयमारुह्य
नस्तरिं । यातात्र्हं त्विह संतिष्ठन् व्यूहान्प्रस्थापयाम्यतः ॥ ३० ॥ इत्यादिष्टेषु शिष्येषु समा
रूढेष्वतस्तरिं । संस्थितः स सह व्यूहैर्निशि पंचसहस्त्रकैः ॥ ३१ ॥ ये तदातः स्वपोष्टारं
राजानं कर्त्तुमिच्छया । अन्वैच्छन् किल सर्वत्रादिधीर्षुश्च बलादपि ॥ ३२ ॥ तत्संकल्पं प्रभु १५३
र्ज्ञात्वा नेच्छंश्चाप्यभिषेचनं । प्रार्थनार्थं पृथग्भूत्वा निश्येकाकी गिरिं ययौ ॥ ३३ ॥ शिष्यास्तु
प्रभुणा हीना बेथ्शैदान्तिके ह्रदे । प्रतिकूलेन वातेन संरुद्धगतयोऽभवन् ॥ ३४ ॥ अत्युच्चैश्च
तरङ्गैस्ते स्वनाव्यान्दोलिता निशि । सुक्लान्ताः प्रभुविच्छेदव्याकुलाश्चाभवंस्तदा ॥ ३५ ॥
ह्रदमध्ये गताः प्रायो गव्यूतिं कूलतो वहिः । चतुर्थप्रहरे रात्रौ समालोचन्त ते प्रभुं ॥ ३६ ॥

जलोपरि चलन्तं तु नौसमीपेऽप्युपस्थितं । तं सुज्ञातमुखं दृष्ट्वातः सर्वेऽतिभयं गताः ॥ ३७ ॥
अनर्दंश्चाप्यतित्रासाद्भूतोऽत्रायमुपस्थितः । येषूस्तांस्त्ववदद्भीतिं मा यातास्म्यहमेव हि ॥ ३८ ॥
इति श्रुत्वा वचोऽवादीत्प्रस्तरस्त्वं यदि प्रभुः । स्या मामागमयैवं नु स्वसमीपे जलोपरि ॥ ३९ ॥
इत्याकर्ण्याब्रवीद्येषूरागच्छेत्यथ स द्रुतं । नावमुत्सृज्य चलितुमारेभेऽप्सु प्रभुं प्रति ॥ ४० ॥
चण्डं वायुं तु संदृश्यात्यूर्द्ध्वाश्चोर्म्मीरपि त्रसन् । मंक्तुमारभमाणः स प्रभो रक्षेत्युदस्तनत् ॥ ४१ ॥ १५४
अथाशु स प्रभुर्बाहुं विस्तीर्य्यातस्तमग्रहीत् । अभ्यूचे चाल्पविश्वास किमर्थं त्वमशंकथाः ॥
४२ ॥ अथ तेन यदा सार्द्धं तन्नावं प्राविशत्प्रभुः । तत्क्षणेऽप्यभवच्छान्तः सतरङ्गः समीरणः ॥
४३ ॥ ततस्तन्नौस्थिताः कृत्स्ना अत्यन्तं विस्मयं गताः । गरीयो दृष्टवन्तोऽपि खृष्टैश्वर्य्यस्य
लक्षणं ॥ ४४ ॥ ह्यस्तनामन्नवृद्धिं न स्मरन्तः स्थूलबुद्धयः । आपन्मुक्तास्तदोचूस्त्वमीशपुत्रो

ऽसि निश्चयं ॥ ४५ ॥ तत्परे प्रचलन्तस्तु निर्विघ्नं ते ह्रदोपरि । शेषं कापर्णह्रम्येऽतो मुदा तीर
उपस्थिताः ॥ ४६ ॥ तं तु रोगमुचं ज्ञात्वा यातं तत्क्षितिवासिनः । परितः सर्वरोगार्त्तान्
संचिन्वन्ति स्म यत्नतः ॥ ४७ ॥ खट्वारूढांश्च संस्थाप्य स्वस्वग्रामापणेषु तान् । स्पर्शमात्रेण
तान् येषूं सुचिकित्सितुमार्थयन् ॥ ४८ ॥ शिष्य उवाच ॥ यस्तु ह्यः पालितो येष्वा व्यूहः पंच
सहस्रकः । तदामुं च नृपं कर्त्तुमदिधीर्षद्बलादपि ॥ ४९ ॥ सोऽथ किं चक्र आचार्य्य गुप्त्या १५५
तन्मध्यतः प्रभौ । सम्यगन्तर्हिते पश्चात्तीर्णवत्यप्यतो ह्रदं ॥ ५० ॥ गुरुरुवाच ॥ प्रातस्ते
बहवो लोकाः स्मरन्तो वा उपस्थितां । तत्रैकमात्रनावं ह्यः सशिष्यप्रभुवाहिकां ॥ ५१ ॥
सायं च दृष्टवन्तोऽपि नाव्यस्यामपगच्छतः । गुरुहीनांस्ततः शिष्यानिमानेव ह्रदोपरि ॥५२॥
आगतास्त्वपि तैबर्य्यपुरात्तत्र तदन्तरे । यदान्नं तत् प्रभुः स्तुत्यान्यवेदोदन्यनौषु वै ॥ ५३ ॥

अतस्ते ऽन्वभवन् सर्वे तदाप्यद्भुतकारिणं । तमेवैकाकिनं नूनं तिष्ठन्तं तत्र धन्वनि ॥ ५४ ॥
अतो ऽदृष्ट्वा महायत्नान्नतु संप्राप्य कुत्रचित् । अनुमाय गतं तस्मात्ते ऽन्वगच्छंस्तरिष्वपि ॥
५५ ॥ तीरे कापर्णहूम्ये च त उत्तीर्णा हृदात्प्रभुं । अन्विष्याथ मठे तस्य नगरस्याप्नुवन्मुदा ॥
५६ ॥ विस्मयाच्चाब्रुवन्नत्र त्वमायातः कदा गुरो । इत्युक्तः स इमान् सत्यस्तदा वाक्यैरभर्त्स
यत् ॥ ५७ ॥ श्रीयिषूरुवाच ॥ यूयं नैश्वर्य्यसच्चिह्नदृष्टिहेतोरिहापि मां । किंत्वन्नादनसंतृप्ते १५६
रेव दृष्ट्वथ लोभकाः ॥ ५८ ॥ इत्यहं किल वो वच्मि वरं नाश्यान्नभुक्तये । मा श्राम्यत यद
न्नं तु सदा तिष्ठेत्तदाप्तये ॥ ५९ ॥ नित्यजीवनयोग्यान्नमेतद्दास्यति वो यतः । पित्रेशेन
तदर्थं वै मुद्रितः स नरात्मजः ॥ ६० ॥ गुरुरुवाच ॥ इदं श्रुत्वावदन् व्यूहा ईश्वरेष्टक्रिया
कृते । किं गुरो ऽथाचरेमेति ततः प्रत्यब्रवीत्प्रभुः ॥ ६१ ॥ श्रीयिषूरुवाच ॥ ईश्वरेनाधुना

भूमौ प्रेरिते प्रत्ययो मयि । संस्थाप्य इति वो ज्ञेयैव तदिष्टक्रिया ध्रुवं ॥६२॥ गालील्या ऊचुः ॥
किं करोष्यथ चिह्नं त्वं यत्संदृष्ट्वा वयं खलु । त्वयि शंकां विना सर्व्वे कुर्य्याम प्रत्ययं मुदा ॥
६३ ॥ किं करोषि महत्कर्म्म यादृशं पितरो हि नः। भ्रमन्तः प्रान्तरे प्रापुर्मोसिवाक्यप्रतीतये ॥
६४ ॥ भोजितास्ते किमप्यन्नं चत्वारिंशत्समाः सदा । सद्ग्रन्थोक्तं यथा सो ऽन्नं तान्स्वर्गादप्य
भोजयत् ॥ ६५ ॥ गुरुरुवाच ॥ इत्युक्तो ऽप्रत्ययैर्लोकैरन्नमात्रप्रलिप्सुभिः । तदैतदपि वाक्यं १५७
तान्प्रति स प्रभुरब्रवीत् ॥ ६६ ॥ श्रीयेषूरुवाच ॥ स्वर्गतो ऽन्नं न वो मोसिर्द्ददौ किंत्विह मत्पि
ता । ततो ऽन्नं राति वः सत्यमिति नूनं ब्रवीम्यहं ॥ ६७ ॥ यो ऽवतीर्णो ह्यभूत्स्वर्गाद्दातुं
जगति जीवनं । तमेवेश्वरसत्यान्नाभिध जानीत निश्चयं ॥ ६८ ॥ गुरुरुवाच ॥ इत्याकर्ण्य
ततो गृध्राः प्रत्यूचुस्ते प्रभो यदि । एवं स्यान्नस्त्वदुक्तान्नं तदा देहि निरन्तरं ॥ ६९ ॥

श्रीयेषूरुवाच ॥ जीवनस्याहमेवान्नमतो योऽभ्येति मां स न । क्षुध्येत्प्रत्येति मां यश्च स न तृष्येत्क
दाचन ॥ ७० ॥ किंतु मां दृष्टवन्तोऽपि यूयमन्नाप्तितोषिणः । न प्रतीथ दृढं गृध्रा इत्युक्तं वः
पुरा मया ॥ ७१ ॥ पिता यच्छति यद्यन्मे तन्मामभ्येष्यति ध्रुवं । यो यश्चाभ्येत्यहं तं न निरस्येयं
कदाचन ॥ ७२ ॥ नह्यात्मेच्छां समाप्तुं वै मत्संप्रेरयितुस्त्वहं । इच्छां पितुरिह स्वर्गादवतीर्णो
ऽस्मि निश्चयं ॥ ७३ ॥ यद्दत्तं तेन मे तद्वै नापचेयं तु सर्व्वशः । उत्थाप्यं चान्तिमेऽह्नीतीच्छा मत्प्रे १५८
रयितुर्दृढं ॥ ७४ ॥ पुत्रं प्रत्येति यो दृष्ट्वाप्यं तेनानन्तजीवनं । स चोत्थाप्यो मयान्त्येऽह्नीतीच्छा
प्रेरयितुः पितुः ॥ ७५ ॥ गुरुरुवाच ॥ इदं स्वर्गावतीर्णान्नवाक्यं संश्रुत्य ते जनाः । विचित्रं
कुत्सनीयं च मत्वान्योऽन्यं समूचिरे ॥ ७६ ॥ गालील्या ऊचुः ॥ किं न योसेफपुत्रोऽयं येषूर्यत्पित
रावपि । विद्मो ऽथावातरं स्वर्गादित्यनेनोच्यते कथं ॥ ७७ ॥ गुरुरुवाच ॥ ईदृगप्रत्ययानां तु

नृणामन्नार्थिनामपि । गर्जनं प्रभुराकर्ण्याब्रवीत्तद्वचनार्थवित् ॥७८॥ श्रीयेषूरुवाच ॥ तद्वन्मा
गर्जतान्योऽन्यं यं ह्याकर्षति मत्पिता । मां स एव क्षमोऽभ्येतुं मयोत्थाप्योऽन्तिमेऽह्नि च ॥७९॥
ईशशिक्ष्याः परे सर्वे इत्युक्तं सत्प्रवक्तृभिः । अतः पित्रुक्तिशिक्षाप्तो यो यः सोऽभ्येति मां स्वयं ॥८०॥
न तु सत्पितृदर्शित्वाद्यतस्तं कोऽपि वै नरः । ईश्वरोत्थाद्विनापुत्रान्न ददर्श कदाचन ॥८१॥
पितृदर्शिनि यो यस्तु प्रतीयान्मयि तस्य वै । नित्यजीवनमित्युक्तं जीवानान्नेन वो मया ॥ १५९
८२ ॥ प्रान्तरे पितरो वो ये ऽकिमप्यन्नं सुभोजिताः । ते मृता एतदन्नं तु योऽद्यान्न म्रियते
ऽथ सः ॥ ८३ ॥ स्वर्गतो ह्यवतीर्णं यज्जीवनान्नं तदस्म्यहं । यश्चैतदन्नमत्त्येवाप्तं तेनानन्त
जीवनं ॥ ८४ ॥ यद्दास्याम्यहमन्नं तु तन्मे मांसं किल स्थितं । जगतो जीवनायैव प्रदेय
मचिरान्मया ॥८५॥ गुरुरुवाच ॥ इदं श्रुत्वा व्यरुन्धंस्तेऽब्रुवंश्चापि परस्परं । कथं दातुं स्वमांसं

नो भोजनायैष शक्नुयात् ॥ ८६ ॥ श्रीयेषूरुवाच ॥ सत्यं वो वच्मि चेन्मांसं नाद्यात नृसुतस्य वै । न पिबेनापि तद्रक्तं जीवनं नास्ति वो ऽन्तरे ॥ ८७ ॥ यो हि मन्मांसभोजी वै मदसृक्पाय्यपि स्थितः । सो ऽनन्तजीवनाप्तो ऽस्ति मयोत्थाप्यो ऽन्तिमे ऽह्नि च ॥ ८८ ॥ सत्यमन्नं हि मे मांसं सत्यं पीतमसृङ्मम । मन्मांसभुगसृक्पायी मय्यस्त्यस्मिंस्तथास्म्यहं ॥ ८९ ॥ यथाहं जीवता पित्रा प्रेरितो जीवितो ऽप्यतः । तथा यो ऽप्यत्ति मां सो ऽथ मत्तो जीविष्यति ध्रुवं ॥ ९० ॥ एतत्स्वर्गावतीर्णान्नं न तद्वत्पितरो हि वः । यज्जग्ध्वाथ मृता एतद्भोक्ता जीवेत्तु शाश्वतं ॥ ९१ ॥ गुरुरुवाच ॥ इति कापर्णहूम्ये स व्यूहानुपदिशन् मठे । प्रभुर्व्यस्मापयल्लुब्धान् स्वशिष्यांश्चाप्यतस्तथा ॥ ९२ ॥ एतेषां हि तदा केचिद्वत्कुमारेभिरे मिथः । को ऽवगन्तुमिदं वाक्यं शक्नुयादतिदुर्गमं ॥ ९३ ॥ इदं त्वनुभवन् येषूस्तन्मध्ये च स्थितानपि । अश्रद्धान्कांश्चिदेकं च शठमप्ये

तद्ब्रवीत् ॥ ९४ ॥ श्रीयेषूरुवाच ॥ किमेतद्वचनं शिष्या युष्मान् विस्मापयत्यहो । तथावस्त्रंसयति
च प्राक्स्थितेः सुस्थितानपि ॥ ९५ ॥ पूर्व्वस्थाने त्वपिस्वीय आरोहन् मानुषात्मजः । युष्माभि
र्यदि दृष्टःस्यात्तदा किं वक्ष्यथाविदः ॥ ९६ ॥ यस्तु जीवयितुं शक्त आत्मा विज्ञेय एव सः । अतो
ऽत्र स्थूलमांसस्य फलं नास्त्यपि किंचन ॥ ९७ ॥ यास्तु वो वच्म्यहं कैश्चिदप्रतीता अपि ध्रुवं ।
ता एव वाच आत्मानं वित्त जीवनमेव च ॥ ९८ ॥ तस्माद्धेतोः पुराप्युक्तं मया युष्मान् प्रति १६१
स्फुटं । मां न कोऽपि क्षमो ऽभ्येतुं विना दानेन मत्पितुः ॥ ९९ ॥ गुरुरुवाच ॥ आकर्ण्यैतदितः
शिष्या बहवो ऽपि पराङ्मुखाः । भूत्वा तेन समं गन्तुं नैच्छन्कठिनवादिना ॥१००॥ अतोऽपि
प्रस्तरादीन् सो ऽभ्यूचे शिष्यगणाद्वृतान् । यूयमप्यवगन्तुं किं तथा मत्तः समिच्छथ ॥ १०१ ॥
इति पृष्टस्तदोवाच सीमोनः कं प्रति प्रभो । अथेयाम त्वयि ह्येवानन्तजीवनवाक् स्थिता ॥

१०२॥ त्वमेव पुण्यरूपोऽसीशेन संस्थापितो भुवि । इति विश्वसिमः सम्यग्वयं विद्म च निश्चयं ॥१०३॥ इदं द्वादशशिष्यार्थमाकर्ण्य प्रस्तरोदितं । स्थिरविश्वासवाक्यं तांस्तदा प्रत्यब्रवीत्प्रभुः ॥ १०४ ॥ श्रोयेषूरुवाच ॥ यूयं द्वादशसंख्याः किं न मयाग्रे विशेषिताः । युष्मन्मध्ये तु कोऽप्यत्रास्त्यभिशापिस्वरूपकः ॥ १०५ ॥ शिष्य उवाच ॥ इङ्गितः प्रभुणा कोऽसावभिशापिस्वरूपकः । शठो द्वादशमध्येऽपि स्थितः शिष्यगणाद्वृतः ॥१०६॥ गुरुरुवाच ॥ इष्कार्य्योत्यभिधो यः स्वं यहूदो घातुकारिषु । गुरुं समर्पयेत्पश्चादभिशापी स इङ्गितः ॥ १०७ ॥ १६२
आदितो हि प्रभुर्विज्ञः शिष्यव्यूहान्तरे खलु । हृन्द्यविश्वासिनां जज्ञेऽमुष्य चापि विशेषतः ॥ १०८ ॥ महापातककर्म्मैतन्मोक्तृमाहात्म्यवर्णने । परे चेदिच्छसि श्रोतुं कथयिष्यामि विस्तरात् ॥१०९॥ किंतु पित्राभिषिक्तस्य मोक्तुर्याः प्रथमाः क्रियाः । संस्कारश्च परीक्षा

च गालील्येषु च भासनं ॥ ११० ॥ तथा द्वादशशिष्याणां गुरुदुष्कारकाद्विना । यहूदात्
सन्नमानां वै सर्वतो वरणं परं ॥ १११ ॥ आदिमा उपदेशश्च व्यक्ताव्यक्तार्थकास्तथा । अग्रगस्य
च संस्कर्त्तुश्चरित्रं मरणावधि ॥ ११२ ॥ नान्यशेषाणि शिष्यैतर्ह्युपदेशार्थमेव ते । पुत्राभि
षेकवाक्यानि विज्ञुक्तानि स्फुटं मया ॥ ११३ ॥ शिष्य उवाच ॥ एतत्पूर्व्वोपदेशेषु त्वत्प्रसा
दोदितेष्विह । व्यक्ताव्यक्तार्थवाचो वै मयापि विदिता गुरो ॥ ११४ ॥ विशेषाच्चरमं यत्तु १६३
संश्रुतं श्रीप्रभोर्वचः । अवतीर्णान्नविषयं गुढार्थमति विद्यते ॥ ११५ ॥ नत्वतो ऽपि गलीलीयाः
शिष्या इव पराङ्मुखः । अहं स्यां पुण्यरूपस्येशसूनोः श्रवणाद्गिरां ॥ ११६ ॥ किंतु ता
निखिलाः श्रोतुमवशिष्टास्तथा गुरो । इच्छामि स्थिरविश्वासप्रस्तरोक्त्यनुसारतः ॥ ११७ ।
कमन्यं प्रति गच्छेयं मुमुक्षुर्मोचकाद्विना । ऐशाद्यस्मिन् किलैकस्मिन् नित्यजीवनवाक्

स्थिता ॥ ११८ ॥ इति श्रीखृष्टसंगीतायां पुत्राभिषेकपर्व्वणि (मोसिपंचशास्त्रान्मत्थायस्य चतुर्द्दश सर्गाद्योहन्निमार्कयोः षष्ठसर्गाल्लूकस्य नवमसर्गाच्चोद्धृतो ) ऽनन्तजीवनान्नं नाम त्रयोविंशो १६४ ऽध्यायः ॥ समाप्तं चेदं त्रिसप्तत्यधिकशतद्वयाधिकसहस्रश्लोकात्मकं पुत्राभिषेकनामकं द्वितीयं पर्व्व ॥

# अशुद्धपत्रं

| पत्रे | पङ्क्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | ९ | खृष्टसंस्कारात् | खृष्टसंस्कारं |
| २ | २ | संतस्थौ | संतस्थे |
| — | ६ | संस्थास्यति | च स्थास्यति |
| ५ | १ | सस्कृतिं | संस्कृतिं |
| — | २ | धर्म्मिणश्चापि | धर्म्मिणश्चापि |
| — | ९ | थार्य्ये,तिपप्रच्छ | थार्य्येति पप्रच्छ |
| ६ | ६ | नव लान्न | न बलान्न |
| ११ | — | निर्णिती | निर्णीतो |
| — | ७ | ईशपुत्तांश्च | ईशपुत्रांश्च |
| १२ | — | च्चोद्धृतः | च्चोद्धृत |
| — | ८ | यद्दानितीरतः | यर्द्दानितीरतः |
| १४ | २ | स्वमुर्द्धघ्नी | स्वमूर्द्धघ्नी |
| — | ७ | ईति | इति |
| १७ | ५ | ६८ | ३८ |
| — | ९ | योनि नः | योनिनिः |
| १८ | ७ | भवतः | भवन्तं |
| २० | — | नत्वाद्रितः | नत्वादितः |

| पत्र | पंक्ती | अशुद्धं | शुद्धं |
| --- | --- | --- | --- |
| २१ | ६ | खृष्ठ | खृष्ट |
| — | ७ | चिक्रमवन्नरं | विक्रमवन्नरं |
| — | ९ | आलयं तव | आलयस्तव |
| २२ | १ | पश्यत | पश्यतं |
| २३ | ५ | तच्छुत्वा | तच्छ्रुत्वा |
| २४ | ४ | पुर्व्वं | पूर्व्वं |
| २८ | ६ | श्रीयेषूरूवाच | श्रीयेषूरुवाच |
| — | ८ | ३ | १३ |
| ३१ | ५ | ःद्युत | ःद्भुत |
| ३२ | — | शक्नुयात् | शक्नुयात् |

श्रीखृष्टसंगीता

सत्पालकचरित्रपर्व

# CHRISTA-SANGÍTÁ,

OR THE

SACRED HISTORY

OF

OUR LORD JESUS CHRIST,

*IN SANSCRIT VERSE.*

BOOK III.

THE LATER MINISTRY.

CALCUTTA:

BISHOP'S COLLEGE PRESS.

1838.

अशुद्धपत्रं

| पत्रे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| २ | ४ | नैञ्छुद्यो | नैच्छुद्यो |
| ७० | ७ | यृष्मान | युष्मान् |
| ९३ | ७ | हैरद्यो | हैरोद्यो |
| १३६ | ७ | येषूरमूत् | येषूरभूत् |
| १३६ | ९ | प्रागदृषि | प्रागदृष्टि |

श्रीपित्रे पुत्रायच
मात्मभूमौ । पिता
कृत्यै निजदेशसर्व्वपु
निधानं ॥२॥ भूता
कर्म्मिकमुयं सूनुं महे
मेव मर्त्याः । सु
लास्तु नम्रमपीह सं
सुयत्नात् ॥५॥ त
[illegible]तानां स्वर्गावती

यं सद्राजवंशोद्भव
यः ॥१॥ विश्वोप
मांशात्मतेजःकरुणा
। सर्व्वोपसर्गान्त
गुरुं प्रकाशात्मक
ईशात्मकं यं सर
नशामयन्तः सततं
। सुतृप्तये धर्म्मबु
पौघभारार्त्तविराम

र्त्तनं । अधीनवातोदकमार्य्ययेषूख्रृष्टं प्रभुं भूरि नमस्करोमि ॥७॥ तदुत्पत्त्यभिषेकौ ते
पूर्व्वं शिष्योदितौ मया । अथावशिष्टवाक्यानां किं प्रवाच्यं नु सांप्रतं ॥८॥ शिष्य उवाच ॥
न्यूहान्नदानतः पश्चाद्यद्भून्मरणावधि । सत्पालकचरित्रं मे गुरो तत् कृपया वद ॥९॥ अभि
षिक्तो महेशेन नृकार्य्यं त्वभिषेचनं । नैञ्छ्यो दाविदुत्पन्नो राजेत्युक्तो यहूदिनां ॥१०॥
यो गलीलाधिपादेवं दिधीर्षुर्न्यूहतोऽपि च । अन्तर्धाय ततो, कामः प्रार्थनार्थे वनं गतः ॥
११॥ स कथं प्रभुराचार्य्य तत्परे शान्तमानसः । जीवनान्नप्रदानस्याव्यक्तवाचमपूर
यत् ॥१२॥ गुरुरुवाच ॥ शेष एव चरित्रस्य ज्ञेयं तद्वाक्यपूरणं । मध्ये यत्त्वभवच्छिष्या
धुना वक्ष्यामि विस्तरात् ॥१३॥ आश्चर्य्यकर्म्मणस्तस्मात्परे गालील्यनीवृति । हेरोद्येऽपि
स्थिते तत्र बभ्रामैव महाप्रभुः ॥१४॥ नहि तत्काल इच्छत्स देशे यातुं यहूदिनां । यतो

चेत्तञ्जिघांसुत्वं मन्दिरे प्राङ् निदर्शितं ॥१५॥ तत्रेष्यंस्तु प्रभुः पश्चात् कथयिष्ये यथाऽचिरात् ।
मृतिप्रस्तुतये तत्र प्राग्दूतान्नोन्नुमैहत ॥१६॥ यथा पूर्वं च गालील्यपुरग्रामेषु भूरिषु ।
प्रेष्टा द्वादशसंख्यास्ते शिष्यास्तस्याज्ञयाव्रजन् ॥१७॥ तथेदानीं यहूदीयपूर्ग्रामेष्वीरिता नृणां ।
सप्ततिर्यत्र यत्रैव स गामी दक्षिणे पथि ॥१८॥ तान् स्वशिष्यगणाद्वृत्वा सर्वान्तर्वित्
प्रभुस्तदा । द्वौ द्वौ कृत्वा च गतये वाक्यमेतदुपादिशत् ॥१९॥ श्रीयेषूरुवाच ॥ बहुलं पक्व ३
शस्यं वै किन्त्वल्पे छेदकाः स्थिताः । अतोऽन्यांश्छेदकान्नोतुं शस्याध्यक्षं नु याचत ॥२०॥
यात यूयं मया नुन्ना वृकमध्य इवावयः । रूप्याधारैश्च कोषैश्च विहीना अनुपानहः ॥२१॥
नमस्कुरुत मा कंचित् पदव्यां किंतु यद्गृहं । विशेतादौ तदा ब्रूतास्मिन् गृहे सन्धिरस्त्वि
ति ॥२२॥ सन्धिपुत्रस्तु चेत्तस्मिंस्तिष्ठेदाशीस्तदैव वः । वसेत्तत्र न तु स्याच्चेत् पुनर्वः प्रति

क्ष्यति ॥२३॥ तिष्ठतास्मिन् गृहे यच्च दत्तं तत्पिबतात्त च । वेतनार्हो हि भृत्योऽस्ति मा
यातानेकसद्मसु ॥२४॥ यत्पुरे त्वनुगृह्णीध्वमार्तांस्तत्स्थांश्चिकित्सत । दत्तं चात्ताथ तान्ब्रूत
राज्यमीशस्य वोऽन्तिके ॥२५॥ पुरे यस्मिन्प्रविष्टास्तु नानुगृह्णीध्वमन्तरे । तस्य रथ्यास्वभि
द्रुत्य तत्रैवोच्चरत स्फुटं ॥२६॥ अहो नः पत्सु यल्लग्नं नगरीत्थं रजोऽपि वः । तन्मथ्नीमः
किंतु वित्त राज्यमीशस्य सन्निधौ ॥२७॥ विचाराहे पुरस्तस्या दण्डाल्लघुतरो भवेत् । ४
दुष्टाया अपि सूदूम्या दण्ड इत्येव वच्मि वः ॥२८॥ युष्माकं यः शृणोत्युक्तिं स तथैव
शृणोति मे । यो वोऽवमन्यते चापि स मामेवावमन्यते ॥२९॥ किंतु यो यो जगत्यस्मिन्न
वमन्येत मा नरः । मम प्रेरयितारं खल्ववमन्यत एव सः ॥३०॥ गुरुरुवाच ॥ इम लब्धोप
देशं ते नराः सप्ततिसंख्यकाः । दिश्यवाच्यां द्विशो भूत्वा ख्रिष्टाज्ञापूर्तये ययुः ॥३१॥ स तु

संस्थो गलीलायां प्रभुर्द्वादशभिः सह । प्रस्तराद्यैस्ततो गन्तुमुदीच्यां समकल्पयत् ॥३२॥
इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (लूकस्य दशमसर्गाद्योहन्नेः सप्तमसर्गाच्चोद्धृतः) परिचारकगणनिर्याणं नाम प्रथमोऽध्यायः ॥

गुरूरुवाच॥ तत्कालेऽध्यापकाः केचित् फरिष्याश्चापि पण्डिताः। यिरूशलेमान्नगराद्गलीलायां समागताः ॥१॥ पारम्पर्य्योपदेशज्ञाः प्रत्नतन्त्रावलम्बिनः । अक्षालितकरैरन्नं न भुञ्जानाः कदाचन ॥२॥ हट्टागतिकृतस्नानाः पित्राद्युक्त्यनुसारतः । पानभोजनपैतल्यपात्रपर्य्यङ्क- 5
मार्जिनः ॥३॥ इत्यादिधर्म्मिणस्ते वै भुञ्जानान्कांश्चन प्रभोः । शिष्यानालोच्य गच्छन्तो येषूं प्रत्यब्रुवन्निदं ॥४॥ फरीष्या ऊचुः॥ तव शिष्याः किमर्थेऽत्र पूर्व्वेषां निर्म्मलात्मनां । उपदेशं विमन्यन्तेऽदन्तोऽक्षालितपाणयः ॥५॥ गुरूरुवाच॥ इति पृष्टः प्रभुर्विज्ञस्तैः स्व

धर्म्मसमादरैः । फरीष्याध्यापकैरेतद्वचस्तान्प्रत्यवोचत ॥६॥ श्रीयेषूरुवाच ॥ किमर्थ
मपि यूयं वै शास्त्रमीशस्य निर्म्मलं । पारम्पर्य्योपदेशैः स्वैर्निराकुरुथ दुर्धियः ॥७॥ आ
द्रियस्व हि सर्व्वत्र त्वं मातापितराविति । उवाचेशसमादिष्टो मोसिः सीनायपर्व्वते ॥८॥
तथा यः पितरं मर्त्यो मातरं वावमन्यते । म्रियतां स इति प्रोच ईशशास्त्रप्रवाच्यसौ ॥९॥
यूयं त्वध्यापकाः ख्याता एतत्सद्वाक्यलङ्घनं । नवकल्पितधर्म्मेण स्वेन कारयथ ध्रुवं ॥ ६
१०॥ यद्यपि स्याद्धि मे द्रव्यं पितस्त्वदुपकारकं । तथापीशबलिर्भूतं तदग्राह्यमत
स्त्वया ॥११॥ इति ब्रूयात्कुपुत्रश्चेत् तदा यूयमदोषिणं । पितृपालनधर्म्माच्च किमुक्तं ब्रूथ तं
किल ॥१२॥ रे यूयं निजविध्यर्थावमतेशाज्ञकास्तथा । धर्म्मलिङ्गिन उद्दिष्टमिषायोक्त्या
विवर्णिताः ॥१३॥ स्वजिह्वाभिरेते ऽत्र मामाश्रयन्ते हृदेषां तु मत्तो ऽतिदूरे ऽपि संस्थं । मृषा

त्वर्ज्जयन्तीशशास्त्रस्थले हि नरैः कल्पितांस्ते विधीन् शिक्षयन्ति ॥१४॥ गुरुरुवाच ॥ इति
प्रत्नगिरा येषूरीशाविष्टप्रवाचिनः । वर्णयित्वा मृषाधर्म्ममीषां पात्रमार्ज्जिनां ॥१५॥ तत्स
मीपस्थितान् व्यूहान् समाहूय ततः स्फुटं । एतत्तानब्रवीद्वाक्यं सत्यधर्म्मप्रकाशकं ॥१६॥
श्रीयेषूरुवाच ॥ सुश्रूयतां वै परिबुध्यतां च यद्यत्प्रविष्टं वदने नरो नो । तेनापवित्रीक्रियते
वरं तु तेनैव यद्यद्वदनादपैति ॥१७॥ गुरुरुवाच ॥ इत्युक्तवन्तमभ्यूचुः शिष्यास्तं किं त्वया ७
गुरो । न ज्ञाता रुट् फरीष्याणां त्वद्वाक्यश्रवणादिति ॥१८॥ श्रीयेषूरुवाच ॥ यस्य शाकस्य
नोवाप वीजं स्वःस्थः पिता मम । कोऽप्यन्यस्तु तदेवान्तेऽवश्यमुन्मूलितं भवेत् ॥१९॥ अलं
तैरन्धपान्थानामन्धैरप्यध्वदर्शकैः । अन्धस्त्वन्धाध्वदर्शी स्यादुभौ गर्त्ते पतिष्यतः ॥२०॥ गुरुरु
वाच ॥ इत्युक्त्वा व्यूहसाक्षात्स सशिष्यः प्राविशद्गृहं । ततो द्वादशशिष्याग्र्योऽपृच्छत्सीमोन एव तं

॥२१॥ प्रस्तर उवाच ॥ सुश्रोतव्यमदो वाक्यं बोधनीयं च यत्नतः । अव्यक्तमपि बोधायास्माकं
व्याख्याहि हे प्रभो ॥२२॥ श्रीयेषूरुवाच ॥ तथा किमधुनाप्यज्ञा यूयं यद्वि मुखोदरे । वाह्या
द्विष्ठा ननो गर्भे प्रयाति न तु चेतसि ॥२३॥ तत्कथं मलिनीकुर्य्यान्नरं गर्भोऽखिलानि हि । पुना
त्यन्नानि गर्त्ते तु वहिःक्षिपति तन्मलं ॥२४॥ अपैति वदनाद्यत्तु हृदयोत्थितमेव तत् । तेना
पूताकृतो मर्त्य इदं यूयं न वित्थ किं ॥२५॥ हृदयोत्थाः कुचिन्ता हि व्यभिचारादिका ८
वधाः । चौर्य्याण्यधिकलोभाश्च शाठ्यानि छलनान्यपि ॥२६॥ कामुकत्वानि हिंसाश्च मिथ्या
साक्ष्याणि चैव हि । परमेशापवादाश्च प्रमादा अप्यहङ्क्रियाः ॥२७॥ सर्वा अभ्यन्तरादेता
निःसृता कल्वरं नरं । कुर्वन्ति नत्वधौताभ्यां पाणिभ्यामेव भोजनं ॥२८॥ गुरुरुवाच ॥
इत्येतत्समुपादिश्य प्रभुर्द्वादशभिः सह । सीमोनाद्यैर्गलीलाया उत्तरामचलद्दिशं ॥२९॥ इति

श्रीख्रिष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (मोशिपंचशास्त्राद् इषायभव्यवाक्यानामूनत्रिंशसर्गा
न्मत्थायस्य पंचदशसर्गान्मार्कस्य सप्तमसर्गाच्चोद्धृतो) वाह्यधर्म्मनिरसनं नाम द्वितीयोऽध्यायः॥

शिष्य उवाच ॥ तस्यां नूतनसृतौ याते सत्यधर्म्मोपदेष्टरि । के देशा जातयः का वा सत्
प्रकाशाश्रिता गुरो ॥१॥ गुरुरुवाच ॥ पुण्यभूमेर्यहूद्यानामुदीच्यां सीम्नि संस्थितः ॥ तूरशी
दोनयोर्देशः पुरा प्रख्यातयोः पुरोः ॥२॥ तस्मिन्निवसतां नृणां बहुदेवार्च्चिनां तदा । ९
अन्तिके समुपस्थाय स्वादृश्यत्वचिकीर्षया ॥३॥ कस्मिंश्चित्प्राविशद्गेहे किंतु मोक्तेति की
र्त्तितः । गोपनेच्छुरपि स्थातुं नाशक्नोत्सर्व्वतो रहः ॥४॥ फैणीक्यान्वयजा स्त्री हि सूरराष्ट्र
निवासिनी । काप्यपूतेन भूतेन यस्या बाला प्रधर्षिता ॥५॥ सा प्रभोः कीर्त्तिमाकर्ण्य
गालील्येभ्यः सुविस्तृतां । गृहं प्राप्यैतदुच्चैस्तं वचोऽवादीद्बहिःस्थिता ॥६॥ विदेशिन्युवाच ॥

करुणां कुरु दीनायै मह्यं हे दाविदुद्भव । प्रभो मद्दुहिता यस्माद्दुष्टभूतातिपीडिता ॥७॥
गुरुरुवाच ॥ इत्युक्तो मुहुरप्यार्य्यो घोषन्तीं दुहितुः कृते । दीनां प्रतिवचः किंचिन्नाब्रवी
देव तां प्रभुः ॥८॥ आश्चर्य्यमपि मौनं तद्दयालोरपि मोचिनः । ज्ञात्वा शिष्या उपेत्यैतद
ब्रुवन्नतिविस्मिताः ॥९॥ श्रीयेषुशिष्या ऊचुः । कृपयास्यै वरं दत्त्वापैतुमाज्ञापय प्रभो । यतः
सा चलतोऽप्यस्मान् घोषन्त्यन्वेति सर्व्वथा ॥१०॥ गुरुरुवाच ॥ इति शिष्योदितेऽतोऽपि न किं १०
चित्त्वीमम्ं प्रति । ब्रुवन् येषूरिमान्वाक्यमेतत्प्रत्यब्रवीत्तदा ॥११॥ श्रीयेषूरुवाच ॥ इस्र
येलोद्भवानेवावीन् भ्रान्तान्नतु कांश्चन । अन्यजानहमीशेन पातुं संप्रेरितोऽधुना ॥१२॥
गुरुरुवाच ॥ एतद्वाचा निरुद्धास्ते न किमप्यूचिरेऽधिकं । प्राप्नुवन्तः पुरा ह्याज्ञां तादृशीं
नुदतः प्रभोः ॥१३॥ नत्वसौ स्त्री निरुद्धातः प्रभुपादानता तदा । उवाचोच्चैः पुनर्मह्यं करुणा

भार्य्यं कुर्व्विति ॥१४॥ ततः स प्रणतां नारीं कन्यार्थे दुःखविप्लुतां । चिरमौनं विहायान्ते रूक्ष
मेतद्वचो ऽब्रवीत् ॥१५॥ श्रीयेषूरुवाच ॥ आदौ तृप्यन्तु भक्ष्येण शिशवो ऽन्नं हि यत्किल । बालेभ्यः
प्रस्तुतं तद्वै न श्वभ्यो दातुमर्हति ॥१६॥ गुरुरुवाच ॥ इदं निष्ठुरमाकर्ण्य सा निजप्रार्थनां प्रति ।
प्रभूक्तं न ततो ऽप्याशां परित्यज्याब्रवीत्पुनः ॥१७॥ विदेशिन्युवाच ॥ सत्यमेतत्प्रभो किंतु
स्वामिना यन्निरस्यते । शिशुभुक्तावशिष्टं तत्कुक्कुरा अपि भुञ्जते ॥१८॥ गुरुरुवाच ॥ इत्थं ११
श्रद्धायुतं तस्या नम्रत्वमनुभूय सः । तदा निर्दयसादृश्यं संविहायाब्रवीन्मुदा ॥१९॥
श्रीयेषूरुवाच ॥ महांस्ते नारि विश्वास एतद्वाक्यप्रबोधितः । कुशलं याहि यद्वच्च त्वदभीष्टं
तथास्तु ते ॥२०॥ गुरुरुवाच ॥ इदमुक्तं वरं श्रुत्वा सश्रद्धासौ विदेशिनी । गृहे दुहितरं
प्राप सुस्थां भूतविवर्जितां ॥२१॥ शिष्य उवाच ॥ अमुष्याः परदेशिन्याः सत्तमं किल विद्यते ।

अज्ञाविनययोरेव फलप्राप्तिनिदर्शनं ॥२२॥ मनसा तु ममाप्यतेऽद्भुध्यते ऽत्यद्भुतं गुरो । दया
लोः सर्वथा येष्वो निर्दयाकारकोऽन्तरं ॥२३॥ यो ऽन्यवंशभुवे ऽपि प्रागगुल्माधिपतये वरं ।
ददौ समार्य्यजेभ्यश्चामृतमप्युपदेशनं ॥२४॥ यस्यैवोत्पत्तिसमये नत्यर्थं दूरदेशतः । कुन्दु
रादिप्रदातारो ज्योतिज्ञा ईशवोदिताः ॥२५॥ यं तदा प्रजगौ वृद्ध एस्त्रयेल्यो ऽपि मन्दिरे ।
अन्यलोकतमोनुत्त्यै दीपमीशार्पितं भुवि ॥२६॥ स कथं वक्त्यहं नुन्नः स्वजनानेव रक्षितुं । १२
एस्त्रयेल्या हि शिशवः सर्वे ऽन्ये कुक्कुरा इति ॥२७॥ गुरुरुवाच ॥ यो भवेद्दीप आसन्ने
ऽखिलभूमिनिवासिनां । उज्ज्वलिष्यन्निति ज्ञातं सिम्योनेन तथा बुधैः ॥२८॥ तस्य स्वजन
मात्रेषु भूतं पूर्वावभासनं । न तु सर्वत्र हे शिष्य मा त्वां विस्मापयत्विदं ॥२९॥ नह्येतत्काल
आयातं भिन्नदिग्वैरनाशिनः । प्रभुयज्ञात् समुत्थेयं तेनोक्तं पूर्णभासनं ॥३०॥ समभ्येति

तु कालोऽसावित्युवाच समार्य्यकां । तद्भिन्नवंशभेदान्तकरो भावी महागुरुः ॥३१॥ यद्धृदि
मध्यतस्त्वेति मुक्तिरित्यब्रवीत्स तां । ततस्तेष्वेव स भ्रान्तावीनन्वैष्यद्भुवि स्थितः ॥३२॥
द्वादशापि वराः शिष्या ये तन्माहात्म्यपूरणं । सर्व्वदिक्षु परे नोद्याः प्रवक्तुं विश्वमुक्तये ॥
३३॥ तान्स पूर्व्वं कुचिन्मार्गे न्यषेधीदन्यगोत्रिणां । यातुं तथा समार्य्याणां मोसिशास्त्रभृता
मपि ॥३४॥ गुल्मेशोऽपि च रौम्योऽसौ यद्धृदिहितमानसः । तञ्ज्येष्ठान्प्रैरयद्येषूं प्रति स्ववर १३
लब्धये ॥३५॥ शिष्य उवाच ॥ स्मराम्येतद्गुरो किंतु तच्चेत्स्यात् किंकृते प्रभुः । तदान्योर्व्यै
न्तरेऽगच्छत् स्वगुप्तोच्छुरमित्रवत् ॥३६॥ गुरुरुवाच ॥ नाशक्नोत्स रहःस्थातुं तथावेदपि
सर्व्ववित् । एकां विश्वासिनीं भव्यां फलप्राप्तीमितोऽपि च ॥३७॥ ततो ह्यखिलमोक्ता सो
ऽन्यार्च्चिनां नीवृति स्थितः । कनानानामपि भ्रष्टक्रियादुर्यशसां पुरा ॥३८॥ यत्पितॄन्दक्षि

णाद्देशादीशाज्ञातोऽब्रहोद्भवाः । येष्वा नूनभुवा नीता वहिश्चक्रुः समन्ततः ॥३९॥ तन्म
ध्येऽपि वरो येषूर्द्दुष्टहृच्छुद्धिकारिणः । दिग्गुतुः स्वप्रसादस्यार्हं दृष्टान्तमदित्सत ॥४०॥
अद्वितीयं त्विमं कृत्वाविरतप्रार्थनोत्थितं । भूमिमन्यार्च्चिनां त्यक्त्वा दक्षिणस्यामगात्पुनः ॥
४१॥ गालील्यस्य ह्रदस्यैव पूर्व्वदिग्रोधसि प्रभुः । दशपुर्य्याख्यदेशस्य सीमानं समुपस्थितः॥
४२॥ तदा तद्वासिजनता मोचकाग्रे समानयत् । स्वभावकद्वदं कंचिन्नच्चिकित्सार्थिनो १४
भृशं ॥४३॥ पृथक्तमपनीयाथ सोऽङ्गुलीस्तच्छ्रवोऽन्तरे । निदधेऽथास्पृशत्तस्य जिह्वां स्वमुख
विन्दुना ॥४४॥ तदोर्द्ध्वमवलोक्यैव निःश्वासैश्चेश्वरं प्रति । निर्घोषं प्रार्थ्य जिह्वा ते मुच्य
तामित्युदैरयत् ॥४५॥ तत्क्षणेऽपि श्रुतिस्तस्यास्फुरन्मुक्तं तथैव च । जिह्वाया बन्धनं
सम्यग्वक्तुं चारभत स्फुटं ॥४६॥ तत्कद्वदसमानेतॄन्निषिषेध प्रभुस्तदा । इमां ज्ञापयितुं

सम्यक्क्रियां कंचिदपि ध्रुवं ॥४७॥ किंतु यावन्न्यषेधीत्स तांस्तावदधिकं किल । ते तच्चित्र
क्रियावार्त्तां स्वस्यां व्यस्तारयन्भुवि ॥४८॥ ततः सन्मोक्तुरासन्ने गिरिसंस्थस्य दुर्बलान् । अन्या
नपि बहून्यत्नादानयन् भूमिवासिनः ॥४९॥ तान्सर्व्वांश्चापि खञ्जान्धमूकव्यङ्गादिकानिह ।
एकैकं स्वपदानीतान्सम्यक् सुस्थीचकार सः ॥५०॥ ततो भूवासिनां व्यूहा व्यङ्गानालोक्य सु
स्थितान् । पश्यतोऽन्धांस्तथा खञ्जांश्चरतो वदतो जडान् ॥५१॥ अत्यन्तं विस्मयं गत्वा १५
सत्प्रशंसाभिरीश्वरं । इस्रयेलमहानाथं समादद्रिर उच्चकैः ॥५२॥ दशपुरीवासिन ऊचुः ॥
साधु सर्व्वं चकारेहास्माकं मोक्ता महानयं । श्रुतिवाग्गतिदृष्ट्यादींस्तद्धीनेष्वादधौ ध्रुवं ॥
५३॥ गुरुरुवाच ॥ इति व्यूहैः स्तुतो येषूर्बहुलैर्दिवसत्रयं । तत्कालान्ते सति स्वीयान् शिष्या
नभ्यब्रवीदिदं ॥५४॥ श्रीयेषूरुवाच ॥ त्रिदिनान्यप्यमी सर्व्वे मत्समीप इह स्थिताः । न

किंचिद्भुक्तवन्तोऽपि तस्मात्तेषामहं दये ॥५५॥ यदि प्रस्थापयेयं तानभुक्तान्स्वगृहं प्रति ।
क्लमिष्यन्ति सृतौ दूराद्ध्यनेकेऽत्र समागताः ॥५६॥ श्रीयेषूशिष्या ऊचुः ॥ कुतोऽस्माभिरियद्व्यूह
भोजनाय किल प्रभो । प्राप्स्यन्ते पिष्टकादीनि प्रान्तरे संस्थितैरपि ॥५७॥ गुरुरुवाच ॥
इत्युक्तो विस्मरद्भिस्तैः प्राग्व्यूहाद्भुतभोजनं । तानपृच्छत्कियद्भक्ष्यं विद्यते युष्मदन्तिके ॥५८॥
इति पृष्टास्ततः शिष्याः पिष्टकान्यत्र सप्त नः । वर्त्तन्ते क्षुद्रमीनाश्चाप्यल्पा इत्युत्तरं ददुः ॥५९॥ १६
ततः सर्व्वं प्रभुर्व्यूहं भूमौ स्वाग्रे समासयत् । अमून्पूपांश्च मीनांश्च कोषादानाययत्तदा ॥
६०॥ स्तुतिवाचा निवेद्यैतदीश्वराय विभज्य च । शिष्येभ्योऽदादिमे चापि व्यूहेभ्यः प्रददु
स्तथा ॥६१॥ सर्व्वे चादन्नतो व्यूहाः सुतृप्ताश्चाभवन्खलु । तैश्चावशिष्टखण्डेभ्यः पूर्णाः सप्तैव
उल्लकाः ॥६२॥ पोषितास्तु नरा ये वै बभूवुः स्त्रीशिशून् विना । चतुःसहस्रसंख्यास्ते येष्वा

प्रस्थापितास्तदा ॥६३॥ व्यूहं प्रस्थाप्य नावं स आरोहच्छिष्यसंवृतः । दाल्मनूथामगच्छच्च
कूलस्थां मग्दलान्तिके ॥६४॥ शिष्य उवाच ॥ कृते प्राग्वत्पुनर्वीरमद्भुते भोज्यवर्द्धने । अ
धिकां किं ततः श्रद्धां चक्रुस्तत्तीरवासिनः ॥६५॥ गुरुरुवाच ॥ मग्दलस्था बुधाः केचिद्यहूयांसः
फरोष्यकाः । कतिचित्त्वपि शादूक्याः परकालविरोधिनः ॥६६॥ ते यशः सर्व्वतः श्रुत्वा
प्रभोराश्चर्य्यकारिणः । तमभ्येत्य परीक्षार्थं वच एतत्समब्रुवन् ॥६७॥ फरोष्यादय ऊचुः ॥ १७
यथा मोसिः पितृभ्यो नस्तथास्मभ्यं महागुरो । त्वं निजैश्वर्य्यसिद्ध्यर्थं स्वर्गाद्दर्शय लक्षणं ॥
६८॥ गुरुरुवाच ॥ इत्येषां वचनं श्रुत्वा दर्शितात्यन्तलक्षणः । सर्व्वमानसविज्ञस्तान्प्रत्यवादी
दिदं वचः ॥६९॥ शीयिषूरुवाच ॥ सन्ध्यायां रक्तमाकाशं दृष्ट्वा श्वो भविता शुभं । इति
यूयं ध्रुवं ब्रूथानुमिताकाशलक्षणाः ॥७०॥ प्रातराकाशमारक्तं मेघाच्छन्नं च वीक्ष्य तु ।

अद्यावश्यं भवेद्वात्या चण्डेति ब्रूथ सर्वदा ॥७१॥ रे लिङ्गिनो वियद्रीतिं विज्ञातुं किल
शक्नुथ । किंतु चिह्नानि कालानां विबोद्धुं न क्षमाः कथं ॥७२॥ लोकोऽतिदुष्टो व्यभिचारक
श्च चिह्नं समन्विच्छति नूनमेषः । योनस्य चिह्नात्त्विह भव्यवक्तुर्विना न किंचित्खलु देयम
स्मै ॥७३॥ गुरुरुवाच ॥ इति प्रोच्य सनिःश्वासं तदश्रद्धातिदुःखितः । तान्विहाय पुन
र्नावमारुरोह प्रभुस्तदा ॥७४॥ समारुह्य च तच्छिष्यास्त्वरयान्नं विसस्मरुः । आनेतुं १८
मत एवैकमासीत्तन्नावि पिष्टकं ॥७५॥ तर्तुकामस्तटं हित्वा ह्रदमध्यस्थितः प्रभुः । शिष्यान्
सहस्थितान्नावि वाक्यमेतदवोचत ॥७६॥ श्रीयेषूरुवाच ॥ सशादूक्यफरीष्याणां रसात्
स्फोतिकरात्खलु । हेरोद्यानां रसाच्चापि सावधानाः स्त यत्नतः ॥७७॥ गुरुरुवाच ॥ इत्य
व्यक्तं वचः शिष्या बुध्यमाना न किंचन । सुविचार्य्य तदर्थं वै वाक्यमूचुः परस्परं ॥७८॥

श्रीयेषूशिष्या ऊचुः ॥ अवश्यं नो रसस्फीतपिष्टकानामभावतः । तदुक्तं प्रभुणास्माकं
विस्मृतिं परिनिन्दता ॥७९॥ गुरुरुवाच ॥ सुविदंस्तु प्रभुर्विज्ञस्तेषां चेतांस्यबोधिनां ।
संवादांश्चाथ तानेतद्वचनं समभाषत ॥८०॥ श्रीयेषूरुवाच ॥ अल्पश्रद्धाः किमर्थं रे विचार
यथ दुर्विदः । भाषमाणास्तथान्योन्यं पिष्टकाभावदुःखिताः ॥८१॥ किं नेदानीमपि ज्ञानं
न वा सद्बुद्धिरस्ति वः । सनेत्रा अपि नेक्षध्वे न वा शृणुथ कर्णिनः ॥८२॥ दृढं स्तब्धहृदो यूयं वि १९
द्ध्वे मद्धिताः कथं । यद्भूतं वापि वः साक्षात् तन्न स्मरथ किंकृते ॥८३॥ यदापुष्यं नृणां पंच
सहस्रं पंचपिष्टकैः । अपूरयत तच्छेषखण्डैः कत्येव उल्लकान् ॥८४॥ गुरुरुवाच ॥ इति पृष्टाः
सलज्जास्ते उल्लकान् द्वादशेति वै । प्रत्यूचुरथ तान्प्रश्नं प्रभुः पुनरवोचत ॥८५॥ श्रीयेषू
रुवाच ॥ सप्तपूपैर्यदापुष्यं नृसहस्रचतुष्टयं । तदापि शेषखण्डैर्वः पूरिताः कति उल्लकाः ॥

८६॥ गुरुरुवाच ॥ एतन्नूत्नक्रियास्मृत्याब्रुवन्सप्तेति सर्वशः । अथ स्ववचनं तेभ्यः पूरया मास सद्गुरुः ॥८७॥ शिष्येषूरुवाच ॥ अथ कस्मान्न बुध्यध्वे यदाहं स्फायकाद्रसात् । सशादूक्यफरीष्याणां सावधानत्वमादिशं ॥८८॥ तन्मे वाक्यं कथं ज्ञातं युष्माभिः पूपगोचरं । यद्भावे यदभावेऽपि पोषितुं शक्नुयां नरान् ॥८९॥ गुरुरुवाच ॥ इत्यार्य्यगुरुणोक्तं ते शिष्याः संश्रुत्य भर्त्सनं । स्वयमेव ततोऽहार्थं तत्प्रोक्तवचसोऽविदन् ॥९०॥ नह्यौहिकरसात्कस्मात् फरीष्याद्यनुसारिणां । वरं तदुपदेशात्सोऽबोधयत्सावधानतां ॥९१॥ एवमादिश्यमानास्ते नावि स्वगुरुणा सह । परे ह्रदतटं प्राप्य बेथशैद उपस्थिताः ॥९२॥ तद्ग्रामवासिनः कंचिदन्धं येष्वग्र आनयन् । एनमार्य्य चिकित्सार्थं स्पृश त्वमिति वादिनः ॥९३॥ गृहीत्वा तस्य पाणिं स ग्रामान्नीत्वा वहिश्च तं । अस्पृशत्तत्र तन्नेत्रे उभे स्वमुखविन्दुभिः ॥९४॥

ततः किमधुना दृष्टं त्वयेत्यन्धमपृच्छत । प्रत्यूचेऽसौ तु चलतो नरान् पश्यामि वृक्षवत् ॥
१५॥ इत्युक्तः स कराभ्यां तच्चक्षुषी पुनरस्पृशत् । दृष्टिदाता परे चासौ स्फुटं सर्वान् समै
क्षत ॥१६॥ अथोवाच प्रभुर्गेहेऽधुना गच्छाप्तलोचनः । न तु ग्रामे न वा कांश्चित्तद् ब्रूहि
ग्रामवासिनः ॥१७॥ एवं नृणां महामोक्ता स्वसृतौ कीर्त्यनिच्छुकः । शक्तिप्रसादचिह्नानि
सर्वत्र निदधौ भुवि ॥१८॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्वणि (मत्थायस्य पंचदश २१
षोडशसर्गाभ्यां मार्कस्य सप्तमाष्टमसर्गाभ्यां चोद्धृतः) भक्ष्यावशेषो नाम तृतीयोऽध्यायः ॥

गुरुरुवाच ॥ ततस्त्यक्त्वा पुनर्देशं गालील्यं शिष्यसंवृतः । उपतस्थौ महामोक्ता पानिया
स्व्यपुरान्तिके ॥१॥ फिलिप्पो राज्यतुर्य्यांशे स्वीये यं संस्थितं नृपः । हेरोदितनयश्चक्रे
कैशरीयाभिधानकं ॥२॥ तस्य क्षेत्रे चलञ्शिष्यान्स्वीयान्पप्रच्छ वर्त्मनि । मह्यं मानुषपुत्राय

को ऽहमित्युच्यते नरैः ॥३॥ इति पृष्टास्ततः शिष्याः श्रुतवन्तो हि सर्वतः। तत्परिभ्रमणे दीर्घे
नृणां वाचो ऽब्रुवंस्तथा ॥४॥ श्रीयेषूशिष्या ऊचुः ॥ योहनिः स्नापकः प्रेत्य पुनःसंपन्नजीवनः।
त्वमसीति प्रभो कैश्चिदुच्यते भूमिवासिभिः ॥५॥ अलीयस्तु त्वमित्यन्यैर्यिरिमीयस्तु को ऽ
पि वा। प्रत्न ईशप्रवक्तान्यः पुनर्जीवन्निर्तीतरैः ॥६॥ गुरूरुवाच ॥ इति श्रुत्वा नृणां नाना
वचस्तत्प्राग्विदन्नपि। प्रभुर्विज्ञः परीक्षायै तानपृच्छदिदं पुनः ॥७॥ श्रीयेषूरुवाच ॥ मयि २२
नानानरोक्त्या वः साक्षादित्थमुदीरिते। को ऽहमस्मीति युष्माभिर्मच्छिष्या ध्रुवमुच्यते ॥८॥
गुरूरुवाच ॥ इत्युक्ते नरपुत्रेण तान् वरान् द्वादश प्रति। स्वशिष्यानेक एवैतत्सीमोनः प्रत्यु
वाच तं ॥९॥ सीमोन उवाच ॥ ख्रिष्टनामाभिषिक्तो वै प्रादुर्भूतो महीतले। नित्यजीवन
रूपस्य विश्वेशस्य त्वमात्मजः ॥१०॥ गुरूरुवाच ॥ इदं संश्रुत्य तस्यैव स्थिरविश्वासबोधकं।

वाक्यं प्रभुरथैतत्तं महद्भयवचो ऽब्रवीत् ॥११॥ श्रीयिषूरुवाच ॥ सीमोन योनस्य सुत त्वमेव
धन्यो यतः प्रत्ययवाचमेनां । नाबोधयत्त्वां पलरक्तदेहो स्वर्गस्थितस्त्वेव पिता मदीयः ॥
१२॥ त्वं प्रस्तरो ऽसीति त एव भाषे ऽस्मिन् प्रस्तरे चाप्पुरुमण्डलीं स्वां । संस्थापयिष्यामि
दृढामुताहं पातालकद्वारबलैरजेयां ॥१३॥ त्वय्येवाहं निधास्यामि सीमोन प्रस्तराभिध । स्व
र्गीयस्यापि राज्यस्य बन्धमुक्त्यर्थकुञ्चिकाः ॥१४॥ यद्यद्बध्नासि भूमौ च तद्बन्ध्यं स्वर्गमण्डले । २३
यन्मुञ्चसि तथा भूमौ मोक्तव्यं स्वर्ग एव तत् ॥१५॥ गुरुरुवाच ॥ इदमुक्त्वा वृहद्वाक्यं स्वशिष्या
न्निखिलान्प्रभुः । निषिषेध स्वखृष्टत्वं तदा ज्ञापयितुं भुवि ॥१६॥ एतस्मिंश्चापि काले तान्
स्वरहस्यैकवेदिनः । स्वतेजःसंवृतेर्हेतुं वक्तुमारभत स्फुटं ॥१७॥ श्रीयेषूरुवाच ॥ मया यिरू
षलेमं वै गन्तव्यं नरसूनुना । प्राप्तव्यश्चावमानो ऽपि तत्र ज्येष्ठादिवर्गतः ॥१८॥ नृपुत्रः स

हि सभ्येभ्यः श्रेष्ठयज्वभ्य एव च । अध्यापकगणाच्चापि नानादुःखं सहिष्यते ॥१९॥
परामर्शेन तेषां स मृत्युं चापि गमिष्यति । मृत्युतस्तु तृतीये हि पुनरुत्थास्यति ध्रुवं ॥२०॥
गुरुरुवाच ॥ इति भव्यवचः श्रुत्वा प्रतिरुन्धन्नुवाच तं । प्रस्तरो भद्रमेव स्यात्तव नेत्थं भवे
द्विपत् ॥२१॥ इमं तु प्रतिरोधं स्वशिष्यस्याकर्ण्य मोचकः । अप्रसन्न इदं वाक्यं परा
वृत्तोऽभ्युवाच तं ॥२२॥ श्रीयेषूरुवाच ॥ अभिशापिस्वरूप त्वमपेहि मम संमुखात् । पातकारि २४
मतं ते हि नेशोत्थं नरजं तु तत् ॥२३॥ गुरुरुवाच ॥ इत्युक्त्वा सकलान्शिष्यान् स्वीयान्सगूह
कानपि । स्वसमीपे समाहूय वच एतत्ततोऽब्रवीत् ॥२४॥ श्रीयेषूरुवाच ॥ यो योऽनुगन्तु
मिच्छेन्मां स स्वेच्छामपवर्जतु । उत्तोल्यात्मनि शूलं च तथा मां सोऽनुगच्छतु ॥२५॥ यो यः
स्वजीवं परिरक्षितुं हि काङ्क्षेत स स्याद्धतजीव एव । जीवं निरस्येत्तु मदर्थमेवं यो मद्व

चोऽर्थं च पुनः स आप्ता ॥२६॥ नरोऽर्जयेच्चेज्जगदप्यशेषं ततः स्वजीवापचयं तु कुर्य्यात् । कोऽतोऽस्ति लाभोऽस्य तथा कमर्घं स्वजीवलाभाय नरः प्रदद्यात् ॥२७॥ मदर्थं मद्वचोऽर्थं वा यो ह्यस्मिन्व्यभिचारिणां । पापिनां चापि संघाते लज्जां गच्छेत्ततः खलु ॥२८॥ तन्नरार्थं नृपुत्रोऽपि पितृतेजःसमावृतः । पुण्यदूतान्वितश्चापि भवेद्वै लज्जितस्तथा ॥२९॥ स हि स्वपितुरैश्वर्य्ये स्वर्गदूतैर्निजैः सह । आगमिष्यति सर्व्वेभ्यः फलं दातुं यथाक्रियं ॥३०॥ २५
केऽप्यत्रस्था नृपुत्रं स्वैशराज्ये यावदागतं । नेक्षेरन्मृत्युदुःखं नास्वदेरन्निति वच्म्यृतं ॥३१॥ गुरुरुवाच ॥ तथा स स्वपितुः शक्त्या खृष्ट इत्येव संमतः । निजमाहात्म्यविषये व्यक्तास्तान् प्रावदद्गिरः ॥३२॥ शिष्य उवाच ॥ गुरो तत्सम्यगव्यक्तं सीमोनादिभ्य ईरितं । संयुतं दुःखराज्याभ्यां भविष्यद्वचनं प्रभोः ॥३३॥ प्रस्तरेण तु राजत्ववक्ता दुःखा

सहिष्णुना । अपि शेषैश्च शिष्यैस्तद्वाक्यं कथमबुध्यत ॥३४॥ गुरुरुवाच ॥ असौ जीवनि
रासो वै शूलोत्तोलनमेव च । दुःखशङ्कान्वितं तेषां विस्मयं हृत्स्वकारयत् ॥३५॥ तत्त्रयाणां
तु सान्त्वाय प्रतीत्यै चाद्भुतं प्रभुः । स्वैश्वर्य्यं दर्शयामास शृणु तच्छिष्य सांप्रतं ॥३६॥ इति
श्रीख्रिष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (मत्थायस्य षोडशसर्गान्मार्कस्याष्टमनवमसर्गाभ्यां
लूकस्य नवमसर्गाच्चोद्धृतः) ख्रिष्टमण्डलीनिर्म्माणप्रस्तरो नाम चतुर्थोऽध्यायः ॥ २६

गुरुरुवाच ॥ एतेभ्योऽव्यक्तवाक्येभ्यः प्रभूक्तेभ्यः परे यदा । अभवन्परिपूर्णानि शिष्य
षड्वासराणि वै ॥१॥ तदा प्रस्तरयोहन्नियाकोबैः स समन्वितः । नव शेषानधस्त्यक्त्वा
रुरोहोन्नतपर्व्वतं ॥२॥ तस्मिंस्ताबोरनाम्न्यद्रौ निर्जने सोऽर्थनाकृते । स्थितस्तत्संमुखे
ऽकस्माद्विकृताकारकोऽभवत् ॥३॥ तद्वस्त्राणां हि सर्व्वैर्ब्बैरजकासाध्यशुक्लता । उज्ज्वलन्ती

हिमानीव बभावास्यं च सूर्य्यवत् ॥४॥ तेन तेजोवृतेनैव वदन्तौ सह मानुषौ । बभतुर्दीप्ति संपन्नौ मोस्यलीयौ त्वमू किल ॥५॥ यिरूषलेमे ह्यचिराय भाविनी खृष्टस्य या निःसृतिरेव भूमितः । अतीव तन्नद्विषये महागुरू सहोचतुर्वै गुरुणा महीयसा ॥६॥ तच्चित्रसंवाद इहानुपस्थिते ऽतिक्लान्तमेवाद्र्यधिरोहणश्रमात् । सुषुप्सुता प्रस्तरमाप तत्र वै तथा सहस्थौ जिबिदीयजावपि ॥७॥ परे तु ते जागरितास्त्रयः सकृत्तेजोवृतं संददृशुर्महाप्रभुं । सह २७
स्थितं चाब्रहवंशशास्त्रदं तथैव तच्छास्त्रपुनर्विधायकं ॥८॥ तद्दीप्तरूपेक्षणतस्त्वतीव ते विमोहिता विस्मयभीतिहर्षणैः । ततः प्रयान्ताविव तौ महागुरू दृष्ट्वाब्रवीत्प्रस्तर उन्मदः प्रभुं ॥९॥ हे नाथ नोऽस्मिन् स्थितिरुत्तमा गिरावतोऽत्र दूष्यत्रयमेव शोभनं । त्वदर्थमेकं किल मोसयेऽपिचालीयाय चान्ये परिनिर्म्मिमामहै ॥१०॥ इतीरिते तेन निजोक्त्यबोधिना क्षणेऽपि

तस्मिन् रुचिमान्महाघनः । आच्छादयन्तान्परितोऽखिलानथो तन्मध्यतो वाण्युदयन्त्यनु
श्रुता ॥११॥ श्रीपरमेश्वर उवाच ॥ अवभासत एष यो नरः स ममास्त्यात्मज एव सुप्रियः ।
परितुष्टहृदस्म्यनेन वै वचनान्यस्य नरा निशाम्यत ॥१२॥ गुरुरुवाच ॥ इमां तु वाणीं
श्रुतवन्नरत्रयं प्रगाढभीत्या निपपात दण्डवत् । तांस्तु स्पृशन् भूशयिनान् प्रभुस्तदाब्रवीदहो
जागृत मा बिभीत च ॥१३॥ इति श्रुत्वोत्थिताः शिष्याः पर्यैक्षन्त क्षणे तदा । प्रस्तराद्याः २९
प्रभुं त्वेकमपश्यंस्तौ गुरू विना ॥१४॥ सोऽन्तर्हितश्चिरेष्टां यः शिखरे वीक्ष्य नीवृतं । ईश
दूतान्तिके मोशिर्नरादृष्टः पुरामृत ॥१५॥ स तथान्तर्हितोऽलीयः स्थापयित्वा पुनर्हि यः।
ईशार्च्चीं स्वर्गमारोहत्सख्युः साक्षाज्ज्वलद्रथे ॥१६॥ महद्धामपि ताभ्यां तु महीयान्पुरतः
स्थितः । निजशिष्यत्रयं खृष्टः पूर्ववत्सानुतोऽनयत् ॥१७॥ सीमोनादींश्च ताबोराद्रितोऽवतर

नस्तदा । विस्मित्यानुक्तवचसः प्रभुरेतद्वचोऽब्रवीत् ॥१८॥ श्रीयेषूरुवाच ॥ यावन्न नर
पुत्रः स्यादुत्थितो मृतभावतः । युष्माभिरिह यद्दृष्टं तन्मा वदत कंचन ॥१९॥ गुरूरुवाच ॥
इत्यादिष्टास्त्रयः श्रेष्ठाः शिष्याणां न किमप्यतः । प्रभुमाहात्म्यपर्य्यन्तं तद्दृष्टिविषयेऽब्रुवन् ॥२०॥
तदर्थाज्ञास्तु तेऽन्योन्यं तन्मृत्यूत्थानमस्ति किं । इति यत्नाद्विचार्य्याथ संपप्रच्छुरिदं प्रभुं ॥
२१॥ प्रस्तरादय ऊचुः ॥ अलीयः ख्रीष्टसाम्राज्यात्पूर्व्वागामी महागुरुः । इति विज्ञैः कथं प्रोक्तं २१
सच्छास्त्राध्यापकैः प्रभो ॥२२॥ गुरूरुवाच ॥ इति पृष्टस्त्रिभिः शिष्यैः पुत्रः स परमात्मनः ।
ख्रीष्ट इत्येव तैर्ज्ञातो वचः प्रत्यब्रवीदिदं ॥२३॥ श्रीयेषूरुवाच ॥ सत्यमेतदलीयो हि यथोक्तं
भव्यवाचिना । सर्व्वप्रस्तुतये पूर्व्वमागामी किल शोधकः ॥२४॥ किंतु तत्प्रस्तुतेनापि किं न
मानुषसूनुना । नानादुःखमवज्ञा च प्राप्येति लिखितं पुरा ॥२५॥ अलीयस्त्वाजगामात्रेति

सत्यं वो ब्रवीम्यहं । तस्मिंश्चक्रुर्यथेष्टं च तज्ज्ञानपरिवर्ज्जिताः ॥२६॥ यत्तु ते ऽग्रचरे चक्रुः पुण्यग्रन्थानुसारतः । कुमतास्तत्करिष्यन्ति नरसूनौ तथैव च ॥२७॥ गुरुरुवाच ॥ इति प्रतिवचः प्राप्य शिष्या बुबुधिरे त्रयः । इङ्गितं प्रभुवाक्येन योहन्निं जकरीयजं ॥२८॥ अलीयात्मोपपन्नो हि यः पूर्व्वमपि जन्मनः । इत्युक्तो मन्दिरस्थाय पित्र ईशचरेण वै ॥ २९॥ पुनःसंजीवत इव शक्त्यालीयस्य स क्षितौ । गतवानीशपुत्राग्रे प्रत्यावर्त्तयितुं न ३० रान् ॥३०॥ मलाकीयस्य सद्वाक्यं पूरयामास सर्व्वशः । स्नापकः स नवो ऽलीयो बहुहृच्छुद्धिकारकः ॥३१॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (मत्थायस्य सप्तदशसर्गान्मार्कूकयोः प्रथमनवमसर्गाभ्यां सीमोनप्रस्तरलिखितद्वितीयसाधारणलिपेः प्रथमसर्गाच्चोद्धृतः) पुत्रैश्वर्य्यावभासनं नाम पंचमो ऽध्यायः ॥

गुरुरुवाच ॥ एवं शिष्यैस्त्रिभिः सार्द्धं संभाष्य प्रभुरध्वनि । प्रत्यगान्नव तच्छेषान् स्वत्य
क्तान्प्राग्दिनेऽध्यधः ॥१॥ स्थितांस्तु परितस्तेषां बहुलान्स समैक्षत । जनानध्यापकांश्चापि
वितण्डां कुर्वतो भृशं ॥२॥ सर्वव्यूहस्तु तं दृष्ट्वा समागच्छन्तमन्तिके । विस्मयादप्यभिद्रुत्य
नमश्चक्रे महागुरुं ॥३॥ अथोवाच स यूयं किं विवदध्वे परस्परं । इत्युक्ते व्यूहमध्यस्थ
एक उच्चैर्जगाद तं ॥४॥ नर उवाच ॥ एकपुत्रोऽहमाचार्य्य त्वत्समीपे निजात्मजं । आ ३१
नयं मूककृद्भूतग्रस्तं व्याकुलमानसः ॥५॥ बहुधा स बलाद्भूमौ तत्प्रक्षेपाहताङ्गकः । तत्र नि
ष्पीड्यते तेन मुखनिःसृतफेणकः ॥६॥ विरुत्य रदनैश्चापि घोषन्नुच्चैश्च पीडनात् । श्रमक्षीण
स्ततः कष्टाद्दुष्टभूतेन वर्ज्यते ॥७॥ त्वय्यसन्निहिते बालं तं सुस्थीकर्त्तुमार्थ्ययं । त्वच्छिष्यान्
किंत्वमी हन्त प्रतीकारासमर्थकाः ॥८॥ गुरुरुवाच ॥ इत्युक्तो रोगिणः पित्रा बालस्याकुल

चेतसा । प्रणतेन दयालुः स प्रभुरेतद्वचोऽब्रवीत् ॥९॥ श्रीयेषूरुवाच ॥ रे विरुद्धहृदोऽश्रद्धाः
कियत्कालं हि वोऽन्तिके । तिष्ठन् युष्मान्सहिष्येऽहं बालस्त्वानीयतामिह ॥१०॥ गुरूरुवाच ॥
नीयमानस्तु बालस्तत्क्षणे भूतप्रपीडितः । भूमौ पपात तत्रापि लुलोठास्योत्थफेणकः ॥
११॥ प्रभुस्तं पीडितं दृष्ट्वापृच्छत्तत्पितरं तदा । कति वर्षाणि बालोऽयमियत्क्लेशान्वितो
ऽभवत् ॥१२॥ इति पृष्टः पिता दीनः प्रत्युवाच प्रभुं तदा । आशिशुत्वादपि ग्रस्तोऽनेन ३२
भूतेन मत्सुतः ॥१३॥ तेनाकृष्टोऽप्ययं बालो मुहुर्वैश्वानरोदरे । मुहुश्च सलिलेष्वेवापस्मारी
पतति ध्रुवं ॥१४॥ अतोऽस्मात्सांप्रतं भूताज्जिघांसोर्मामकं किल । संरक्ष तनयं त्वं चेत्कर्तुं
किमपि शक्नुयाः ॥१५॥ इत्यभ्युक्तोऽब्रवीन्मोक्ता प्रत्येतुं शक्नुया यदि । सकलान्यपि शक्यानि
विद्धि प्रत्ययता दृढं ॥१६॥ इत्याज्ञाप्तो नरोऽवादीत्क्रन्दनास्रुयुतं वचः । प्रत्येमि त्वं तु नाथ

स्याः सहायो मे प्रतीतये ॥१७॥ इति श्रुत्वा प्रभुर्व्यूहं द्रवन्तमभितस्तदा । समीक्ष्यापूत
भूताय गर्हकं प्रावदद्वचः ॥१८॥ श्रीयेषूरुवाच ॥ अरे मूकत्वकृद्भूत ममाज्ञां त्वं निशा
मय । अस्माद्बालाद्बहिर्याहि पुनरेनं च मा विश ॥१९॥ गुरुरुवाच ॥ इदमाकर्ण्य
भूतः स भूतनाथस्य भर्त्सनं । रुत्वा निष्पीड्य बालं च तत्क्षणेऽस्माद्विनिर्गतः ॥२०॥ भूतहीनः
स आदौ तु मृत इत्येव भूरिभिः । अभाष्यताथ हस्ते तं धृत्वोदस्थापयत्प्रभुः ॥२१॥ गता ३३
पस्मारमपि तं सम्यक् सुस्थं च मोचकः । तत्पितर्याप्तकामेऽत्र व्यूहसाक्षात्समार्पयत् ॥२२॥
सर्वे चापि तदाश्चर्य्यक्रियाद्रष्टार ईश्वरं । तुष्टुवुर्व्यक्तमाहात्म्यं महाविस्मयसंयुताः ॥२३॥
ततः शिष्यान्विते येष्वि निर्जनालयमाश्रिते । तेन ये नवसंख्या ह्यस्ताबोरारोहिणोज्झिताः ॥
२४॥ ते तदाधिगता यत्नाद्व्यूहहीनं महागुरुं । स्वशङ्कापहरायैतत्पप्रच्छुः सर्ववेदिनं ॥

२५॥ अन्द्रियादय ऊचुः ॥ बालं त्वद्वाक्यमात्रेण प्रभोऽमुं सुचिकित्सितं । प्रतिकर्त्तुं कुतः
पूर्वं वयं खल्वसमर्थकाः ॥२६॥ गुरुरुवाच ॥ इति पृष्टः प्रभुः स्वीयशिष्येष्वर्पितवान्
पुरा । भूतनिःक्षेपिकां शक्तिं तदा प्रत्यब्रवीदिदं ॥२७॥ श्रीयेषूरुवाच ॥ युष्माकं प्रत्यया
भावादेवासोत्तदशक्तता । अणुसर्षपतुल्यो हि विश्वासो यदि वो भवेत् ॥२८॥ तदा युष्मा
सु निःशङ्कं ब्रुवत्स्वचलमप्यमुं । इतो विचल तत्रेति ततोऽयं विचलिष्यति ॥२९॥ तथा वि ३४
श्वासिनां किंचिन्नासाध्यं वोऽस्ति किंत्वयं । भूतवर्गो न निःक्षेप्यः सोपवासार्थनां विना ॥
३०॥ गुरुरुवाच ॥ इति प्रोच्यान्द्रियादीन् स शिष्यान्नव ततो गतः । पर्य्यभ्रमद्गलीलायां
सर्वशिष्यसमन्वितः ॥३१॥ तदा गुप्तोच्छुरपि स तत्स्थितैः कर्म्महेतुतः । विस्मितैर्दृश्य
मानोऽथ स्वानुगानिदमब्रवीत् ॥३२॥ श्रीयेषूरुवाच ॥ युष्माभिः सुनिशम्यन्तां पुरोक्तानि

वचांसि मे । नरपुत्रो नृणां हस्ते निधेयो ह्यचिरादिति ॥३३॥ हन्तव्यश्चापि तैर्नूनं किंत्वा
प्तनिधनो ऽपि सः । तृतीये दिवसे मृत्योः पुनरुत्थास्यति ध्रुवं ॥३४॥ गुरुरुवाच ॥ इत्या
कर्ण्य पुनर्वाचं शिष्या गूढार्थिकां प्रभोः । दुःखमाप्त्वापि तस्यार्थं नापृच्छन् भयहेतुतः ॥३५॥
यदा कपर्नहूमं तु प्रत्यगच्छंस्त तैः सह । विवादं तेषु दृष्ट्वापि तान्किंचिन्नावदत्तदा ॥
३६॥ प्राविशत्तु यदा तत्र तदा सीमोनसन्निधौ । समेत्याभ्यब्रुवन्नेतदैस्रयेल्यबलि ३५
ग्रहाः ॥३७॥ बलिग्राहिण ऊचुः ॥ किं न दत्ते तवाचार्य्यो मोसिशास्त्रानुसारतः । प्रति
वर्षे ऽर्द्धकर्षं स्वं मन्दिरार्थं नु रौप्यकं ॥३८॥ गुरुरुवाच ॥ इत्युक्तः प्रस्तरो वाढमित्यवादीत्
ततो गृहे । प्रविष्टं गुरुमुक्त्वा तदथाप्नोदिदमुत्तरं ॥३९॥ श्रीयेषूरुवाच ॥ त्वया सीमोन किं
ज्ञातं भूमिराजाः करं कुतः । लभन्ते स्वसुतेभ्यः किमन्यजातेभ्य एव वा ॥४०॥ गुरुरु

थाच ॥ अन्यजेभ्यः किलेमं ते लभन्ते शाश्वतं करं । इति प्रत्युच्य मीमोनस्ततो ऽन्यदग्र

गोऽब्रवः ॥४१॥ श्रीयेषूरुवाच ॥ अतो मुक्तकराः पुत्रा न चावश्यमयं बलिः । निजमन्दिर

रक्षार्थं देयो नित्येशसूनुना ॥४२॥ तत्राप्यतिविरोधस्य तैः सार्द्धं पातकारिणः । अभावा

याधुना गच्छ प्रस्तर ह्रदरोधसि ॥४३॥ तत्राप्सु वडिशं क्षिप्त्वा यमादौ मीनमाप्नुयाः ।

तस्य वक्त्रोदरे कर्षं रौप्यं त्वं खल्ववाप्स्यसि ॥४४॥ एनं बलिग्रहीतृभ्यो ऽमीभ्यः कर्षं प्रदे ३६

ह्यतः । आवयोरुपयुक्तो ऽयं बलिरीशस्य शास्त्रतः ॥४५॥ गुरुरुवाच ॥ अस्मिन्कार्य्ये ऽकृते

पूर्णे ऽब्रवीद्येषूर्गृहस्थितः । मार्गे किंविषये यूयं व्यवदध्वं परस्परं ॥४६॥ इति पृष्टास्तु

तच्छिष्या लज्जया नोचुरुत्तरं । श्रेयस्त्वविषयं भूतं स्वविवादं यतो ऽस्मरन् ॥४७॥ ततस्तद्धृ

दयज्ञः स समाहूयात्मसन्निधौ । सर्वानेतद्वचो ऽवादीच्छिष्यान् द्वादशसंख्यकान् ॥४८॥

श्रीयेषूरुवाच ॥ युष्मन्मध्ये ध्रुवं यो य आद्यो भवितुमिच्छति । सर्वेषु चरमः स स्यात्सर्वेषां
दास एव च ॥४९५ गुरुरुवाच ॥ इदं संश्रुत्य तेऽपृच्छंस्तथा चेत्स्याद्ध्रुवं प्रभो । स्वर्ग
राज्यान्तरे को वै भविष्यति महत्तमः ॥५०॥ इति श्रुत्वा वचस्तेषां शिशुमाहूय कंचन ।
तन्मध्ये चापि संस्थाप्य प्रभुः प्रत्यब्रवीदिदं ॥५१॥ श्रीयेषूरुवाच ॥ परावृत्तहृदो यूयं नि
भाश्च शिशुभिर्यदि । न स्यात स्वर्गराज्यान्तः प्रवेष्टुं न शकिष्यथ ॥५२॥ इत्यहं वच्मि वः ३७
सत्यमत एष शिशुर्यथा । तद्वन्नम्रो भवेद्यो यः स्वर्गे श्रेयान्स एव हि ॥५३॥ यो योऽपि
प्रतिगृह्णीयादीदृशं मत्कृते शिशुं । स मां वै प्रतिगृह्णाति यस्तु कुर्यादिदं नरः ॥५४॥ स
न मां केवलं किंतु गृह्णाति प्रेरकं मम । यो युष्मासु लघीयांश्च स महीयान् भविष्यति ॥५५॥
गुरुरुवाच ॥ एनामुदीरयत्युक्तिमीश्वरस्यात्मजे प्रभौ । जिबिदीयजयोरेतन्नदा युवतरो

ब्रवीत् ॥५६॥ योहन्निरुवाच ॥ त्वन्नाम्ना निःक्षिपन्भूतान् कोऽपि दृष्टः स्मृतौ गुरो । स
निषिद्धस्ततोऽस्माभिर्यतो नास्मद्गणाश्रितः ॥५७॥ गुरुरुवाच ॥ इदं श्रुत्वा स्वशिष्याणां कुतू
हलयुतं वचः । प्रभुः सर्वहितोऽवादीदिदं तत्प्रतिरोधकं ॥५८॥ श्रीयेषूरुवाच ॥ मा निषे
धत यो ह्येव मन्नाम्नाद्भुतकृत्स मां । न निन्द्येत् किंतु यो न स्याद्विपक्षो नो हितोऽस्ति सः ॥५९॥
यो य एषां शिशूनां तु मयि विश्वासकारिणां । एकस्यापि हितान्मार्गात्पतनं कारयेत्खलु ॥ ३८
६०॥ सनरं तत्कृते दोऽपि यदि संपेषणाश्मना । ग्रीवायां परिबद्धः स प्रक्षिप्येतार्णवेऽतले ॥
६१॥ जनपातनहेतुभ्यो विपद्ध्वस्तमरे जगत् । सर्वतो ह्यनिरोध्या वै पातहेत्वागति
र्भुवि ॥६२॥ किंतु येन नरेणैव पातकारणमीदृशं । समानीयेत भूमध्ये तं धिक् स्याद्वै सम
न्ततः ॥६३॥ किंतु त्वां निजहस्तश्चेत्पादो वा हितमार्गतः । पातयेत्तमतो यत्नादुच्छिन्धि

त्वं समन्ततः ॥६४॥ हताङ्गस्य तव श्रेयान्प्रवेशो नित्यजीवने । नरके गमनात्तावद्धस्तपाद
युतस्य ते ॥६५॥ यत्र दंशककीटो हि म्रियते न कदाचन । संदहन्वीतिहोत्रश्च न संनिर्वा
त्यपि ध्रुवं ॥६६॥ तथा त्वां निजचक्षुश्चेत्कुदृष्ट्या हितमार्गतः । पातयेत्तदपि त्वं वै तदा
निःक्षिप निर्द्दयं ॥६७॥ एकाक्षस्यापि ते श्रेय ईशराज्ये प्रवेशनं । नरकान्तर्विनिक्षेपात्तवाक्षि
द्वयभाजिनः ॥६८॥ दंशको यत्र कीटो हि न कदाचिद्विनश्यति । अग्निः संदाहकश्चापि न ३९
निर्व्वाति कथंचन ॥६९॥ इन्द्रियाणामधीना हि दुर्जना नरकाग्निना । समस्ता लवणेनेव
रक्षिष्यन्तेऽक्षताः किल ॥७०॥ किंतु सर्व्वो बलिर्यद्वल्लवणेनाक्षतोऽयते । तथेशोत्सर्जनीया वै
शुद्धज्ञानेन मानुषाः ॥७१॥ शुद्धं लवणमेवास्ति किंत्वेतदपि चेत्परे । रसहीनं भवेत्केन
स्वादु कुर्य्यात तत्पुनः ॥७२॥ अत आत्मसु यूयं तल्लवणं ज्ञानरूपकं । यत्नाद्रक्षत सन्धिं

पांत सर्वे परस्परं ॥७३॥ एतच्छिशुसमानां तु क्षुद्रत्वार्थेऽवहेलनात् । मयि विश्वास
कर्तॄणां सावधानाः स्त यत्नतः ॥७४॥ यतस्तद्रक्षका दूताः स्वर्गलोके निरन्तरं । मत्पितुः स्वः
स्थितस्यास्यमीक्षन्त इति वच्मि वः ॥७५॥ यत्क्षुद्रं ह्यबलं चैवापचितिं गच्छदेव च । तदु
द्धर्तुं किल स्वर्गादवतीर्णो नरात्मजः ॥७६॥ युष्माभिरनुभूतं किं शतं मेषा नरस्य चेत् ।
पर्तेरन् किंतु तन्मध्य एक एव ततो भ्रमेत् ॥७७॥ तदैकोनशतं शेषान्विहायाद्रावसंशयं ।
किं नैकं भ्रान्तमेषं सोऽन्वेष्टुं गच्छति यत्नतः ॥७८॥ दैवात्तु प्राप्नुयाच्चेत्तं भूयान् हर्षो भवे
त्तदा । एकोनशतमेषाणामभ्रान्तत्वोत्थहर्षणात् ॥७९॥ युष्माभिरिच्छा तु ततोऽनुभव्या स्वर्ग
स्थितस्यापि पितुर्व एवं । क्षुद्रेष्विहैतेषु न कोऽपि नूनं भ्रान्तोऽपि जीवापचयं प्रकुर्य्यात् ॥
८०॥ यदि त्वद्विषये भ्रातापराध्येत्किमपि स्वयं । तं तदा प्रथमं गत्वा दोषं ज्ञापय नि

ऊने ॥८१॥ ततश्चेतव वाक्यं स स्वीकुर्य्याद्दोषलज्जितः । तदा भ्रातरमात्मीयं त्वं पुनः प्रापिथ ध्रुवं ॥८२॥ नतु चेद्वै तदान्येनान्याभ्यां वा सह तं प्रति । गच्छ कर्म्मदृढीकृत्यै द्वित्र साक्षिमुखोक्तिभिः ॥८३॥ तदापि यदि दोषं स नाङ्गीकुर्य्यादथ क्रियां । सर्व्वां ज्ञापय विस्ता रान्मण्डलीं विभुसेविनां ॥८४॥ किंतु सन्मण्डलीवाक्यं न स्वीकुर्य्यात्स चेत्तदा । अन्यार्च्चीव त्वदग्रे वै करग्राहीव वास्तु सः ॥८५॥ यद्यद्बध्नीथ भूमौ हि तद्बन्ध्यं स्वर्गमण्डले । यन्मुञ्चथ ४। तथा भूमौ मोक्तव्यं स्वर्ग इव तत् ॥८६॥ इति वो वच्म्यहं सत्यं पुनश्चैतद्ब्रवीम्यपि । द्वावप्येक मतौ स्यातां युष्मासु प्रार्थने यदि ॥८७॥ तदेच्छत उभौ यद्यत्संस्थितौ भूमिमण्डले । पूरयिष्य ति तत्ताभ्यां स्वर्गवासी पिता मम ॥८८॥ यत्र यत्र हि मे नाम्ना स्युर्द्वित्रा अपि मानुषाः । संगृहीताः स्वयं तत्र तन्मध्येऽहमपि स्थितः ॥८९॥ गुरुरुवाच ॥ इदं प्रोक्तवति श्रेष्ठमीश्व

रैकसुते वचः । तमभ्येत्याथ सोमेनः प्रस्तराख्योऽब्रवीदिदं ॥१०॥ प्रस्तर उवाच ॥
अपराध्यति मह्यं तु कतिधा भ्रातरि प्रभो । अपराधं क्षमिष्येऽहं किं योग्यं सप्तधापि तत् ॥
११॥ श्रीयिषूरुवाच ॥ सप्तधामात्रपर्य्यन्तं योग्यं तन्न ब्रवीमि ते । सप्ततिघ्नांस्तु सप्तापि
वारान् कर्त्तव्यमेव तत् ॥१२॥ अत एव निभं स्वर्ग्यराज्यं भूपस्य कर्म्मणा । कुर्वतो भृत्यवर्गी
यव्ययसंख्याविवेचनं ॥१३॥ तदन्वेषण आरब्धे भृत्य आनायि तं प्रति । सार्द्धां शोधयि ४८
तुं रौप्यकर्षकोटिं नियोजितः ॥१४॥ इयदर्पयितुं कोषे त्वशक्तं तं समादिशत् । राजा
सस्त्रीसुतद्रव्यं विक्रेतुमृणशुद्धये ॥१५॥ तदासौ प्रणतो भृत्योऽब्रवीद्व्याकुलमानसः । त्वं सह
स्वाधुना स्वामिन् मया शोध्यं च तेऽखिलं ॥१६॥ अतः सर्व्वमृणं तस्य मोचयित्वा दयान्वितः।
तद्दोषं विस्मरन् राजा तुष्टं प्रास्थापयत् स्वयं ॥१७॥ ततः प्रस्थाय सोऽपश्यत्सहभृत्यं पथि

स्थितं । पुरा यस्मिन्न्यधाद्रौप्यं शतमाषचतुष्टयं ॥९८॥ तमभ्येत्य गृहीत्वा च गले लोभी स यत्नतः । अब्रवीत्त्वमृणं मेऽद्य यथार्हं परिशोधय ॥९९॥ ततस्तत्पादपतितः सहभृत्यो ऽब्रवीदिदं । अधुना नु सहस्व त्वं मया शोध्यं च तेऽखिलं ॥१००॥ इदं न स्वीचकारासौ किंतु यावन्न सर्वशः । परिशोध्यमृणं कारागारे तं समबन्धयत् ॥१०१॥ ततस्तत्सहभृत्यानां वर्गो दृष्ट्वातिदुःखितः । गत्वा तत्सकलं कर्म्म ज्ञापयामास भूमिपं ॥१०२॥ अथ सोऽमुं ४३
समाहूयावदद्दुष्ट भृत्य दुष्टहृत् । अहं ते प्रार्थनाहेतोरमुञ्चं वृहदप्यृणं ॥१०३॥ अतस्त्वमियत्तीं मत्तो दयां संप्राप्तवान् यथा । तथैव सहभृत्यं स्वं दयितुं किं स्म नार्हसि ॥१०४॥ इत्युक्त्वा प्रात्तनं यावन्न शोध्यं सर्वमप्यृणं । रुषितस्तं नृपः काराकारक्षकेषु समार्पयत् ॥१०५॥ तथैव युष्मद्विषये पिता मे स्वर्ग्यः प्रकुर्य्याद्यदि यूयमेवं । भ्रातॄन् स्वकीयानपराधिनोऽपि

मैह क्षमेध्वं हृदयेषु सर्वे ॥१०६॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (मोसि पंचशास्त्रस्य निःसृतिस्कन्धान्मत्थायस्य सप्तदशाष्टादशसर्गाभ्यां मार्कलूकयोर्नवमसर्गाच्चोद्धृतः) शिष्यमलनिरोधो नाम षष्ठोऽध्यायः ॥

शिष्य उवाच ॥ एवं कपर्नहूमाख्ये दूरदिग्भ्रमणात्परे । स्वपुरे पुनरागत्य पुण्यादेष्टा
चकार किं ॥१॥ गुरुरुवाच॥ न चिरं शिष्य तत्रैव न वा गालील्यनीवृतः। कस्मिंश्चिदपि स स्थाने ४४
तद्देशतनयोऽवसत् ॥२॥ कालो ह्युपस्थितस्तर्हि द्वितीयविषुवान्तिकः । दूष्यपर्व्वसमारब्ध्यै धार्म्मिकाः प्रस्तुता यदा ॥३॥ महापर्व्वत्रयस्यास्मिंश्चरमे हीस्रयेलजाः । सर्वे शास्त्रानुसारेण गता ईश्वरमन्दिरं ॥४॥ बन्धुवर्गस्तदा येष्वस्तदविश्वस्तमानसः । यशोलिप्सुस्त्विदं वाक्यं समवादीत्स्वगोत्रजं ॥५॥ श्रीयेषूबान्धवा ऊचुः ॥ यथा क्षुद्रे प्रदेशेऽस्मिन् यन्नात्वं परितो भ्रमन् ।

शापयस्यात्मगुरुतां गालील्यानेव कर्म्मभिः ॥६॥ त्वं यहूद्ये तथा देशे ऽधिकमप्येतुमर्हसि ।
स्वेभ्यस्तत्रस्थशिष्येभ्यो ऽद्भुतकर्म्मप्रदिष्टये ॥७॥ न किंचिद्व्यावृतं कुर्य्यात्सत्प्रकाशहितो नरः ।
कुर्य्याश्चेत्सत्यमेतानि जगत्यात्मानमीक्षय ॥८॥ गुरुरुवाच ॥ इत्युक्तो बन्धुभिः स्वीयैः सत्प्र
काशात्मकस्तदा । पितृकर्म्मसमासक्तः स तान्प्रत्यब्रवीद्वचः ॥९॥ श्रीयेषूरुवाच ॥ मदीयः
समयो नूनमिदानीं नह्युपस्थितः । युष्मदीयस्तु समयः सर्व्वदाप्युपतिष्ठति ॥१०॥ न
द्रुह्येद्वो जगत् किंतु तद्वै द्रुह्यति मे यतः । साक्ष्यं ददाम्यहं तस्य क्रियामन्दत्वगोचरं ॥११॥
यूयं पर्व्वणि यातास्मिन् नतु यूहान्वितस्य मे । सुकीर्त्याव्रतयात्रायाः संपूर्णः समयो ऽधुना ॥
१२॥ गुरुरुवाच ॥ इत्युक्त्वा स स्वबन्धुभ्यो ऽतिष्ठद्गालील्यनीवृति । महायूहान्वितास्ते तु तदा
गत्वन् महापुरं ॥१३॥ भूते महोपवासे तु प्रायश्चित्ताभिधे तदा । सर्व्वे यिरूषलेमान्तरारभन्तैव

लितुं ॥१४॥ तत्पश्चात्पंचमे ह्येव गृहत्यक्त्या यह्रूदिनां । बलीवर्द्दादिमेधैश्चारम्भणीयो
महोत्सवः ॥१५॥ तदा तु समुपस्थातुं तत्र नैच्छद्बुधः प्रभुः । पर्व्वमध्ये तु तत्रैतुं गुप्तवत्सम
कल्पयत् ॥१६॥ अतः सोऽपगतेः पश्चाच्छेषाणां पर्व्वयात्रिणां । शिष्यैः सह गलीलातो दक्षिण
स्यां गतः सृतौ ॥१७॥ तन्मध्यस्थं च सामार्य्यं प्रदेशं स प्रविष्टवान् । तस्य कस्मिन्नपि ग्रामे
स स्वाग्रे प्रैरयच्चरान् ॥१८॥ तद्ग्रामवासिनस्त्वेतैर्याचितं शयनस्थलं । यिरूषलेमयात्र्यर्थंऽनु ४६
माय प्रददुर्न तत् ॥१९॥ इत्थं पाषण्डिनां तेषां सन्मन्दिरविरोधनं । दृष्ट्वा क्रोधान्वितौ येषूं
प्रोचतुर्जिबिदीयजौ ॥२०॥ याकोबयोहन्नी ऊचतुः ॥ प्रभो त्वदिच्छयामीषां प्रलयायेश
दुर्हृदां । किं नैतर्हि दिवोऽप्यग्निं वयमत्राह्वयामहे ॥२१॥ यथाग्रेऽपि महालीयो दूतो
राज्ञो विभुद्विषः । सगुल्मौ ध्वंसितुं शक्त्याग्निमाकाशात्समाह्वयत् ॥२२॥ गुरुरुवाच ॥

कुतूहलवचः श्रुत्वा वज्रपुत्राख्ययोस्तयोः । नृपुत्रः स नृजीवानां न हन्ता किंतु रक्षकः ॥
२३॥ सभर्त्सनमिदं वाक्यं प्रोवाच भ्रातरौ प्रति । कीदृगात्मोपपन्नाः स्थ तद्युष्माभिर्न बुध्य
ते ॥२४॥ इत्युक्त्वा दुःसमार्य्याणां ग्राममेनमदण्डितं । दयालुर्मुक्तिदो हित्वाचलद्ग्रामान्तरं
ततः ॥२५॥ अथ कस्मैचिदेतर्हि तमन्वेतुं समिच्छते । यत्र यत्र चलेन्मार्गे प्रभुरेतद्वचो
ऽब्रवीत् ॥२६॥ लोमशैराश्रिता गर्त्ता नीडा अपि च पक्षिभिः । नृसूनोस्तु क्वचिन्नास्ति शिर ४७
सोऽप्यर्पणस्थलं ॥२७॥ अन्यस्मै च तमन्वेतुमाज्ञाप्तायाथ वाञ्छते । पित्रन्त्येष्टिं पुरा कर्त्तुं
तदा प्रभुरवोचत ॥२८॥ मृतकर्म्म मृतैरेव कार्य्यं त्यक्त्वा समन्विहि । मां त्वमीशस्य राज्यं च
जीवनाप्तः प्रचारय ॥२९॥ कोऽप्यन्यस्तु यदावादीत्वामन्वेष्याम्यहं प्रभो । प्राक् त्वेतुं मद्गृह
स्थानां नत्यर्थमनुमन्यतां ॥३०॥ इत्युक्तः स तदोवाच यो यः स्पृष्ट्वा हलं ततः । स्यात्पराङ्मुख

स्वात ईश्वराज्यार्हको न सः ॥३१॥ इत्युक्त्वा सह तैः शिष्यैः प्राचलद्दक्षिणे पथि । देशं
तीर्त्वा च सामार्य्यं यहूद्ये स उपस्थितः ॥३२॥ तदा सप्ततिसंख्या ये प्रभुसंप्रेरिताः पुरा ॥
पुनः प्रापुर्मुदा ते तं महानगरसन्निधौ ॥३३॥ परिचारकगण उवाच ॥ प्रभो यत्कालतोऽस्मांस्त्वं
गलीलायाः समैरयः । त्वन्नाम्नास्मद्वशीभूता भूता अपि समन्ततः ॥३४॥ गुरुरुवाच ॥ इति
श्रुत्वा स्वशिष्याणां पारमार्थिकशक्तिदः । बहूनामपि सद्वार्तां ततः स प्रजगाद तान् ॥३५॥ ४८
श्रीयेषूरुवाच ॥ भूतनायकमप्युग्रमपश्यमभिशापिनं । अन्तरीक्षात्पतन्तं वै चञ्चत्सौदामिनी
मिव ॥३६॥ अहो वृश्चिकसर्पादींस्तावच्छक्तिं च विद्विषः । अहिंसं मर्द्दितुं सम्यक् सामर्थ्यं
वो ददाम्यहं ॥३७॥ किंतु भूतगणस्यापि युष्मन्निघ्नत्वहेतुतः । मानन्दत वरं स्वर्गे
स्वीयनाम्नां विलेखनात् ॥३८॥ दिवः पृथिव्याश्च सुनाथ मत्पितः सुधीभ्य एतद्यदगोपयो

-खिलं । शिशूंस्त्विदं स्पष्टमवेदयस्ततो मुदोत्तमेच्छा तव शस्यते मया ॥३९॥ तथास्तु
सर्व्वाणि हि मे ददौ पिता न वेत्त्यतः को ऽपि सुतं विना पितुः । न को ऽपि विद्यात्पितरं
सुताद्विना सुदीक्षिताद्वा सुततुष्टितो नरात् ॥४०॥ यूयं तु मम सच्छिष्या यद्यत्कं पश्यथ ध्रुवं ।
तद्दृष्टृण्येव धन्यानि लोचनानीति वच्म्यहं ॥४१॥ राजाचार्य्यगणो ऽग्रे हि युष्मद्दृष्टं श्रुतं च
यत् । तद्दृष्टिश्रुतिकामो ऽपि तदलब्ध्वा पुरामृत ॥४२॥ गुरुरुवाच ॥ एतदभ्यन्तरे को ऽपि धर्म्म
शास्त्री समुत्थितः । व्यूहमध्यात्परीक्षार्थमिमं प्रश्नं चकार ह ॥४३॥ हे महाचार्य्य किं कृत्वा ४९
प्राप्स्ये ऽहं नित्यजीवनं । इति पृष्टः स सर्व्वज्ञः प्रत्युवाचाथ शास्त्रिणं ॥४४॥ किमेतद्विषये ऽधीषे
लिखितं त्वं विभोर्विधौ । इदं श्रुत्वा वचो येष्वः प्रत्यवादीद्यहूद्यसौ ॥४५॥ धर्म्मशास्त्र्युवाच ॥
तावद्धृदा परात्मानं प्रीणयेस्तावदात्मना । तावच्छक्त्या स्वमीशं त्वं तावच्चित्तेन च ध्रुवं ॥४६॥

प्रतिवासिनमेवं स्वं प्रीणयेस्त्वं किलात्मवत् । इति मोसीयशास्त्रे हि विभुनाज्ञापिता नराः ॥
४७॥ गुरुरुवाच॥ इदं श्रुत्वाब्रवीद्येषूः साधु प्रत्युदितं त्वया। एवं कुर्वन् विशङ्कं त्वं जीवनं प्राप्नुया
इति ॥४८॥ निजशुद्धीकृतीच्छुस्तु तदापृच्छदसौ गुरो । कोऽस्ति मे प्रतिवासीति प्राप्नो
त्वेदं गुरूत्तरं ॥४९॥ श्रीयेषूरुवाच ॥ पान्थः कोऽपि यहूदीयो यिरीखूनगरं चलन् । यिरूषलेम
तो मार्गे हिंस्रैःप्राप्यत तस्करैः ॥५०॥ तत्र नग्नीकृतस्तैः सोऽत्याहतश्चापि लोटकैः । अत्यज्यत ५०.
मृतप्रायः समस्तरहितः मृतौ ॥५१॥ कोऽपि यज्वा तु तत्काले दैवात्तस्मिंश्चलन्पथि । तं
दृष्ट्वासृङ्गलत्त्रासादन्यपार्श्वेऽत्यगाद्द्रुतं ॥५२॥ तथा तत्समये कश्चिल्लैव्यस्तत्राप्युपस्थितः ।
ईक्षित्वातिततारैवं तमशुद्धत्वशङ्कया ॥५३॥ पान्थः कश्चित्तु सामार्य्यस्तदा गच्छंस्तदध्वनि ।
दृष्ट्वा तं पतितं तत्र भूतस्तत्करुणार्द्रहृत् ॥५४॥ अतोऽपि समुपासृत्य तत्क्षतेषु सुयत्नतः ।

तैलं द्राक्षारसं चापि न्यस्य चीरैर्बबन्ध सः ॥५५॥ ततस्तं स श्रमाद्दीनमारोप्य स्वीयवाहनं ।
पान्थशाले समानीय तत्र सम्यगपालयत् ॥५६॥ परेऽह्यात्मक्रियार्थं तु प्रचलन् स स्वकोषतः ।
रौप्यार्द्धकर्षमुद्धृत्य तच्छालापतये ददौ ॥५७॥ उचे च त्वमिमं दीनं परिपाह्यधिकस्तु चेत् ।
व्ययः स्यात्प्रतिदेयः स पुनरेत्य मयैव ते ॥५८॥ अतस्त्रिषु नरेष्वेषु लैव्यसामार्य्ययज्वसु ।
कतमः प्रतिवास्यासीदमुष्यार्त्तस्य तस्करैः ॥५९॥ गुरुरुवाच ॥ इत्युक्तो धर्म्मशास्त्री सोऽब्रवी ५१
त्सत्यतया जितः । योऽमुष्यासीद्दयाकारी प्रतिवासी स एव हि ॥६०॥ इदं श्रुत्वोत्तरं तस्य
प्रभुरभ्यवदत्तदा । धर्म्मशास्त्रिंस्तथैव त्वमितः प्रस्थाय कुर्व्विति ॥६१॥ भद्रसामार्य्यकथनं तथा
मोचक उक्तवान् । प्रविवेश ततो ग्रामं बेथनीयाभिधानकं ॥६२॥ यिरूषलेमतो यो वै
क्रोशमात्रान्तरे स्थितः । यिरीखूं प्रति मार्गेऽपि संस्थः पूर्व्वदिगाश्रिते ॥६३॥ यो ग्रामः श्रेष्ठ

षृसाद्रेर्नितम्बे संस्थितोऽभवत् । महामन्दिरदीपादिवह्निनोज्ज्वलतो निशि ॥६४॥ तत्रो
पस्थाय सन्मोक्ता समये दूषपर्व्वणः । सर्व्वान्प्रास्थापयच्छिष्यान् पृथक् स्थातुं महापुरे ॥६५॥
एकाकी स तु तद्ग्रामवासिन्याः प्राविशद्गृहं । मार्थानाम्न्या अभूद्यस्या भ्राता लाजारसंज्ञकः ॥६६॥
तयोर्भगिनी मरीयाख्या तद्गृहेऽपि स्थिता ध्रुवं । प्रभुपादसमासीना तद्वाक्यान्यशृणोन्मुदा ॥
६७॥ मार्थी तु गृहकार्य्येभ्यः परिश्रमसमावृता । येषूं प्रति समागत्य व्यग्रमेतद्वचोऽब्रवीत् ॥ ५२
६८॥ मार्थोवाच ॥ मया केवलया कार्य्यं गृहकर्म्माखिलं स्वसा । मदीया विजहातीति
किं न चिन्तयसि प्रभो ॥६९॥ दययैनां त्वमाचार्य्य त्वद्वाक्याकर्णिनीं सदा । इदानीं मम
साहाय्यं प्रकर्त्तुं दृढमादिश ॥७०॥ गुरुरुवाच ॥ तथा सोऽभ्यर्थितो यत्नाज्ज्ञितकर्म्मोपदेशकः ।
तदा स्वस्रोस्तयोः साक्षात्प्रददाविदमुत्तरं ॥७१॥ श्रीयेषूरुवाच ॥ मार्थे मार्थे किलेदानीं त्वं

नानाकार्य्यहेतुतः। अत्यन्तव्याकुलत्वेन व्याप्ता संपीडितापि च ॥७२॥ किंत्वेकमात्रमावश्यं यो वृतश्च मरीयया। श्रेष्ठो भागः स वै तस्या नापहार्य्यः कदाचन ॥७३॥ गुरुरुवाच॥ इत्युक्त्वा बेथनीयायां संस्थितः स महागुरुः। पर्व्वणोऽष्टाहमध्ये ऽतो गुप्तवत्प्राविशत्पुरे ॥७४॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (मोसेः पंचशास्त्रे लैव्यस्कन्धस्योनविंशसर्गादनुवाक्यस्कन्धस्य
षष्ठदशमैकादशोनविंशत्रिंशसर्गेभ्यो राजचरित्राल्लूकस्य नवमदशमसर्गाभ्यां योहन्नेः सप्तम ५३
सर्गाच्चोद्धृतः) शान्तधर्म्मप्रशंसा नाम सप्तमो ऽध्यायः ॥

गुरुरुवाच॥ ये महानगरस्थास्तु यहूद्याः पूर्व्वपर्व्वणोः। प्रविष्टं ददृशुर्येषूं दर्शिताद्भुतकर्म्मकं ॥१॥ तेऽस्मिन् पर्व्वण्युपक्रान्ते तृतीये बहुयत्नतः। यात्रिणां बहुलव्यूहे मृगयामासुरेव तं ॥२॥ अप्राप्य त्वब्रुवन् कुत्र वर्त्तते खल्वसाविति। ततस्तद्विषयेऽत्यन्त उत्थितःकलहो नृणां ॥३॥ केचिद्ब्रूचुरसौ भद्रो

षिद्यते नर इत्यथ । अन्ये प्रोचुर्न सत्यं तत् स हि लोकप्रवञ्चकः ॥४॥ किंत्वियत्यपि संदेहे सति
भीत्यार्य्ययज्वनां । पुरा तद्द्विषतां स्पष्टं प्राशंसन्नहि को ऽपि तं ॥५॥ पर्व्वणो मध्यकाले तु परमे
श्वरमन्दिरे । अकस्मात्सो ऽखिलैर्दृष्टः शिक्षयन्निर्भयं जनान् ॥६॥ यहूद्या विस्मितास्तूचुरि
यच्छास्त्रसुधीः कुतः । गालील्यो ऽयमहो भूतो न केनाप्यत्र शिक्षितः ॥७॥ इत्यविश्वासिनां तेषां
वाचश्चेतांसि च प्रभुः । अनुभूय तदावादीन्मन्दिरस्थानिदं वचः ॥८॥ श्रीयेषूरुवाच ॥ यां ददा ५४
म्यधुना शिक्षामहं युष्मभ्यमेव हि । शिक्षा ज्ञेया न मे किंतु मत्प्रेरयितुरेव सा ॥९॥ तस्येच्छां यो
नरः कर्त्तुमिच्छेत्स ज्ञास्यति ध्रुवं । एषा शिक्षा किमीशात्था किं वा प्रोक्ता मया स्वयं ॥१०॥ स्वयं
यो वक्ति स स्वीयकीर्त्तीच्छुर्यस्तु कीर्त्तनं । स्वस्यान्विच्छति नेतुः स सत्यो हीनविधर्म्मकः ॥११॥
मोसिदत्ता व्यवस्था वः किं न सर्व्वैरसंमता । मां तल्लङ्घनतो यूयं किमर्थं हन्तुमिच्छथ ॥१२॥

गुरुरुवाच ॥ इदं प्रभुजिघांसुत्वं यदभूच्छ्रेष्ठयज्वनां । विश्रामविधिलङ्घार्थं पंचाशत्पर्व्वणि
स्फुटं ॥१३॥ तदज्ञो ब्रूह आह स्म भूतयस्तोऽसि केन हि । त्वद्धिंसेथत इत्युक्तः प्रभुः प्रत्य
ब्रवीदिदं ॥१४॥ श्रीयेषूरुवाच ॥ एकमत्र मया कर्म्म विश्रामाहे कृतं पुरा । दुर्बलस्य
चिकित्सार्थं तस्माद्यूयं तु विस्मिताः ॥१५॥ ननु वोऽपि परिच्छेदसंस्कारं पितृरीतितः । स्व
पूर्व्वस्थमपि स्वीये मोसिः किं नाददद्विधौ ॥१६॥ किमतो न शिशून् यूयं तद्दिनेऽष्टम ५५
आगते । यद्यपीदं शनेर्वारः स्यात्परिच्छिन्थ सर्व्वथा ॥१७॥ तथा चेत्सर्व्वथा यूयं मोसीयविधि
पूर्त्तये । विश्रामाहेऽपि कुरुथ परिच्छेदनसंस्कृतिं ॥१८॥ कथं क्रुध्यथ मे यूयं धार्म्मिकाख्या
यतो मया । सम्यक् सुस्थीकृतोऽप्यासीन्नरो विश्रामवासरे ॥१९॥ लोकदृष्ट्यनुसारेण मा वि
चारयत क्रियां । मदीयां किंतु तत्वेन विचारं कुरुत स्थिरं ॥२०॥ गुरुरुवाच ॥ इदं श्रुत्वा

वचः केचित्तदा यैरूषलेमिनां । तत्पुराकृतकर्म्मज्ञाः समवोचन् परस्परं ॥२१॥ यिरूषलेमीया
ऊचुः ॥ सोऽयं किं नास्ति यं श्रेष्ठा यज्वानो विधिलङ्घनात् । ईशतुल्यत्ववादाच्च मृत्युदण्डार्हमब्रु
वन् ॥२२॥ इदानीं तु स सर्व्वेषां संमुखे वक्ति निर्भयं । न तथापि च तं केचित्प्रत्याहुर्मन्दिर
स्थिताः ॥२३॥ किं नूनं खृष्ट इत्येष मन्यतेऽस्मत्प्रधानकैः । गालील्योऽपि समस्तैश्चास्माभि
र्ज्ञातोद्भवस्थलः ॥२४॥ किंतु खृष्टो यदागामी हठात्प्रादुर्भविष्यति । स कुतोऽस्ति च केनापि ५६
नृणां न ज्ञास्यते क्वचित् ॥२५॥ गुरुरुवाच ॥ इत्यन्योन्यमविज्ञेषु जल्पत्स्वेव यहूदिषु । मन्दिरे
प्रजगादोच्चैर्महाचार्य्यः समुत्थितः ॥२६॥ श्रीयेषूरुवाच ॥ यूयं वित्थ यथोक्तं मां मम चा
प्युद्भवस्थलं । नत्वहं स्वयमायातः प्रेरितस्तु परेण वै ॥२७॥ स वै सत्योऽस्ति यं यूयं न
वित्थाहं तु वेद्मि तं । यतोऽहमागतस्तस्मात्तेन च प्रेरितो भुवि ॥२८॥ गुरुरुवाच ॥ इति

श्रुत्वा दुरात्मानस्तमतो धर्तुमुद्यताः । नत्वगृह्णन् यतस्तस्य समयो न ह्युपस्थितः ॥२९॥ यूह
मध्ये तु बहवस्तं विश्वस्याब्रुवन् यदा । ख्रीष्ट आगाम्यथास्मात् किं कर्तीश्चर्य्यतराः क्रियाः ॥
३०॥ इत्थं यूहवचः श्रुत्वा येष्वः ख्रीष्टत्वगोचरं । फरीशाः शत्रवस्तस्य भयं क्रोधं च संययुः ॥
३१॥ तं ग्रहीतुमतः पत्तान् प्रैरयन् श्रेष्ठयाजकाः । सफरीशाः स तांस्तूच्चैरिदं निर्भयम
ब्रवीत् ॥३२॥ श्रीयेषूरुवाच ॥ अल्पमेवाधिकं कालं युष्माभिः स्यां सहस्थितः। ततः प्रेरयितारं ५७
मेऽधिगमिष्याम्यहं पुनः ॥३३॥ मृगयित्वापि मां यूयं न प्राप्स्यथ तदा क्वचित् । यत्र तिष्ठाम्यहं
ह्येव तत्र गन्तुं न शक्नुथ ॥३४॥ गुरुरुवाच ॥ तद्वाक्याद्विस्मिता यूहाः समवोचन् परस्परं ।
कुत्र यास्यत्ययं यत्र नाप्नुयाम क्वचिद्वयं ॥३५॥ यवनादीन् किमभ्येतुं सर्वस्यां भुवि विस्तृतान्।
इदानीं कल्पयत्येष भिन्नदेशोपदिष्टये ॥३६॥ किमेतच्चित्रवाक्यं मां मृगयित्वापि नाप्स्यथ ।

यत्राहं चास्मि तत्रैतुं नहि यूयं क्षमा इति ॥३७॥ गुरुरुवाच ॥ पर्व्वणस्त्वष्टमो घस्रस्तत्कालस्थै
र्यहूदिभिः । सर्व्वेषामुत्तमो ज्ञात उपतस्थौ यदान्तिमः ॥३८॥ तदा खार्ज्जूरिकाः शाखा हस्तैर्धृत्वा
पुरोधसः । होमवेदिं विभोर्गेहे पर्य्यवेष्टन्त सप्तधा ॥३९॥ चलन्तश्च तथा सर्व्वेऽब्रुवन्नुच्चैर्निर
न्तरं । रक्ष नः प्रार्थयामस्त्वां शुभं नो नाथ कुर्व्विति ॥४०॥ तत आह्लादजोन्मादव्याप्तो यूहो यहू
दिनां । सिलोहाख्यसरोऽम्भोभिः पूर्णान् कुम्भान् समानयत् ॥४१॥ तान् यूहहस्ततो लब्ध्वा
वेदेरुपरि याजकाः । सलिलं पातयामासुरुत्सृज्यसुरया युतं ॥४२॥ तत्पुण्यजलपातेन
सदात्मानं च तेऽविदः । प्राप्तं ज्ञात्वा ततो गानं भविष्यद्वक्तुरब्रुवन् ॥४३॥ इषाय उवाच ॥
अहो मुक्तिरूपाकरेभ्योऽपि यूयं जलान्युद्धरिष्यध्व एवातिहृष्टाः । महानिस्रयेलार्य्य एवास्ति
मध्ये यतस्तेऽप्यतो गाय शीयोनवासिन् ॥४४॥ गुरुरुवाच ॥ एतत्कर्म्मप्रवृत्तेषु मन्दिरान्तर्यहू

दिषु । यज्वादिषु हठादेत्य तन्मध्ये घोषयत्प्रभुः ॥४५॥ श्रोयेषूरुवाच ॥ चेत्को ऽपि तृष्येदभि
यातु पीत्यै मामेव यस्मान्मयि विश्वसेद्यः । तस्योदरादप्यमृतोदनद्यो वहेयुरित्यार्य्यलिपि
प्रगीतं ॥४६॥ गुरुरुवाच ॥ इति येष्वा स्फुटं प्रोक्तमात्मनो विषये किल । तद्विश्वासयुतैः
सर्वैः प्रापणीयस्य निश्चयं ॥४७॥ किंत्वेतत्प्रोक्तिकाले तन्नासीद्दानं सदात्मनः । न तदा
हि स्वमैश्वर्य्यं भोक्ताप्नोत्कृतकर्म्मकः ॥४८॥ मन्दिरस्थास्तु बहुलाः श्रुत्वा तद्वाक्यमद्भुतं । ५९
ऊचुः सो ऽस्त्येष वै यो नो ऽभीष्ट ईशप्रवाचकः ॥४९॥ अन्ये त्वप्यब्रुवन् खृष्टो राजायं नो ऽस्ति
निश्चितं । अन्यैस्तूक्तं गलीलातः खृष्टः किमुदितो भवेत् ॥५०॥ स हि बेथ्लहमग्रामाद्दाविदो
ऽप्युद्भवस्थलात् । दाविज्जः खृष्ट आगामीत्यार्य्यग्रन्थोदितं न किं ॥५१॥ इत्थं तद्विषये बृह
मतभेदो ऽभवत्तदा । केचित्तमदिधीर्षंश्च नतु के ऽप्यस्पृशन् करैः ॥५२॥ शिष्य उवाच ॥ तत्स्म

रन्तोऽप्यमी सर्वे गुरो यैरूषलेमकाः । पुरा मीकेन यत्प्रोक्तं भव्यखृष्टोद्भवस्थलं ॥५३॥ किमर्थं नास्मरंस्तेऽपि त्रिंशदब्दात्पुरा कृतं । राज्ञा तद्विषये प्रश्नं यज्वनां चोत्तरं स्फुटं ॥५४॥ अतोऽन्यदेश्यविज्ञानां चोक्तोत्पत्तिस्थले गतिं । नूत्नराजार्चनायैव हेरोदेर्वाक्यतोऽप्यरेः ॥५५॥ किमर्थं न स्मृता चापि याभूद् बेथ्लहमात्तदा । येषूत्पत्तेर्महावार्त्ता विस्तृता मेषपालकैः ॥५६॥ गुरुरुवाच ॥ नाज्ञाता शिष्य सा किंतु दुर्बोधैर्विस्मृता कथा । स्वर्गदूतार्च्चितस्यापि तदा बेथ्लहमे शिशोः ॥५७॥ तत्र जातशिशूनां हि दुर्हेरोद्याज्ञया हतं । शेषाणां किल मध्ये तं मेनिरे पण्डितार्च्चितं ॥५८॥ नाजानंस्ते हि दुर्बोधास्तं शिशुं बधरक्षितं । गलीलायां परे मातापितृभ्यां नीतमेव च ॥५९॥ प्रदेशेऽवमते त्वस्मिन् जातं तं मेनिरे नरं । यं येष्वाख्यं तदापश्यन्नाचार्य्यं त्रिंशदब्दकं ॥६०॥ किंतु तद्भूतये नुन्ना

यथोक्तं पत्तयोऽपि ते । तदकृत्वा पुनर्जग्मुः फरीशिश्रेष्ठयज्वनः ॥६१॥ तैस्तु पृष्टाः किमर्थेऽमुं
यूयं नानयतेति ते । ऊचुरेष नरो यादृङ् नेदृग्वादी कदाचन ॥६२॥ इति श्रुत्वोचुरध्यक्षाः
किं भ्रान्ता यूयमप्यरे । कः सभ्यः कः फरीश्यो वा साक्षाद्वो व्यश्वसीदमुं ॥६३॥ किंतु नीचा इमे
सर्व्वे ईशशास्त्राविदः किल । अभिशप्ता भवन्तीति प्रोक्तं दृप्तैः फरीशिकैः ॥६४॥ तत्सभास्थस्तु
यो येषूं निश्यगात्त्राणपर्व्वणि । भीत्या तदुपविश्वासोऽब्रवीत्तद्द्रोहरुद्धये ॥६५॥ नीकदेम ६१
उवाच ॥ सद्व्यवस्था किमस्माकं दण्डं वदति कंचन । न श्रुतेऽपि तदीयेऽर्थे न ज्ञाते चापि
कर्म्मणि ॥६६॥ गुरुरुवाच ॥ इत्युक्तं नीकदेमस्य सकोपा इतरेऽखिलाः । सभ्याः फरीशिकाः
श्रुत्वा प्रत्यवोचन्निदं वचः ॥६७॥ सभ्या ऊचुः ॥ किं त्वमप्यसि गालील्यस्त्वं कृत्वान्वेषणं
दृढं । गलीलोत्थो न कोऽपीशप्रवाच्यस्तीति विद्यतः ॥६८॥ गुरुरुवाच ॥ ततः स्वं स्वं

गृहं सर्वे जग्मुः सायं तु मोचकः । श्रेष्ठवृक्षाद्रिमारुह्य बेथनीयालये ययौ ॥६९॥ शिष्य उवाच ॥
किं तथा प्रभुरार्य्यः स मार्थागृहमुपस्थितः । ततः सम्यग्जहौ पुण्यं स्वजिघांसूषितं पुरं ॥
७०॥ गुरुरुवाच ॥ तत्रैव क्रोशपर्य्यन्तमगच्छत्स दिने दिने । पर्व्वकाले निशामात्रयापनार्थं
महापुरात् ॥७१॥ न तदा चोत्सवान्तेऽपि स सम्यक् सत्पुरं जहौ । इस्रयेलार्य्य उद्दीप्तो
मध्ये शीयोनवासिनां ॥७२॥ किंतु तत्सभ्यसंवादात्परेऽन्यैरपि मन्दिरे । यैर्वाक्यैः स स्व ६२
ख्रीष्टत्वं व्यूहानूचे विरोधिनः ॥७३॥ तानि वक्ष्येऽचिरात् किंतु या कथा कीर्त्तिता प्रभोः ।
तत्रैतस्य परेऽह्न्येवं तां वदिष्यामि तेऽधुना ॥७४॥ सन्मन्दिरे ह्युपदिशन्तमुषस्यभीतं यूहेऽ
खिले समभिगच्छति ख्रीष्टमार्य्ये । अध्यापकाः किल तदा सफरीश्यकाः स्त्रीमभ्यानयंश्चरधृतां
व्यभिचारहेतोः ॥७५॥ तामन्तरापि च निधाय तमूचुरेषा नारी गुरो व्यभिचरन्त्यृतसाक्षि

दृष्ट्वा । एतादृशोपरि शिलासनमृत्युदण्डो मोस्युक्त एव भवता तु किमुच्यतेऽस्मान् ॥७६॥
इत्युक्तमेतदभिशापनिदानलब्ध्यै धूर्तैः परीक्षकगणैः स निशम्य विज्ञः । तिष्ठंस्तथापि तदयुक्त
मना इवात्माङ्गुल्या तदा यलिखदक्षररूपमूर्व्यां ॥७७॥ प्रश्नं त्विमं कथितवत्स्वपि तेष्वभीक्ष्णां
शेषे शिरो धरणितो दृढमुद्धरन् सः । तानभ्युवाच निरघत्वमतोऽस्ति यस्य युष्मासु सोऽस्यतु
शिलां प्रथमं किलास्यां ॥७८॥ इत्युक्तवानपि पुनर्नतवक्त्र आत्माङ्गुल्यालिखत्स तदयुक्तमना ६३
इवोर्व्यां । आत्माघसंस्मरणमात्रपराजितास्ते त्वाज्येष्ठमेव सकला ययुरेकशोऽतः ॥७९॥
सर्वेषु तेषु बहिरीशगृहाद्गतेषु येषूः शिरो धरणितः पुनरुद्दधार । कंचिच्च तत्र न समीक्ष्य वि
ना स्त्रियं स तामन्तरा प्रणिहितामिदमभ्युवाच ॥८०॥ नारि क्व सन्ति तव खल्वभिशापि
नोऽमी त्वं दण्डिता किमसि नेत्युदिताब्रवीत्सा । केनापि नेत्यथ जगाद स नास्यपि त्वं

मद्दण्डिता प्रचल मा पुनरावराधं ॥८१॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (मोक्षि
पंचशास्त्रस्य लेख्यानुवाक्यस्कन्धाभ्यां इषायभयवाक्यानां द्वादशसर्गाद्योहन्नेः सप्तमाष्टमसर्गाभ्यां
यिहूदीयरीतिविवर्णनेभ्यश्चोद्धृतो) मुक्त्याकरप्रदर्शनं नामाष्टमोऽध्यायः ॥
गुरुरुवाच ॥ मन्दिरे शिक्षयन्तं यं न क्षमाः श्रेष्ठयाजकाः । विरोद्धुं स्वचरैस्तत्र स यूहान्
पुनरब्रवीत् ॥१॥ श्रीयेषूरुवाच ॥ जगतोऽहं प्रकाशोऽस्मि मां यश्चान्वेति मानुषः । न चलेत् ६४
स तमोमध्ये लब्धसञ्जीवनद्युतिः ॥२॥ गुरुरुवाच ॥ इति श्रुत्वा फरीशाणां केऽप्यूचुस्त्वं स्व
गोचरं । साक्ष्यं ददासि तस्मात्ते साक्ष्यस्यानृतता स्फुटा ॥३॥ श्रीयेषूरुवाच ॥ यद्यप्यात्मीय
विषये साक्ष्यं दद्यां तदस्त्यृतं । कुतो ह्यायां क्व चैम्येतद्वेद्मि यूयं तु वित्थ न ॥४॥ शरीरविषयं
यूयं विचारं वाह्यदर्शिनः । कुरुथाहं तु विज्ञोऽपि कस्यचिन्न विचारकृत् ॥५॥ विचारं त्व

करिष्यं चेत्तदापि स्यादृतो मम । विचारो यत एकाकी नास्मि पित्रा युतस्त्वहं ॥६॥ सर्व्वं कर्म्म दृढीकार्य्यं द्वित्रसाक्षिमुखोक्तिभिः । इति युष्मद्व्यवस्थायां किं स्फुटं नावलिख्यते ॥७॥ अहमात्मीयविषये साक्ष्येको ऽस्मि पितापि च । यो हि मां प्रेरयामास साक्षी मद्विषये ऽस्ति सः ॥८॥ गुरूरुवाच ॥ इत्युक्ता विस्मयं गत्वा फरीषाः क्व पितास्ति ते । इत्थं पृच्छन्त ईशस्य पुत्रादुत्तरमाप्नुवन् ॥९॥ श्रीयेषूरुवाच ॥ न मां न पितरं चापि मदीयं वित्थ चेद्धि मां । ६५
अवेत्स्यत तदा मे ऽपि पितरं खल्ववेत्स्यत ॥१०॥ गुरूरुवाच ॥ इत्युक्तं मन्दिरस्यांशे कोषशालाभिधानके । तत्रोपदिशता यूहान् प्रभुणार्य्येण निर्भयं ॥११॥ न कश्चिद्दुर्यहूद्यानां दिधीर्षुरपि तं तदा । समगृह्णाद्यतस्तस्य समयो न ह्युपस्थितः ॥१२॥ अनुभूय तु तेषां स हिंस्रत्वं किल सर्व्ववित् । यथा पूर्व्वं तथाप्युच्चैरेतद्वाक्यं तदाब्रवीत् ॥१३॥ श्रीयेषूरुवाच ॥ गतं मां मृगयि

ञ्चापि मरिष्यध्वे स्वकिल्विषैः । व्याप्ता यत्र ह्यहं गामी तत्र गन्तुं न शक्नुथ ॥१४॥
गुरुरुवाच ॥ इत्थं संश्रुत्य केऽप्यूचुः किमात्मवधमानसः । यत्रैष्यामि न तत्रैतुं शक्नुथेति ब्रवी
त्यसौ ॥१५॥ ईदृक्संशयवाक्यानि प्रवदत्सु परस्परं । तेष्वमित्रेषु तद्व्याख्यां तद्देशतनयो
ऽब्रवीत् ॥१६॥ श्रीयेषूरुवाच ॥ अधःस्थानोद्भवा यूयमहं तूर्द्ध्वस्थलोद्भवः । यूयमेतज्जग
ज्जाता नाहं त्वेतज्जगद्भवः ॥१७॥ तदर्थं चैव मत्प्रोक्तं मृगयित्वापि मां मृषा । परे यूयं मरिष्य ६६
ध्वे व्याप्ता वै निजकिल्विषैः ॥१८॥ सोऽहमस्मीति यूयं हि न प्रतीयात चेद्ध्रुवं । तदा सम्य
गपि व्याप्ता मरिष्यध्वे स्वकिल्विषैः ॥१९॥ गुरुरुवाच ॥ इदमाकर्ण्य दुर्बोधास्ते पप्रच्छुर्यहूदि
नः । त्वं नु कोऽसीत्यथो तेभ्यो ददावुत्तरमीशजः ॥२०॥ श्रीयेषूरुवाच ॥ सोऽहमस्म्येव
यं सम्यगात्मानं वोऽवदं पुरा । विचारं चापि युष्माकं वक्तुं शक्नोम्यहं बहु ॥२१॥ यस्तु मां

प्रेरयामास सत्यरूपोऽस्ति स ध्रुवं । तस्माच्चाशृणवं यानि जगते तानि वच्म्यहं ॥२२॥ गुरुरुवाच ॥ इत्युक्तमपि शृण्वन्त ईशपुत्रेण ते तदा । नाजानन्नीशविषयं तत् ततः सोऽब्रवीत्पुनः ॥२३॥ श्रीयेषूरुवाच ॥ युष्माभिर्नृसुतो ह्यूर्द्ध्वं भवेदुत्थापितो यदा । तदा सोऽस्म्यहमित्येव यूयं ज्ञास्यथ दुर्धियः ॥२४॥ न करोमि स्वयं किंचित्पिता यन्मां त्वशिक्षयत् । तद्वच्मीत्यपि युष्माभिस्तदा ज्ञातं भविष्यति ॥२५॥ यश्च मां प्रेरयामास स मयापि सहस्थितः । न जहौ ६७
मां यतः कुर्वे तत्सन्तोषक्रियाः सदा ॥२६॥ गुरुरुवाच ॥ इदं वाक्यं वदन्तं तं बहवोऽपि यहूदिषु । प्रतीयुरथ तेषां स मनोदार्ढ्यार्थमब्रवीत् ॥२७॥ श्रीयेषूरुवाच ॥ यूयं मदीये यदि तत्ववाक्ये तिष्ठत मेऽतः स्थ यथार्थशिष्याः । ततो दृढं ज्ञास्यथ सत्यमेव सत्येन कार्य्या अपि चानधीनाः ॥२८॥ गुरुरुवाच ॥ इत्युक्तं यूहमध्ये ये प्रतीतिरहिताः स्थिताः । ते

श्रुत्वा प्रतिघाघ्याप्ता इदमभ्यब्रुवन् प्रभुं ॥२९॥ यहूद्या ऊचुः ॥ वयमब्रहवंशीया नाधीनाः
क्वापि कस्यचित् । तत्कथं वक्षि मद्वाक्यैरनधीना भविष्यथ ॥३०॥ श्रीयेषूरुवाच ॥ सत्यं सत्य
मिदं युष्मान् वच्म्यहं यो॰स्ति पापकृत् । स ततः पापदासो॰स्ति तदधीनश्च सर्वदा ॥३१॥
गृहवास्यपि दासस्तु न सदा तत्र तिष्ठति । किंतु तत्स्वामिनः पुत्रस्तस्मिन् वसति सर्वदा ॥
३२॥ अतः स एव पुत्रश्चेद्दासत्वाद्वो विमोचयेत् । तदा स्यात विमुक्ता वै सततं चानधीनकाः ॥ ६८
३३॥ यूयमब्रहवंशीया इति जानामि निश्चितं । जिघांसथ तु मां यस्मान्नास्ते युष्मासु
मद्वचः ॥३४॥ यन्मत्पित्रन्तिके॰ पश्यमहं तत्कथयामि वः । यूयं च स्वपितुः पार्श्वे यद्दृष्टं
कुरुथैव तत् ॥३५॥ यहूद्या ऊचुः ॥ को॰र्थो॰स्ति तव वाक्यानामब्रहो ह्यस्ति नः पिता ।
तत्पुण्यपरिवारान्तःस्थिताश्चापि वयं सदा ॥३६॥ श्रीयेषूरुवाच ॥ चेदब्रहसुता यूयं तदा

तस्य क्रिया अपि । कुर्य्यात तेन तु क्वापि न कृतां कुरुथ क्रियां ॥३७॥ यो नरोऽकथयद्वो हि
सत्यं श्रुत्वेश्वरान्तिके । तं मां जिघांसथातो वै कुरुथ स्वपितुः क्रियाः ॥३८॥ यहूद्या ऊचुः ॥
जारजाता वयं न स्मो न वा सद्धर्म्मवर्ज्जिनः । इस्रयेलादिकानां नः पितैकोऽस्ति किले
श्वरः ॥३९॥ श्रीयेषूरुवाच ॥ ईश्वरश्चेत्पिता वः स्यात्तदैव प्रीणयेत मां । यतोऽहं निःसृतः
सम्यगीश्वरादागतोऽत्र च ॥४०॥ न स्वयं ह्युपतिष्ठामि तन्नुन्नस्त्वथ मे कुतः । न बुध्यध्वे गिरो ६९
यूयं मद्वाक्यश्रवणाक्षमाः ॥४१॥ अन्यस्माद्धि पितुर्यूयमुद्भूता अभिशापकात् । तथा स्वीय
पितुः कामान् संपूरयितुमिच्छथ ॥४२॥ नरघात्यादितोऽभूत्स सत्यभावेऽर्पितोऽपि च । ना
तिष्ठत्तत्र यस्मान्न सत्यतासीत्तदन्तरे ॥४३॥ तादृशश्च यदा मिथ्या वक्त्यात्मीयं तदा गुणं ।
उदीरयति यस्मात्स मिथ्यावाङ् निजतातवत् ॥४४॥ अहं तु यत एवेह सत्यं युष्मानुदे

स्यं । तद्धेतोरपि यूयं मां न विश्वसिथ दुर्हृदः ॥४५॥ युष्माकं कोऽघकर्तृत्वं मम साधयितुं
क्षमः । अतः सत्यं यदि ब्रूयां कस्माद्व न प्रतीथ मां ॥४६॥ ईश्वराद्यो हि संभूत ईशोक्तिं
स निशामयेत् । यत ईशोद्भवा न स्थ ततो न शृणुथ ध्रुवं ॥४७॥ यहूद्या ऊचुः ॥ वयं किं नेश
संभूता यहूदीया अतो न किं । त्वं समार्य्यमतो भूतग्रस्तश्चेत्यृतमुच्यते ॥४८॥ श्रीयेषूरु
वाच ॥ भूतग्रस्तोऽस्मि नाहं वै पितरं त्वाद्रिये निजं । यूयं चानादरं कर्तुं मामीशोद्भूत ७०
मिच्छथ ॥४९॥ नतु स्वीयामहं कीर्तिमन्विच्छामि कदाचन । तामन्विच्छन् किलान्योऽस्ति
विचारं च समाचरन् ॥५०॥ सत्यं सत्यमिदं यूष्मान् वच्मि यो यो वचो मम । पालयेत्
स ततो मृत्युं न पश्येदेव शाश्वतं ॥५१॥ यहूद्या ऊचुः ॥ भूतग्रस्तस्त्वमित्येव निश्चितं वचसो
ऽपि ते । इदानीं विद्म गालील्य वयं खल्विस्त्रयेलजाः ॥५२॥ अब्रहो हि मृतस्तद्वन्मृताश्चेश

प्रवाचिनः । त्वद्वचःपालकस्त्वन्तं न स्वदेतेति जल्पसि ॥५३॥ पितुर्नोऽप्यब्रहात्प्रेतात्सत्प्रव
कृगणाच्च किं । त्वं श्रेयानस्यथात्मानं कियन्तं किल कत्थसे ॥५४॥ श्रीयेषूरुवाच ॥ आद्रि
येयाहमात्मानं चेत्तदा नादरोऽस्ति मे । यं स्वेशं वक्थ यूयं तु स मामाद्रियते पिता ॥५५॥
युष्मदज्ञातमपि तं वेद्मि चेत्तु न वेद्मि तं । इति ब्रूयां तदा मिथ्यावाक् स्यां यूयमिव ध्रुवं ॥
५६॥ किंतु जानाम्यहं सत्यं पितरं निजमेव तं । तच्छ्रुतं पुण्यवाक्यं च पालयामि भुवि ७१
स्थितः ॥५७॥ अब्रहश्च पिता वोऽपि मद्वासरदिदृक्षया । उल्ललासैव तद्दृष्टिं प्राप्नुवांश्चाप्य
मोदत ॥५८॥ यहूद्या ऊचुः ॥ पंचाशद्वर्षको नासि संप्रत्यपि ततोऽब्रहं । समपश्यः कथं
प्रेतं सहस्राब्दद्वयात्पुरा ॥५९॥ श्रीयेषूरुवाच ॥ सत्यं सत्यमिदं युष्मान् प्रब्रवीम्यब्रहो
द्भवान् । अब्रहस्य समुत्पत्तेः पूर्वमप्यस्म्यहं सदा ॥६०॥ गुरुरुवाच ॥ इत्युक्तास्तद्वधार्थं

ते शिलाः क्षेप्तुमतोलयन् । आत्मानं गोपयित्वा तु मन्दिरात्स वहिर्ययौ ॥६१॥ शिष्य उवाच ॥
प्रभुः किमवतीर्णस्तान् स्वनित्यत्वविरोधिनः । जहौ यैरूशलेमीयान्जिघांसूनुत्सवे गते ॥
६२॥ गुरूरुवाच ॥ अन्यदप्यधिकं कर्म्म साक्षाच्छीयोनवासिनां । ईशोद्भूतः प्रकाशः स स्व
गतेः प्रागदर्शयत् ॥६३॥ मन्दिराद्धि तदा गच्छन् स्वशिष्यैः पुनरन्वितः । आजन्मान्धं
नरं कंचित्स ददर्श महापुरे ॥६४॥ तं समालोच्य शिष्याणां केचिद्दीनं पथि स्थितं । समपृच्छ ७२
न्महाचार्य्यं तस्य दुर्भाग्यकारणं ॥६५॥ श्रीयेषूशिष्या ऊचुः ॥ अस्य जन्मान्धता केषां फलं
स्वात्मकर्म्मणां । किं स्वीयानां गुरो किं वा मातापितृकृताङ्हसां ॥६६॥ श्रीयेषूरुवाच ॥
न तस्यैव न तन्मातापित्रोर्वा पापभुक्तये । तज्जन्मान्धत्वमस्तीशक्रियाणां दर्शनाय तु ॥६७॥
यावदास्ते दिनं तावन्मया प्रेरयितुः क्रियाः । कर्त्तव्याः सुमहायत्नाद्रजनी ह्युपतिष्ठति ॥६८॥

तस्यां कोऽपि न शक्नोति ध्रुवमावरितुं क्रियाः । यावज्जगति तिष्ठामि तावत्स्यां तु जगद्द्युतिः ॥
६९॥ गुरूरुवाच ॥ इत्युक्त्वा मोचको भूमौ क्षिप्तैः स्वमुखविन्दुभिः । कृत्वा कर्द्दममन्धस्य
नेत्रयोरन्वलिम्पत ॥७०॥ अथ तं सोऽभ्युवाच त्वमितः प्रस्थाय सांप्रतं । सिलोहसरसि
स्नानं शुद्धये किल कुर्विति ॥७१॥ एतद्वाक्यानुसारेण गतोऽन्धः प्रेषिताभिधे । तस्मिन् स
रसि स स्नात्वा दृष्टिमान् पुनरागमत् ॥७२॥ प्रतिवासिगणास्त्वस्य पूर्वद्रष्टृगणास्तथा । ७३
ऊचुः सोऽयं न किं योऽग्रे समासीनोऽत्र भिक्षुकः ॥७३॥ सशङ्केष्विति पृच्छत्सु तेषु केचिद्विनि
श्चितं । स एषोऽस्तीत्यवोचन्तान्ये तु कोऽप्यस्ति तन्निभः ॥७४॥ विस्मितानामिमं श्रुत्वा संलापं
प्रतिवासिनां । स नरः प्रावदत्स्पष्टं यं संस्मरथ सोऽस्म्यहं ॥७५॥ इत्याश्चर्य्यवचः श्रुत्वा
निश्चयं प्राप्य ते जनाः । पप्रच्छुस्तं कथं दृष्टिमथाप्तोस्त्वं हठादिति ॥७६॥ भिक्षुक उवाच ॥

येषूर्नाम नरः कश्चित् स्वयं कृत्वा हि कर्द्दमं । मन्नेत्रे चावलिप्यैव सिलोहे स्नातुमादिशत् ॥
७७॥ तस्यादेशानुसारेण प्रस्थायाहं सरोऽम्भसि । स्नानं कृत्वा ततः सम्यगच्छां दृष्टिमवाप्नवं ॥
७८॥ गुरुरुवाच ॥ इति संश्रुत्य तेऽपृच्छन् कुत्र ते सोऽस्ति दृष्टिदः । प्रत्युवाचाप्तदृष्टिस्तु न
जानामीति भिक्षुकः ॥७९॥ ततस्ते तमवाप्ताक्षं फरीशान् श्रेयसः प्रति । आनयन् येऽपि
संपृच्छ्य तादृशं प्रापुरुत्तरं ॥८०॥ भिक्षुक उवाच ॥ मम नेत्रद्वयेऽलिम्पत्कर्द्दमं खल्वसौ नरः । ७४
ततः स्नानमहं कृत्वा स्वच्छां दृष्टिमवाप्नवं ॥८१॥ गुरुरुवाच ॥ प्रधानेष्वथ पृच्छत्सु तत्क्रिया
तु कदाभवत् । ज्ञापितेषु च तां भूतां विश्रामदिवसे किल ॥८२॥ मतभेदोऽभवत्तेषु केचि
च्चूचुरसंशयं । नेशानुन्नोऽस्त्यसौ यस्माद्विश्रामनाहं न मन्यते ॥८३॥ इति श्रुत्वा परे तूचुर्नरः
पापी कथं क्षमः । इयदैश्वर्य्यचिह्नानि स्वयं दर्शयितुं जनान् ॥८४॥ इत्थं भूते विवादेऽतो

भिक्षुकं पुनरब्रुवन् । तव दृष्टेः प्रदातासौ कीदृशो मन्यते त्वया ॥८५॥ तथा पृष्टोऽब्रवीद्भिक्षु
र्मयैवेशप्रवाच्यसौ । सुमन्यत इति श्रुत्वा कुपितास्तेषु भूरयः ॥८६॥ आशशङ्किरेवातस्त
दृष्टिप्राप्तिसत्यतां । तन्मातापितरौ चैतन्निश्चयार्थं समाहूयन् ॥८७॥ तौ तु भीत्या प्रधाना
नां येषूखृष्टत्ववादिनः । प्रागादिष्टवतां क्षेप्तुं मठात्प्रत्यूचतुस्तथा ॥८८॥ भिक्षुकपितरा
वूचतुः ॥ पुत्रोऽयं नाविति ज्ञातं तज्जन्मान्धत्वमेव च । निश्चितं ननु तद्दृष्टिर्भूता साक्षा ७१
त्किलावयोः ॥८९॥ तदुपायं न जानीवो न वा तत्कारिणं स तु । युवा प्राप्तवया वक्तुं क्षमः
प्रष्टव्य एव सः ॥९०॥ गुरुरुवाच ॥ इत्युक्तं भीतयोः श्रुत्वा तयोर्भूयः समाहूयन् । फरीशाः
प्राप्तदृष्टिं तमिदं चाभ्यब्रुवंस्तदा ॥९१॥ फरीशा ऊचुः ॥ ईश्वरः केवलः स्तव्यस्त्वया दृष्ट्या
प्तिहेतुतः । नरोऽसौ पापकारीति ज्ञातमस्माभिरेव तु ॥९२॥ भिक्षुक उवाच ॥ किमसौ

पापकारी स्यान्नवेत्यज्ञो ऽस्मि खल्वहं । अन्धो भूत्वा तु पश्यामीदानीमित्येव वेद्म्यहं ॥१३॥
फरीशा ऊचुः ॥ किं चकार त्वसौ तुभ्यं नरो भिक्षुक निश्चितं । तव वा नेत्रयोस्तेन कथं दृष्टिः
समर्पिता ॥१४॥ भिक्षुक उवाच ॥ पूर्वं तदवदं युष्मान् ननु शुश्रुव मे वचः । भूयः शुश्रू
षवः किं स्थ तच्छिष्योभवनेच्छया ॥१५॥ फरीशा ऊचुः ॥ त्वमेवामुष्य निर्लज्ज मूढ शिष्यो बभू
विथ । मोसिमात्रस्य शिष्यास्तु तच्छास्त्रालम्बिनो वयं ॥१६॥ मोसिमीशो ऽभ्युवाचेति जानीमो ७६
निश्चयादयं । किंत्वसौ कुत आयातो ऽस्माभिर्न ज्ञायते ऽपि तत् ॥१७॥ भिक्षुक उवाच ॥
सच्चक्षुर्दायको यो ऽस्ति स युष्माभिर्न बुध्यते । भुवने कुत आयात इत्याश्चर्यवचः स्थितं ॥१८॥
पापिनां न शृणोतीशो ऽर्थनां किंतु तदर्च्चिनः । तदिच्छापालकस्यापि जनस्यैव शृणोति सः ॥
१९॥ इति विद्मो ध्रुवं किंतु जन्मान्धायापि केनचित् । दृष्टिर्दत्तेति न क्वापि श्रुतमाजग

इद्भवात् ॥१००॥ ईश्वरेण स चेन्नुन्नो न स्यान्मद्दृष्टिदायकः । तदा नाचरितुं किंचिच्छक्
यात्म ह्यसंशयं ॥१०१॥ फरीष्या ऊचुः ॥ पापैर्जल्पाक सम्यक् त्वं व्याप्तो जनिमवापिथ ।
ततस्त्वं कथमस्मान् रे समुपादेष्टुमर्हसि ॥१०२॥ गुरुरुवाच ॥ इत्युक्त्वा प्राप्तदृष्टिं तं दम्भक्रोधा
न्विता नराः । वहिश्चक्रुर्मठात्सम्यग् येषूविश्वासकारणात् ॥१०३॥ तत्क्रियां तु प्रभुः श्रुत्वा
नरं वर्त्मन्यवाप्तवान् । अभ्युवाच किमीशस्य पुत्रं विश्वसिषि ध्रुवं ॥१०४॥ इति पृष्टः ७७
पुरान्धो योऽभवत्स प्रत्यवोचत । मद्विश्वास्यः प्रभो कः स इत्युक्तोऽथाब्रवीत्प्रभुः ॥१०५॥ त्व
दृष्टः स तथा सार्द्धं त्वया वदति योऽस्ति सः । अथासौ प्रणतोऽवादीत्प्रभो विश्वसिमीत्यतः ॥
१०६॥ श्रीयिषूरुवाच ॥ अदृशां दृष्टये नूनमन्धीभूत्यै च दर्शिनां । विचारार्थं किलैतस्मिन्
भुवनेऽहं समागतः ॥१०७॥ गुरुरुवाच ॥ प्रभूक्तमिदमाकर्ण्य फरीष्याः केऽप्युपस्थिताः ।

तत्र प्रोचुः किमन्धाः स्मस्तथा त्वद्गोचरे वयं ॥१०८॥ श्रीयेषूरुवाच ॥ यद्यन्धाः स्यात
यूयं वै तदा स्यातानघा अपि । किंतु पश्याम इत्युक्तेऽधुना युष्मदघं स्थितं ॥१०९॥ सत्यं
तु वो वच्म्यधुनाहमेतद् द्वारैव शालां न विशेदवीनां । किंत्वन्यमार्गेण य एव तत्रारो
हेत्स चोरोऽस्त्यपि तस्करश्च ॥११०॥ द्वारा तु यस्तत्र विशेन्नरो वै सत्योऽत एवास्ति स मेष
पालः । सोऽन्तश्च दौवारिकवेशितोऽवीन् स्वान् वक्ति नाम्ना नयते वहिश्च ॥१११॥ तथा ७८
निजावींस्तु नयन्पुरस्ताच्चलंश्च तैः सोऽनुसृतोऽप्यशङ्कं । तच्छब्दविज्ञैर्ह्यपरं तु ते नान्वियुर्गि
रज्ञा हि ततो द्रवेयुः ॥११२॥ गुरुरुवाच ॥ इत्युक्तं प्रभुणा श्रुत्वा फरोष्या नावजग्मिरे ।
तस्यार्थमत एवैतत्तान्पुनः सोऽब्रवीद्वचः ॥११३॥ श्रीयेषूरुवाच ॥ सत्यं तु वो वच्म्यहमेव सत्यं
द्वारं भवामीह सदा ह्यवीनां । ये मत्पुरासन्नखिलास्तु चोरास्ते संश्रुता नत्वविभिः कदा

चित् ॥११४॥ द्वारस्म्यवीनां हि तया च यो यः प्रवेष्टुमिच्छेद् विशालमध्ये । तदा स मुक्तिं
किल सुप्रवेशं सुनिर्गतिं चाप्स्यति भोजनं च ॥११५॥ तांश्चोरितुं त्वेव विनिग्रहीतुं हन्तुं च
चोरः समुपैति धूर्तः । अहं तु तज्जीवनलब्धयेऽस्मि तद्वर्द्धनार्थे च समागतोऽत्र ॥११६॥
सत्पालको योऽविकृते प्रदद्यात् स्वजीवनं सोऽस्म्यहमेव भद्रः । यो नाविपालो भृतकस्तु वै
स्याद् वृकं स दृष्ट्वा विजहाति मेषान् ॥११७॥ अतो वृकेणावय आहता वै विच्छिन्नभिन्नाश्च ७९
भवन्ति भूमौ । भृतो यतो वेतनमात्रचेता न मेषपालस्तु पलायितोऽस्ति ॥११८॥ सत्पाल
कोऽहं निजमेषबोद्धा तथैव सम्यङ् निजमेषबुद्धः । ज्ञाये हि पित्रा पितरं तथाहं वेद्म्यात्मजीवां
निदधाम्यविभ्यः ॥११९॥ अन्ये तु मे सन्त्यवयो य एतच्छालान्तरे न स्थितिमाप्नुवन्तः ।
तेऽप्यत्र नेयाः शृणुयुर्गिरं मे स्यादेकवृन्दं च तथैकपालः ॥१२०॥ अहं स्वजीवां निदधामि नूनं

तस्याः पुनर्लब्धय एव पश्चात् । नान्यैर्हृता सा निहिता स्वयं तु तस्मात्पिता प्रीणयति ध्रुवं मां ॥१२॥ स्वयं स्वजीवां ह्यधुना निधातुं पुनश्च तां लब्धुमपि क्षमोऽस्मि । निजाज्ञयाहं पितुरेव पूर्वमवाप्नुवं प्रेरयितुः समाज्ञां ॥१२२॥ गुरुरुवाच ॥ इत्युक्तान्मतभेदोऽभूत् केऽप्यूचुर्हि यहूदिनः । भूतग्रस्तस्तथोन्मत्तोऽस्त्ययं शृणुथ तत्कुतः ॥१२३॥ इत्युक्तास्त्वब्रुवन्नन्ये भूतग्रस्त वचो नहि । इदं दृष्टिं कथं भूतोऽन्धेभ्यो दातुं क्षमो भवेत् ॥१२४॥ इति श्रीख्रृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (योसिपंचशास्त्रस्य योन्यनुवाक्यस्कन्धाभ्यां योहन्नेरष्टमनवमदशम सर्गेभ्यश्चोद्धृतो) जगत्प्रकाशो नाम नवमोऽध्यायः ॥

शिष्य उवाच ॥ अवतीर्णः प्रकाशः स सत्पालकवचस्तथा । प्रोच्य यैरूषलेमीयान् किं चकार परे गुरो ॥१॥ गुरुरुवाच ॥ तथा कस्मिन्नपि स्थाने गालील्ये स उपादिशत् ।

यूहान् पूर्वसमैर्वाक्यैरेकशो वै महागुरुः ॥२॥ श्रीयेषूरुवाच ॥ नेत्रं ते देहदीपोऽस्ति तस्मिं
श्चाच्छे स्थिते ऽखिलं । द्युतिपूर्णं वपुस्तस्मिन्मलिने तु तमःप्लुतं ॥३॥ तस्मादन्तःस्थितो यस्ते
दीपोऽस्त्येकः स एव न । तमोरूपो भवेदित्थं सावधानस्त्वमेध्यतः ॥४॥ तव देहेऽथ को
ऽप्यंशो यदि न स्यात्तमोऽन्वितः । तदा दीपोज्ज्वलेनेव सम्यग्द्युत्यावृतो भवेः ॥५॥ गुरु
रुवाच ॥ इत्येवोपदिशन् येषूः फरीष्यस्य निमन्त्रणं । भोजनाय प्रतिश्रुत्य ततस्तस्यावि ८०
शद्गृहं ॥६॥ भक्ष्यलब्ध्यै समासीनमस्नातं तु समीक्ष्य तं । विस्मितोऽतो गृहस्वामी प्रभुणा
समभाष्यत ॥७॥ श्रीयेषूरुवाच ॥ वाह्यं पानान्नपात्राणां फरीष्या मृष्ठ यत्नतः । किंतु वो
ऽभ्यन्तरं सम्यग् लोभादिमलपूरितं ॥८॥ यो वाह्यमङ्गा रचयांचकार सोऽभ्यन्तरं किं न
तथा ससर्ज । दानं तु यूयं कुरुत स्वरिक्थात्तदा पवित्रं सकलं भवेद्वः ॥९॥ गुरुरुवाच

इदं निन्दावचः श्रुत्वा कोऽपि तत्र निमन्त्रितः । धर्म्मशास्त्री तदावादीत् प्रभुवाक्यासहिष्णु
हृत् ॥१०॥ धर्म्मशास्त्र्युवाच ॥ एतैर्वाक्यैस्त्वमाचार्य्य फरीष्यान्नहि केवलं । गर्हसे किंतु
नः सर्वान्नियमाद्युपदेशिनः ॥११॥ श्रीयेषूरुवाच ॥ गर्हणीया मया यूयं तथा रे धर्म्मशास्त्रि
णः । शिष्यवर्गं हि दुःसाध्यभारान् वाहयथाधिकान् ॥१२॥ इयतः कार्य्यभारांस्तु
तदाज्ञादायकाः स्फुटं । अङ्गुल्यग्रैरपि स्वीयैर्यूयं न स्पृशथ कुचित् ॥१३॥ गुरुरुवाच ॥ ८२
इदं गर्हणमापन्नाः शास्त्रिणः सफरीष्यकाः । विविधप्रश्नसंघैस्तमपिपीडयिषंस्तदा ॥१४॥
तन्मुखाच्चोत्तराण्येवापेक्षमाणा निरन्तरं । तथा तदभिशापस्य निदानं विचिचेष्टिरे ॥१५॥
तादृश्या हिंसया त्वेषां सर्व्ववित् सोऽपराजितः । परे गेहात्फरीष्यस्य निर्गतः सात्मशिष्यकः ॥
१६॥ ततोऽतिवृहति व्यूहेऽन्योन्यं संमर्द्दयत्यपि । तं प्रत्येव समायाते स्वशिष्यान् स तदा

ब्रवीत् ॥१७॥ श्रीयेषूरुवाच ॥ धर्म्मेच्छुम्न फरीषाणां यो.स्ति स्फीतिकरो रसः । तस्माद्वै प्रथमं यूयं सावधानाः स्त हे हिताः ॥१८॥ छन्नं ह्यस्त्यधुना यद्यत्तत्परे स्यात्प्रकाशितं । गुप्यते चाधुना यद्यत्सर्व्वैस्तज्ज्ञास्यते परे ॥१९॥ गुरुरुवाच ॥ तदा को.प्यब्रवीद्व्यूहमध्ये मद्भ्रातरं गुरो । आज्ञापय मया सार्द्धं विभक्तुं पैतृकं धनं ॥२०॥ इत्यर्थितो.ब्रवीद्येषूर्नर मां को.क्ष दर्शने । विभागादेशने वापि युष्माकं हि न्ययोजयत् ॥२१॥ इत्युक्त्वाधिकदायेच्छुममुं काम ८३ हरः प्रभुः । ततः सर्व्वानपि व्यूहांस्तत्स्थितानिदमब्रवीत् ॥२२॥ श्रीयेषूरुवाच ॥ धनलोभा द्रतो यूयं सावधानाः स्त यत्नतः । नहि द्रव्याधिकत्वेन कस्यचिज्जीवनस्थितिः ॥२३॥ कथां मे शृणुत क्षेत्रं कस्यापि धनिनः क्वचित् । बहु शस्यं ददौ सो.थ चिन्तयामास तुष्टहृत् ॥२४॥ किं करिष्याम्यहं स्वीयबहुशस्यार्पणाय ह । इयत्स्थानं न मे ह्यस्तीति संचिन्त्य परे

करत् ॥२५॥ इदं कार्य्यं मया भङ्क्त्वा कुशूलानधुना स्थितान् । निर्मेया नूतनाः श्रेष्ठाः
सर्वद्रव्यधृतिक्षमाः ॥२६॥ स्वं जीवं च तदा वक्ष्ये संचिता प्रचुराधुना । तवैव प्रिय संपत्ति
र्बहुवत्सरभुक्तये ॥२७॥ इतो विश्राम्य खाद त्वं पिव क्रीडस्व सन्ततं । इति संचिन्तयन्तं
तु मर्त्यमीशस्तमब्रवीत् ॥२८॥ अद्य निश्यपि ते जीवो याचितव्यो ऽज्ञ निश्चितं । ततस्त्वत्सं
चिता सम्पदेषा कस्य भविष्यति ॥२९॥ इत्युक्तनरतुल्यो ऽस्ति स वै यो यः स्वभुक्तये । संचि 84
नोति धनं किंतु नास्तीशविषये धनी ॥३०॥ गुरुरुवाच ॥ तथा स सकलान् व्यूहान् प्रोच्य
लोभविगर्हणं । आत्मविश्वासिनां वर्गं तत्परे ऽभ्यब्रवीदिदं ॥३१॥ श्रीयेषूरुवाच ॥ मा
भैषीः क्षुद्र वृन्द त्वं यतो युष्मत्पिता महान् । स्वेच्छया परमं राज्यं युष्मभ्यं संप्रदास्यति ॥
३२॥ स्वान्यशेषाणि विक्रीय दानं दत्त तथाप्नुत । रौप्याधाराण्यजीर्णानि स्वर्गे च निधि

मय्ययं ॥३३॥ तत्र चोरो हि नायाति न कीटो वात्ति यत्र च । तिष्ठेद्युष्मन्निधिस्तत्र भवेद्वो
हृदयं तथा ॥३४॥ निबद्धकटयो यूयं ज्वलद्दीपाश्च तिष्ठत । भृत्या इव विवाहाद् यैरायास्यन्
स्वाम्यपेक्ष्यते ॥३५॥ ततस्तेनाहते द्वारे सद्यस्तं वेशयन्ति ते । प्रहरे स्याद्द्वितीयेऽपि तृतीये
वा तदागतिः ॥३६॥ मङ्गला ये तथा प्राप्ता अनिद्राः स्वामिना स हि । तान्निबद्धकटीभूतः
समासीनान् प्रसेविता ॥३७॥ इति वो वच्म्यहं सत्यं भवनस्वामिना तु चेत् । आयास्यति ८५
कदा चोर इत्यज्ञास्यत निश्चितं ॥३८॥ जागरित्वा तदा गेहं स नाहास्यत्कदाचन । न
चोरैर्वापि तद्भित्तिर्भेदनीयाभवत्कुचित् ॥३९॥ प्रस्तुतास्तु तथा यूयं तिष्ठेत यत एव हि ।
नरपुत्रः कदागामीति विज्ञातुं न शक्नुथ ॥४०॥ गुरुरुवाच ॥ इत्युक्ते प्रस्तरोऽवादीत्प्रभो
ऽस्मान् किं विशेषतः । एतदादिशसि त्वं नु किं वा सर्वजनांस्तथा ॥४१॥ श्रीयेषूरुवाच ॥

यं स्वे विशिष्टं परिवारवर्गे प्रत्येकयोग्यान्नविभागदत्त्यै । स्वामी करिष्यत्यधिपं स कोऽस्ति
न्यस्यप्रतीतिः किल बुद्धिमांश्च ॥४२॥ तथा स्ववर्गे हितकालभक्ष्यं यं स्वाम्युपायन् विभजन्त
माप्ना । स एव धन्यः प्रभुणा च तस्मात् सर्वाधिकारेऽपि नियोजनीयः ॥४३॥ स चिन्त
येच्चेन्नु विलम्ब्यतेऽत्रागन्तुं गृहे वै प्रभुणा ममेति । अतोऽपि भृत्यान्भृतिकांश्च हन्यात् खादेत्पि
बेच्चामदमेव चेतसः ॥४४॥ तदैव तस्य प्रभुरेत्य गेहं स्वीयं हठादत्यनपेक्षितेऽह्नि । क्षणे ८६
ऽप्रतीष्टे च तमाशु भिन्देद्द्विधाप्रतीतैर्विभजेच्च सार्द्धं ॥४५॥ आत्मप्रभोस्तु प्रविदन् य इच्छां
न प्रस्तुतोऽभून्न च तामकार्षीत् । बह्वाहतः स्यात्स वरं तदज्ञो यो दण्ड्यकर्त्तात्पमथाहतः सः ॥
४६॥ यस्मै हि भृत्याय बहु प्रदत्तं तथैव तस्माद्बहु याचनीयं । यस्मिंश्च केचिन्निदधुर्भृशं वै
प्रतीक्षितारो भृशमेव तस्मात् ॥४७॥ भूमावग्निमहं नूनं सन्निक्षेप्तुं समागतः । ज्वलितो

॰प्यधुना भूयात्स इतीच्छाम्यहं कथं ॥४८॥ स्नानरूपेण संस्कार्य्यैः संस्कारेणाचिरादहं । याव
देष न पूर्णः स्यात्तावत्पीड्ये कियद्दृढं ॥४९॥ भुव्यहं सन्धिमाधातुमागतोऽस्मीति वित्थ किं ।
नेति वो वच्म्यहं किंतु तत्राधास्यामि भिन्नतां ॥५०॥ एकस्मिन् हि गृहे पंच विभिन्नाः स्युः
परस्परं । विरुन्धीरंस्त्रयो द्वाभ्यां सह द्वावपि च त्रिभिः ॥५१॥ पिता पुत्रेण पुत्रश्च पित्रा
मातापि कन्यया । कन्या मात्रा वधूः श्वश्र्वा श्वश्रूर्वध्वा विरोधकृत् ॥५२॥ इति श्रीखृष्ट ८७
संगीतायां सत्पालकचरित्रपर्व्वणि (लूकस्यैकादशद्वादशसर्गाभ्यामुद्धृतो) लोभादिविरोधनं नाम
दशमोऽध्यायः ॥

गुरुरुवाच ॥ इत्थं शिष्यान् विशिष्टान्स समुच्च प्रस्तरादिकान् । आत्मीयागमनार्थाय सुप्र
स्तुत्युपदेशनं ॥१॥ स्वागतेः प्रागपि प्रोच्य यद्वयं भूमिमण्डले । प्रत्येतृभिः सहाप्रत्येतृणां

घोरविरोधनं ॥२॥ ततः कृत्स्नानपि व्यूहांस्तन्नीमागतिलक्ष्मणां । अविवेचिन एवेमं प्र
स्तुत्यादेशमब्रवीत् ॥३॥ श्रोयेषूरुवाच ॥ पश्चाद्दिशि यदा मेघमुदयन्तं प्रपश्यथ । तदा
ब्रूथ भवेद्वृष्टिरित्यथैषा भवत्यपि ॥४॥ यदा दक्षिणवायुं च वान्तं संपश्यथ ध्रुवं । तदा ब्रूथ
भवेद्ग्रीष्म इत्येवं स भवत्यपि ॥५॥ अन्तरीक्षभुवोर्लक्ष्माण्यनुमातुं ध्रुवं क्षमाः । यूयं कथमिमं
कालं विवेक्तुं नैव शक्नुथ ॥६॥ किं स्वयं चापि यूयं रे यथार्थं सुविविड्क्थ न । अतः स्वीया ८८
रिभिः सार्द्धं सन्धिं कुरुत यत्नतः ॥७॥ यद्येतत्समये नैष कार्य्यः कारान्तरे तदा । बन्धनी
याः स्थ हिंसाया दण्डार्थं ह्यक्षदर्शिना ॥८॥ गुरुरुवाच ॥ मनसामाशुशुश्रर्थमेतत् प्रवदति प्र
भौ । ईशपुत्रे ऽखिलाज्ञातद्वितीयागत्यनेहसि ॥९॥ तं प्रत्युपस्थिताः केचित्पीलातावरितं बधं ।
गालील्यानामनेकेषां कथयामासुरद्भुतं ॥१०॥ रौम्यो ऽसौ हि तिबर्य्येण सम्राजा क्रूरमानसः ।

स्थापितो योऽभवद् भूपः ससामार्य्ययिहूदिनां ॥११॥ स गालील्यान् हि तान्स्वीयप्रदेशादागतान्
पुरे । यिरूषलेमके तत्र कलहं चापि कुर्व्वतः ॥१२॥ हठादाक्रम्य शस्त्रास्त्रैः प्रवृत्तान् यज्ञकर्म्म
सु । तन्मेध्यमानपश्वस्रैस्तद्रक्तान्यप्यमिश्रयत् ॥१३॥ तद्गालील्यक्रतुध्वंसकथामाकर्ण्य भैरवीं ।
तस्याः कथयितॄन् वाक्यमेतत्प्रत्यवदत्तदा ॥१४॥ श्रीयेषूरुवाच ॥ गालील्येष्वखिलेष्वासन्
पापकारितमा अमी । इयदापत्प्रपत्त्यर्थमिति मन्यध्व एव किं ॥१५॥ नेति युष्मानहं ८९
वच्मि किंतु यद्यङ्हसां कृते । यूयं नानुतपेतैवं नङ्क्ष्यथाप्यखिलास्तदा ॥१६॥ येऽप्यष्टादशसं
ख्याश्च सिलोहसरसोऽन्तिके । चूर्णिता अभवन्सम्यक् पतनादुच्चसद्मनः ॥१७॥ त एवेत्थं हता
मर्त्याः पापकारितमाः स्थिताः । सर्व्वयिरूषलेमीयेष्विति किं ह्यनुभूयते ॥१८॥ नेति वो
वच्म्यहं किंतु यूयं चेदङ्हसां कृते । अनुतापं न कुर्य्यात नङ्क्ष्यथैवं तदाखिलाः ॥१९॥ गुरुरु

ष्वाच ॥ तथा रौम्यासिभिः कार्य्यं प्रोच्य सोऽननुतापिनां । सम्यङ्नाशं यहूद्यानां पश्चात् सपुर सद्मनां ॥२०॥ ततस्तदनुतापस्य हितकाले समाप्तये । एतदृष्टान्तवचनं तान् समभ्यवदत् प्रभुः ॥२१॥ श्रीयेषूरुवाच ॥ उडुम्बरतरुर्द्राक्षोद्याने कस्यापि संस्थितः । तत्रान्विच्छन्फलं स्वामी न प्राप्नोदथ सोऽब्रवीत् ॥२२॥ उद्यानाध्यक्ष वृक्षेऽस्मिन्नहो संवत्सरत्रयं । फलमेवाहमन्वैच्छं नाप्नवं तु कदाचन ॥२३॥ अतस्तं छिन्धि भूमिं सोऽवरुणद्धि हि किंकृते । इत्युक्तः स्वामिनोद्यानाध्यक्षः प्रत्यवदत्तदा ॥२४॥ एनमप्यधिकं वर्षमनुमन्यस्व तत्स्थितिं । स्वामिन् यावदहं तस्य खनेयं परितः श्रमात् ॥२५॥ गोमयादि च तत्स्थाने निदध्यां स ततो यदि । फलं दद्यात्तदा भद्रं न चेत् तं छेत्स्यसि ध्रुवं ॥२६॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (लूकस्य द्वादशत्रयोदशसर्गाभ्यामुद्धृतो) नाशनिवारणहितसमयादेशो नामैकादशोऽध्यायः ॥

गुरुरुवाच ॥ उपदेष्टा महान्पूर्ब्बं गालील्यासु परिभ्रमन् । तत्रैकस्मिन् शनेर्घस्त्रे विवेशैक मठान्तरं ॥१॥ तद्दृष्टा तत्र भूतेनार्त्ता स्त्री दौर्बल्यकारिणा । याष्टादशसमाः कुब्जा सम्यगुत्थातुमक्षमा ॥२॥ मोक्त्राभ्यैरत सद्यः सा मुक्ता त्वं स्वामयादिति । करस्पृष्टार्ज्जवं चातः प्राप तुष्टाव चेश्वरं ॥३॥ तद्दृष्ट्वा तु मठाध्यक्षः शनिविश्रामलङ्घनात् । कुपितः सकलं व्यूहमतो

ऽवादीन्मठस्थितं ॥४॥ मठाध्यक्ष उवाच ॥ ईशाज्ञयाहानि षडेव सन्ति प्रवृत्तये सर्व्वहितक्रिया ९१

णां । तेष्वेव सुस्थीभवितुं गदार्त्तैर्युष्माभिरेत्यं न तु विश्रमाहे ॥५॥ गुरुरुवाच ॥ निषेधमिममाकर्ण्य वाह्यधर्म्मोपदेशिनः । अमुष्मान्मोचको विज्ञ इदं प्रत्यब्रवीद्वचः ॥६॥ श्रीयेषूरुवाच ॥ धर्म्मलिङ्गिन्न किं विश्रामाहे वोऽप्यखिलो नरः । बन्धनाद् गां खरं वा स्वं मुक्त्वा पाययितुं नयेत् ॥७॥ इमां त्वब्रहपुत्रीं वै बद्धामप्यभिशापिना । अष्टादशसमा मोक्तुं विश्रामाहेऽर्हति न किं ॥

৮॥ गुरुरुवाच ॥ इत्युक्त्वापन्नपाथाप्ता भूता येषूविरोधिनः । सर्व्वस्त्वानन्दत गूहो नानात
च्छुभकर्म्मतः ॥९॥ तथा विश्वासवीजानि तत्पुरान्तः समर्प्य सः । अन्यपुर्ग्राममध्येऽपीश
राज्योत्तीरुपादिशत् ॥१०॥ यहूद्याभिमुखे मार्गे चलन् पृष्टः स केनचित् । किं मोक्ष्यगणो
ऽल्पोऽस्ति प्रभो इत्यथ सोऽब्रवीत् ॥११॥ श्रीयेषूरुवाच ॥ प्रवेष्टुं संकटे द्वारे यूयमेव सु
यत्नतः । चेष्टध्वं बहवो ह्येतदिच्छवोऽपि न शक्नुयुः ॥१२॥ उत्थितो हि गृहस्वामी यदा ९२
द्वारं बबन्ध वै । तदा यूयं तदाहत्य ब्रूयातोच्चैर्वहिःस्थिताः ॥१३॥ स्वामिन् स्वामिन् गृहे
ऽस्मांस्त्वं वेशयानुग्रहादिति । युष्मांस्त्वभ्यन्तरस्थः स वदेत् सम्यङ् न वेद्मि वः ॥१४॥ इति
प्रत्युदिता यूयं ब्रूयात भवदन्तिके । आद्मापिवाम च त्वं चास्मत्प्रतोलीष्ववशिक्षयः ॥१५॥ इत्थं
श्रुत्वापि स ब्रूयाद् युष्मद्वासं न वेद्म्यहं । मत्तो दूरमपेतैव विधर्म्माचारिणोऽखिलाः ॥१६॥ तर्हि

स्यात् क्रन्दनं घोरं दन्ताघातस्वनश्च वः । ईशराज्यान्निरस्तानां तदन्तःस्थांश्च पश्यतां ॥१७॥
अब्रहेशहकौ भद्रौ याकोबं चैव तादृशं । तैस्त्रिभिः सह मोस्यादीन् सर्व्वांश्चेशप्रवाचिनः ॥१८॥
भूयसोऽन्यांस्तथा ये ये प्रतीच्याः प्राग्दिशोऽपि च । उदीच्या दक्षिणस्याश्चैत्यासीरन् राज्य
ऐश्वरे ॥१९॥ अहो केचिदिदानीं ये पश्चिमास्ते स्युरादिमाः । आदिमा अधुना ये च सन्ति
स्युस्तेऽपि पश्चिमाः ॥२०॥ गुरुरुवाच ॥ इत्युक्तवन्तमभ्येत्य प्रभुं केचित्फरीशकाः । गालील्या १३
इदमभ्यूचुर्भयकृत्यै वचस्तदा ॥२१॥ फरीशा ऊचुः ॥ प्रदेशाद्द्रुतमस्मात्त्वं वहिर्याह्यन्यनीवृतं ।
हेरद्यो ह्यन्तिपा भूपोऽस्मदीयस्त्वां जिघांसति ॥२२॥ गुरुरुवाच ॥ श्रुत्वेत्थं तान् प्रभुर्न्नुन्नान् भू
भुजा वेद बिभ्यता । स्वयं हन्तुं यहूद्यैस्तु कार्य्यमन्विच्छतैव तत् ॥२३॥ अतः सोऽखिलभयज्ञो
न वा हैरोद्यकाद्बलात् । न वा पैलातकात्त्रस्यन्निदं धूर्त्तानुवाच तान् ॥२४॥ श्रीयेषूरुवाच ॥ ग

त्वा यूयमिदं फेरू तं ज्ञापयत वञ्चकं । हेरोदितनयं वाक्यं तत्प्रदेशस्थितस्य मे ॥२५॥ अत्राद्य
च श्वश्च विनिःक्षिपामि भूतानहं नृन्प्रतिकुर्व्व एवं । अहो परश्वस्तु समाप्य सर्व्वं चरित्रमेत
द्भवितास्मि सिद्धः ॥२६॥ किंत्वद्य च श्वश्च परश्व एवं मयात्र कार्य्यं भ्रमणं विहिंसं । नेशप्र
वक्तुर्हि बधो वहिः स्याद्यन्तृस्थलात् क्वापि यिरूषलेमात् ॥२७॥ अहो विहेयोऽस्ति मयाल
यो वो न द्रक्ष्यथेतश्च गलीलका मां । यावन्न तर्ह्येव यिरूषलेमे कुर्य्यात मत्स्वागतिगानमैशं ॥ ९४
२८॥ त्राहीश्वरास्मानथ सोऽस्तु धन्य आयाति नो यः परमेशनाम्ना । इत्युक्तिमीशात्मवृतस्य
राज्ञो जयात्मिकां मद्विषये वदेत ॥२९॥ शिष्य उवाच ॥ गलीलाभ्रमणं स्तोकं भद्या च श्वः
परेऽहनि । जयात्मिका चरित्रान्ते सिद्धिः कीदृगभूद्गुरो ॥३०॥ गुरुरुवाच ॥ मोक्तृमाहात्म्य
कथने सिद्धिः सा पारमार्थिकी । वक्तव्या ते परे शिष्य न बोद्धव्या हि सांप्रतं ॥३१॥ तस्या

रम्भेऽपि मद्वाच्या गीता या दाविदुक्तिभिः । दावित्पुत्रस्य खृष्टस्य स्वागतिः सा महापुरे ॥३२॥
तत्पूर्व्वं त्ववशिष्टं यच्चरित्रं सन्नृपस्य वै । अल्पमासीयमेवातोऽहन्त्वयोक्तीङ्गितं तदा ॥३३॥
गलीलायां पिराये च यहूद्ये चापि नीवृति । तत्सर्व्वमधुना शिष्य कथयिष्याम्यनुक्रमात् ॥३४॥
इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (दाविदीयगीतानामष्टादशाधिकशततमाल्लूकस्य त्रयोदशसर्गाच्चोद्धृतो) गलीलान्तिमभ्रमणं नाम द्वादशोऽध्यायः ॥ ९५

गुरुरुवाच ॥ प्रधानेन फरीषेण गलीलास्थेन केनचित् । विश्रामदिवसे येषूर्भोजनाय निमन्त्रितः ॥१॥ तद्गृहे तु गतं सर्व्वे तं निन्दाहेत्ववाप्तये । समैक्षन्त तदग्रे हि कोऽप्यतिष्ठज्जलोदरी ॥२॥ अथ तज्ज्ञः प्रभुः प्रोचे फरीषान् शास्त्रिणोऽपि च ॥ किं विश्रामदिने योग्या चिकित्सा रोगिणां न वा ॥३॥ इति पृष्टास्तु ते किंचिन्न प्रत्यूचुरथ प्रभुः । तं जलोदरिणं

स्पृष्ट्वा सुस्थं प्रास्थापयत्तदा ॥४॥ ततस्तानवदत् को वो गर्त्ते निपतितं हठात् । गर्द्दभं गामविं
वा स्वं शनौ नोत्थापयेद्द्रुतं ॥५॥ एतत्प्रश्नोत्तरं दातुं न क्षमास्तेऽथ सोऽखिलान् । दृष्ट्वा निम
न्त्रितान् श्रेष्ठपीठान्विचिन्वतः समब्रवीत् ॥६॥ श्रोयेषूरुवाच ॥ त्वं विवाहोत्सवाय स्या यदैकेन
निमन्त्रितः । श्रेष्ठपीठान्तरे तर्हि मा चेष्टस्व समासितुं ॥७॥ न चेत् त्वत्तो नरः श्रेयानागच्छेद्
युवयोस्त्वतः । निमन्त्रको गृहस्वामी त्वां वदेत्सर्व्वसम्मुखे ॥८॥ प्रधानाय स्थलं देयं त्वयैतस्मा १६
इतीरितः । त्वं तदा लज्जितो भूत्वान्त्यस्थाने प्रचलिष्यसि ॥९॥ किंतु तत्र समाहूतोऽन्त्ये त्वं
ह्युपविश स्थले । अतो निमन्त्रकर्त्ता ते त्वामभ्येत्य वदेद्गृही ॥१०॥ हे प्रियोच्चतरस्थानमारोहे
ति त्वमीरितः । लप्स्यसे किल मर्य्यादां निमन्त्रितगणान्तिके ॥११॥ आत्मगौरवकारी हि
परैः क्षुद्रीकरिष्यते । आत्मक्षुद्रत्वकारी तु गुरूकार्य्यः परैस्तथा ॥१२॥ गुरुरुवाच ॥ एत

दृष्टान्तवाचा स उपादिश्य निमन्त्रितान् । तथान्यैर्वचनैरेव गृहस्वामिनमादिशत् ॥
१३॥ श्रीयेषूरुवाच ॥ त्वं महाभोजनं दद्याश्चेत्तदा मा निमन्त्रय । वयस्यभ्रातृबन्धून् स्वाना
न्धनान् वा प्रतिवासिनः ॥१४॥ न चेत् त्वां ते तथा सर्व्वे स्वेष्वतो भोजनेष्वपि । निमन्त्रये
युरत्यन्तं तव स्याच्चैहिकं फलं ॥१५॥ किंतु स्वयं यदा दद्यास्त्वं महाभोजनं तदा । दरि
द्रान् दुर्बलान् खञ्जानन्धांश्चापि निमन्त्रय ॥१६॥ धन्योऽतः स्या न किंचिद्धि प्रतिदातुं क्षमा ९६
अमी । भव्यं कर्म्मफलं ते तु पुनःसंजीवने सतां ॥१७॥ गुरुरुवाच ॥ इति श्रुत्वाब्रवी
त्कश्चिद्भोजिनां राज्य ऐश्वरे । भक्ष्यं योऽद्यात् स धन्योऽस्तीत्याकर्ण्योवाच तं प्रभुः ॥१८॥
श्रीयेषूरुवाच ॥ सुमहद्भोजनं कुर्व्वन् बहूंस्तत्र न्यमन्त्रयत् । नरः कोऽपि परे त्वस्य योग्यकाल
उपस्थिते ॥१९॥ तान्सर्व्वान् प्रति भृत्यं स्वमाह्वातुं प्रैरयत्तथा । अहो भोक्तुं समायात प्रस्तु
०

न्यखिलानि हि ॥२०॥ इदं श्रुत्वापि सर्वे ते स्वस्य कल्पयितुं तदा । हेतूनगमनस्यैवारे
भिरे सकृदेकशः ॥२१॥ आद्योऽवादीन्मया क्षेत्रं क्रीतं तच्च समीक्षितुं । सम्यग्गन्तव्यमेवातः
कृपया त्वं क्षमस्व मां ॥२२॥ अन्योऽवादीत्तथाक्रीणां गवां पंचयुगान्यहं । तान्परीक्षितुमे
वैमि कृपयातः क्षमस्व मां ॥२३॥ उचेऽन्यः स्त्री मयोढा तो न गन्तुं शक्यतेऽधुना । इत्थं
सर्वोत्तराणि स्वाकृत्यात् स्वाम्यशृणोत्ततः ॥२४॥ कुपित्वा चाब्रवीद्गच्छ पुर्य्या रथ्याध्वसु १८
द्रुतं । निःस्वदुर्बलखञ्जान्धान् समाहूय च मद्गृहे ॥२५॥ इदं कृत्वाब्रवीद्भृत्यः स्वामिन्नाज्ञाप
यो यथा । तथा कृतमिदानीं तु स्थानमप्यवशिष्यते ॥२६॥ ततः स्वाम्यादिशद् वाह्याध्वसु
सीमासु च व्रज । मद्गेहपूर्त्तिपर्य्यन्तं नरांश्चाकृष्य वेशय ॥२७॥ पूर्व्वं निमन्त्रितानां हि कोऽप्य
मीषां नृणां ध्रुवं । मदीयाद्भोजनाद्भद्रान्नास्वदिष्यति किंचन ॥२८॥ गुरुरुवाच ॥ इत्थमुक्त्वा

प्रभुर्वर्गमीशाह्वानावमानिनां । परीक्षाध्यापकादीनां शास्त्रं श्रुतवतां मुहुः ॥२९॥ परे नि
गत्य तद्गेहाद्रथ्यावर्त्मस्वतिव्रजन् । अन्वितो बहुभिर्व्यूहैर्वचः प्रोवाच तान्प्रति ॥३०॥
श्रीयेषूरुवाच ॥ मामन्वेतुमना यः स्वं पितरं मातरं स्त्रियं । सन्ततिं सोदरान् भगनीस्तथा स्वं
जीवमेव च ॥३१॥ न सम्यगवमन्येतात्यासक्तिविषये मम । स वै मे भवितुं शिष्यो न शक्नोति
कदाचन ॥३२॥ यश्च स्वशूलमुत्थाप्य नानुगच्छति मां ध्रुवं । सोऽपि मे भवितुं शिष्यो न शक्नोति ९९
कदाचन ॥३३॥ को ह्युच्चसद्म युष्मासु निर्म्मित्सुस्तद्ध्ययं पुरा । समासीनः किलैकाकी न सं
ख्याति सुयत्नतः ॥३४॥ न चेत् तन्मूलमाधाय समाप्तुं त्वक्षमः परे । अवहस्येत सर्वैः स उच्च
भित्तिप्रदर्शिभिः ॥३५॥ ते हि ब्रूयुर्महाकर्म्म समारेभे पुमानसौ । स्वशक्त्यज्ञः समाप्तुं तु ना
शक्नोत्स्वधनैरिति ॥३६॥ को वा राजेतरेणापि राज्ञा योद्धुमधिक्रमन् । अयुतद्वयसेनेना

युतमात्रबलान्वितः ॥३७॥ न पुरैवं समासीनश्चिन्तयत्यतियत्नतः । चेच्छक्तः स्यान्न वा स्वीयशत्रोर्वारयितुं बलं ॥३८॥ न चेद् दूतान् स राजानं दूरस्थमपि तं प्रति । प्रेरयेद्यत्नतः सन्धेरुपायान् याचितुं द्रुतं ॥३९॥ तथा युष्मासु यः पूर्वं स्वचिन्ताभिर्न संत्यजेत् । सर्वद्रव्यं स मे शिष्यो भवितुं न क्षमो ध्रुवं ॥४०॥ लवणं शुद्धमेवास्ति किंत्वेतदपि चेत्परे । विरसं स्यात्तदा भूयः कथं स्वादु करिष्यते ॥४१॥ न क्षित्यै सफलं तत्स्यान्न वा गोमयराशये । वहिः १०० क्षिप्यं तु यस्य स्तः श्रुत्यै कर्णौ शृणोतु सः ॥४२॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (लूकस्य चतुर्दशसर्गादुद्धृत) ईश्वराह्वानं नाम त्रयोदशोऽध्यायः ॥

गुरुरुवाच ॥ एतस्मिंस्तु गलीलायां चरमे भ्रमणे प्रभोः । करसंग्राहिणोऽनेके वाचः श्रोतुं समागताः ॥१॥ तद्दृणायाः समूचुस्तु फरीष्याध्यापकास्तदा । पापिनोऽप्यनुगृह्णाति तैः

सार्द्धं चात्यसौ ध्रुवं ॥२॥ इति तेषां वचः श्रुत्वा रौम्यभृत्यान् यहूदिकान् । सदावमन्यमानानां
स तदा प्रत्यवोचत ॥३॥ श्रीयेषूरुवाच ॥ शतमेषेश्वरः को वो मध्येऽपचिनुयाद्यदि । तदेकं
न तदन्विष्ट्यै शेषांस्त्यजति कानने ॥४॥ यत्नात्तं चानुमृग्यैकं प्राप्नुयाच्चेत्तदा मुदा । स्कन्धो
परि समारुह्य नयति स्वनिकेतने ॥५॥ प्रतिवासिन आहूय तत्र बन्धूंश्च वक्ति सः । मया
त्यानन्दत सहापचितावि ह्यवाप्तं ॥६॥ तथा नूनं परावृत्तेरनुतप्तैकपापिनः । उत्थितो यो १०१
भवेद्धर्षस्तावति स्वर्गमण्डले ॥७॥ सोऽनावश्यानुतापानामेकोनशतधर्म्मिणां । सुस्थितेरुत्थि
ताद्धर्षाच्छ्रेयान्स्यादिति वच्मि वः ॥८॥ दशानां कर्षपादानां क्षुद्रकोषस्य वेश्वरी । का
दैवात्तद्गणस्यैकं परेऽपचिनुयाद्यदि ॥९॥ न तदा दीपमुज्ज्वाल्य गृहं सम्मार्ज्य चाखिलं ।
तन्मात्रप्राप्तिपर्य्यन्तं यत्नतः परिचेष्टते ॥१०॥ आप्त्वा त्वाहूय सा वक्ति सखीः सम्प्रति

वासिनीः । मयानन्दत सार्द्धं मेऽपचितार्थाप्तिहेतुतः ॥११॥ तादृङ् नूनं परावृत्तेरनुतप्तैक
पापिनः । भवति स्वर्ग्यदूतानां हर्ष इत्येव वच्मि वः ॥१२॥ कथां मे शृणुत द्वौ स्तः पुंसः
पुत्रावथो तयोः । कनिष्ठः पैतृकद्रव्यांशं स्वं पितरमार्थयत् ॥१३॥ भागमाप्त्वाचिराद्दूरदेशे
प्रस्थाय तत्र सः । कामेनातिव्ययं कुर्वन् सर्वद्रव्यमपाचिनोत् ॥१४॥ दुर्भिक्षे तत्र जाते तु दीनो
भूत्वा स कस्यचित् । तद्देशवासिनो भृत्योऽभवद्वेतनलब्धये ॥१५॥ तेन नुन्नश्च तत्क्षेत्रे कोलानां १०३
पालनाय सः । अलब्धान्नोऽनुमत्यैच्छत्कोलखाद्यबुसान्यपि ॥१६॥ अतः सोऽचिन्तयद्गेहे
पितुर्मे भृतकाः कति । प्रचुरं भक्षयन्त्यन्नमहं तु क्षुधया म्रिये ॥१७॥ उत्थाय पितरं स्वीयं
गत्वा वक्ष्यामि हे पितः । पापकार्यस्मि ते साक्षात् स्वर्गस्य विषयेऽप्यहं ॥१८॥ तव पुत्रस्य
नामाहं धर्तुं नार्होऽस्मि सांप्रतं । अतो वैतनिकानां ते गणे मां दययार्पय ॥१९॥ इत्युक्त्वा

स इतः सद्योऽचलत्पैत्रालयं प्रति । तद्दूरस्थोऽपि मार्गे तु पित्रा स समदृश्यत ॥२०॥ यः
पुत्रकरुणाविष्टोऽभिद्रुत्यालिङ्ग्य चापि तं । गले धृत्वा सचुम्बं च ततोऽभाषत सूनुना ॥२१॥ हे
पितः स्वर्गविषये साक्षात्ते चापि पापकृत् । अहं त्वत्पुत्रनामापि धर्तुं नार्होऽस्मि सांप्रतं ॥२२॥
इति श्रुत्वा पिताहूय स्वभृत्यानादिशद् वहिः । वस्त्रमानयत श्रेष्ठं साङ्गुलीयकपादुकं ॥२३॥
तत्सर्वं परिधाप्यैनं ततो वत्सं सुपोषितं । समानीय घ्नतास्माकं सहर्षाये हि भुक्तये ॥२४॥ यत 103
एवैष पुत्रो मे मृतो भूत्वानुजीवति । स तथापचितो भूत्वा प्राप्तो भवति सांप्रतं ॥२५॥ इत्युक्ता
नुक्रमेणैवारेभिरे हृष्टभोजनं । ज्येष्ठपुत्रस्तु तत्काले क्षेत्रे वहिरवर्तत ॥२६॥ उपतिष्ठंस्तु
गेहे स वाद्यनृत्यरवश्रुतः । विस्मयं प्राप्य पप्रच्छैकं भृत्यमिदमस्ति किं ॥२७॥ स प्रत्यूचे
तव भ्राता पुनरेतस्ततः पिता । तं सुस्थं प्राप्य सन्तुष्ट आदिशद्वत्समारणं ॥२८॥ इत्थं

श्रुत्वा सरोषः स नैच्छद्वेष्टुं गृहान्तरे । अतोऽन्तस्तं समाह्वातुमायातस्तत्पिता बहिः ॥२९॥
ज्येष्ठोऽवादीत्तु कत्यब्दांस्त्वत्सेवाकार्यहं स्थितः । नापि लङ्घितवान् नूनं तवादेशं कदाचन
॥३०॥ तथापि सखिभिः स्वीयैः सह कर्त्तुं मुदोत्सवं । नैकं क्षुद्रमपिच्छागं त्वत्तः क्वचिद्
ऽवाप्नवं ॥३१॥ यदा तु तव पुत्रोऽयं वेश्यासंगेन ते धनं । वितीर्य्यायाति तस्मै तं वत्सं
हंसि सुपोषितं ॥३२॥ इत्यभ्युक्तः पितावादीद्धे पुत्र त्वं मया सह । सदा तिष्ठसि यद्य १०४
च्च विद्यते मे तवापि तत् ॥३३॥ मुदोत्सवाह्लादकृतिस्तु नोऽह्यी भ्राता त्वदीयो यत एष
नूनं । मृतोऽपि भूत्वा पुनराप जीवं भूत्वा तथैवापचितः स आप्तः ॥३४॥ इति श्रीखृष्ट
संगीतायां सत्पालकचरित्रपर्व्वणि (लूकस्य पंचदशसर्गादुद्धृतो) ऽपचिताप्तिहर्षो नाम चतु
र्दशोऽध्यायः ॥

गुरुरुवाच ॥ एवं प्रोच्यानुतप्तेषु मोक्ता सर्व्वपितुर्दयां । स्वशिष्यान् नूतनदृष्टान्तकथामेतां
समब्रवीत् ॥१॥ श्रोयेषूरुवाच ॥ आसीत्कस्यापि धनिनः कर्म्माध्यक्षो ऽव्यवस्थितः । संघ
ड्वितरणात्सो ऽतो ऽभिशप्तः स्वामिनं प्रति ॥२॥ अथाहूयाब्रवीत्तं स शृणोमि किमिदं त्वयि ।
देह्यायंव्ययसंख्यां स्वां स्यान्नेतो ऽध्यक्षता हि ते ॥३॥ इत्याज्ञां प्राप्य सो ऽध्यक्षो ऽचिन्तयद्व्या
कुलात्मकः । करणीयमितः किं हा मया प्रच्युतकर्म्मणा ॥४॥ स्वामी मे ऽध्यक्षताध्वंसी खनितुं १०५
त्वक्षमो ऽस्म्यहं । वृत्त्यर्थं भिक्षितुं चैव न शक्नोम्यतिलज्जया ॥५॥ अहो मे स्थिरसंकल्पो
मनस्येतर्ह्युपस्थितः । ततो ऽहं हतकर्म्मापि नृभिर्गृह्येय सद्मसु ॥६॥ इति संचिन्त्य सर्व्वान् सो ऽधम
र्णानेकशः प्रभोः । समाहूयाद्यमप्राक्षीत् त्वं कियद्धारयस्यृणं ॥७॥ तेनोक्तो द्विशतद्रोणं तैलस्येति
तदाब्रवीत् । स्वसंख्यापत्रमादाय त्वमाश्वेकशतं लिख ॥८॥ इत्यादिश्य तथापृच्छद्द्वितीय

मधमर्णकं । त्वद्गृहीतमृणं नाथात्कियदित्यथ सो ऽब्रवीत् ॥९॥ शस्यगोणीसहस्रे द्वे इत्यु
क्तो ऽध्यक्ष आदिशत् । स्वसंख्यापत्र आशु त्वं द्विगुणाष्टशतं लिख ॥१०॥ एतत्तु छलमा
कर्ण्यैवाध्यक्षस्याप्यधर्म्मिणः । स्वामी तं प्रशशंसैव महादक्षत्वहेतुतः ॥११॥ स्वजातेर्व्यवहारे
हि संसारतनयाः सदा । सत्प्रकाशात्मजेभ्यो वै क्रियादक्षतराः स्थिताः ॥१२॥ वच्मि वो ऽहं
तथाधर्म्म्यात्कौवेरिकधनात् सखीन् । लभध्वं यैर्हतप्राणा गृह्णीध्वं नित्यसद्मसु ॥१३॥ यः क्षुद्रे
ऽर्थे ऽस्ति विश्वास्यः स विश्वास्यो महत्यपि । क्षुद्रे यश्चास्त्यधर्म्म्यो ऽर्थे स महत्यप्यधर्म्मकः ॥
१४॥ अतो यूयमधर्म्म्ये ऽपि कौवेरिकधने न चेत् । विश्वास्याः स्यात युष्मासु सद्धनं को नि
धास्यति ॥१५॥ अविश्वास्याश्च चेद्यूयं स्यातान्यस्यापि वस्तुनि । तदा यत्सन्निजं प्राप्यं
तद्वः को वस्तु दास्यति ॥१६॥ न निजं यच्चसद्द्रव्यं तदध्यक्षाः स्थ खल्वतः । द्वयोर्नीचरितुं

सेवां शक्नुथेशकुवेरयोः ॥१७॥ गुरुरुवाच ॥ इदं सर्वं तु संश्रुत्य फरीशा धनलोभिनः ।
तस्मिन् हासमुपक्रान्तास्ततः सत्प्रभुणोदिताः ॥१८॥ श्रीयेषूरुवाच ॥ नृसाक्षादेव यूयं स्थ
स्वशुद्धीकारिणो ध्रुवं । हृदयानि तु युष्माकं जानात्येव महेश्वरः ॥१९॥ अपि वादरणीयं
यद्विद्यते नरगोचरे । समीपे परमेशस्य घृणितं खलु तद्भवेत् ॥२०॥ मोस्युक्तं शास्त्रमीशस्य
तथा चेशप्रवाचिनः । भूमौ स्नापकयोहन्नेः कालपर्य्यन्तसंस्थिताः ॥२१॥ तत्परे त्वीशराज्य १०७
स्य सुवार्त्ता भासते भुवि । धार्म्मिकाश्चाखिलास्तत्र प्रविशन्ति बलादपि ॥२२॥ मोसेस्तु
धर्म्मशास्त्रस्यैकविन्दोरपि लोपनात् । भवेच्छक्यतरो लोपो ह्यन्तरीक्षभुवोरपि ॥२३॥
यो यो विवर्जयेत्पत्नीं स्वां स व्यभिचरत्यतः । तथा व्यभिचरत्येवमुद्वहेद्यो विवर्जितां ॥२४॥
नर आसीद्धनी कश्चित् सूक्ष्मधूमलवस्त्रभृत् । स्वादुभोजनसारेण तृप्यमाणो दिने दिने ॥२५॥

तद्वारस्थश्च लाजारो नाम भिक्षुर्व्रणैर्वृतः । तदुच्छिष्टान्नभुक्तीच्छुः श्वभिर्लीढव्रणः सदा ॥२६॥
मृतात्वमृत भिक्षुः सो ऽब्रहजानां सुखान्विते । सकलानां सतां स्थाने स्वर्ग्यदूतैरनायि च ॥२७॥
असावपि धनी प्रेतो ऽर्पितो भूमौ च बन्धुभिः । पातालस्थस्तु दुःखैः स उग्रैः संपीडितो ऽभवत् ॥
२८॥ उर्द्धचक्षुस्ततो भूत्वा सो ऽब्रहं दूरसंस्थितं । तत्क्रोडस्थं च लाजारं दृष्ट्वोच्चैरवदत्तदा ॥
२९॥ पितरब्रह कारुण्यादेतज्ज्वालार्द्दितस्य मे । जिह्वां सेक्तुं नु लाजारं जलार्द्राङ्गुलिना नुद ॥ १०८
३०॥ इत्थं प्रार्थितवान् स्मृत्वा स्वद्वारे पतितं पुरा । भिक्षुं सो ऽथाब्रहेणेदं सत्पित्रा प्रत्यभा
ष्यत ॥३१॥ पुत्र स्वानि शुभानि त्वमवाप्नोः पूर्वजीवने । अशुभानि तु तर्ह्याप्नोल्लाजार इति सं
स्मर ॥३२॥ इदानीं तु पुराक्लिष्टः शान्तिसौख्यं भुनक्त्यसौ । गतसर्वसुखस्त्वं तु व्यथया पीड्य
से तथा ॥३३॥ वरमप्यन्तरे ऽस्माकं युष्माकं च स्थितं महत् । कुहरं ह्यनतिक्राम्यं तर्नुकामै

रपि ध्रुवं ॥३४॥ अतो येऽत्र स्थिता गन्तुं शक्नुवन्ति न वोऽन्तिके । न च नोऽन्तिक आयातुं
युष्मत्पार्श्वस्थिताः क्षमाः ॥३५॥ इत्युक्तः स तदावादीदतो हे पितरब्रह । मत्पित्रालयमध्ये
त्वं लाजारं दयया नुद ॥३६॥ तेन मे भ्रातरः पंच भूस्थिताः सत्यसाक्षिणा । आदिष्टव्या
इदं पीडास्थानं नैतुं कदाचन ॥३७॥ इत्याकर्ण्याब्रहोऽवादीन्मोसिस्तेषां किलान्तिके । तथा
चेशप्रवक्तारः श्राव्यं तद्वच एव तैः ॥३८॥ इत्युक्तः सोऽब्रवीदार्तो नैवमब्रह चेत्त्वियात् । को १०९
ऽपि तान् प्रेतलोकात् तेऽनुतपेयुर्ध्रुवं तदा ॥३९॥ इत्थं श्रुत्वाब्रहोऽवादीन्मोसेर्यदि वचांसि ते ।
नचापीशप्रवक्तॄणां शृणुयुः स्तब्धमानसाः ॥४०॥ तदा यद्यपि तत्साक्षात् प्रेतलोकात्समुत्थितः ।
कोऽप्यागच्छेत्तथाप्येवं न मन्येरन्कदाचन ॥४१॥ गुरुरुवाच ॥ ईशराज्याविदां तद्वन्मोसिशास्त्रा
वमानिनां । संसारासक्तमनसां व्यभिचारादिकारिणां ॥४२॥ पाताले भावि दौर्भाग्यं प्रोच्य तान्

धनलोभिनः । फरीष्यान् प्रति गालील्यान् भ्रष्टैरोग्यसेविनः ॥४३॥ सर्व्वज्ञो मोचकः पश्चात्
स्वीयानामुपदिष्टये । शिष्याणां वच एततान् पूर्व्ववत् समवोचत ॥४४॥ श्रीयेषूरुवाच ॥
धर्म्मपातनहेतूनामनिरोध्या किलागतिः । आनीयन्ते त्विमे येन भूमौ धिङ्नरमेव तं ॥४५॥
तस्यार्थे हि भवेच्छ्रेयः पेषणीप्रस्तरेण चेत् । ग्रीवायां सह बद्धः स प्रक्षिप्येतातलेऽर्णवे ॥४६॥ साव
धानास्तु यूयं स्त भ्राता त्वद्विषये यदि । पापी स्याद्गर्हे चेत्तु स्यात्सोऽनुतप्तः क्षमस्व तं ॥४७॥ सप्त ११०
धा सोऽपराध्यापि दिने चेत्सप्तधा वदेत् । अनुतप्तोऽहमित्येवं तथापि त्वं क्षमस्व तं ॥४८॥
गुरुरुवाच ॥ इदं श्रुत्वाब्रुवन् शिष्या विश्वासं नः प्रवर्द्धय । इति तैरर्थितो वाक्यमेतत्प्रत्य
वदत्प्रभुः ॥४९॥ अणुसर्षपतुल्योऽपि विश्वासो यदि वो भवेत् । ब्रह्मदारुं तदाप्येनं प्र
वक्तुं शक्नुयात वै ॥५०॥ उन्मूलो भव हे वृक्ष तिष्ठेतश्चोदधाविति । अथ वाक्यानुसारेण

युष्माकं तन्नवेदपि ॥५१॥ कस्तु वो भृत्यमायातं क्षेत्रतो मेषपालकं । कर्षकं वा वदेत्सद्यो गत्वा विश्राम्य खल्विति ॥५२॥ न वा ब्रूयात्पुरा त्वं मे यत्नात् प्रस्तुत्य भोजनं । तत्र मां चापि सेवित्वा परे त्वं पिब खाद च ॥५३॥ इत्याज्ञानुक्रमाद्भृत्यं कृतवन्तं श्रमादपि । किं प्रशंसत्य तो नाथोऽनुगृहीत इव स्वयं ॥५४॥ नेत्थं मम वितर्कोऽस्ति तस्माद्यूयं मदीयकाः । शिष्याः सर्व्वं यथाज्ञाप्तं यदा यत्नादकुर्व्वत ॥५५॥ तदापि ब्रूत भृत्याः स्मो हे स्वामिन् निष्फला वयं । यत् ११ कर्त्तुं योग्यमस्माभिस्तन्मात्रं कृतमित्यलं ॥५६॥ इति श्रीख्रीष्टसंगीतायां सत्पालकचरित्रपर्व्वणि लूकस्य षोडशसप्तदशसर्गाभ्यामुद्धृतो विस्वस्तभृत्यसज्जनं नाम पंचदशोऽध्यायः ॥

गुरुरुवाच ॥ अन्तिमं स्वं समाप्यार्य्यो गलीलाभ्रमणं तदा । यिरूषलेमं हेमन्ते गन्तुमारभत प्रभुः ॥१॥ नीवृतोश्चैव सीमानं स गलीलासमार्य्ययोः । उपस्थाय तदा ग्रामे कस्मिंश्चित्

प्राविशत्सृतौ ॥२॥ तत्र तं दृश कुष्ठार्त्ता अपवित्रत्वहेतुतः । यथाशास्त्रोदितं दूरे स्थिता अभि
ननर्द्दिरे ॥३॥ येषूःस्वामिन् दयस्वास्मानित्युक्तस्तैर्नरौघतः । वहिःक्षिप्तैर्दयालुः स दीनान्प्रत्य
ब्रवीदिदं ॥४॥ श्रीयेषूरुवाच । याजकानभियातेतो यूयं खल्वहरोणजान् । मलशुद्धिपरी
क्षार्थे यथादिष्टाः स्थ मोसिना ॥५॥ गुरुरुवाच ॥ इत्युक्ता यज्वनः स्वीयतनूर्दर्शयितुं गताः ।
कुष्ठिनो वर्त्ममध्ये तु देहसौस्थ्यमवाप्नुवन् ॥६॥ अतस्तेष्वेक आत्मीयसौस्थ्यज्ञः पुनरागतः । ११२
उच्चैरीशस्तुतिं कृत्वा येषूपादतलेऽपतत् ॥७॥ तन्महानुग्रहार्थं च धन्यवादं चकार सः ।
सामार्य्योऽप्यथ मोक्तृतद्वचः स्पष्टमुदैर्य्यत ॥८॥ श्रीयेषूरुवाच ॥ किं न पूतीकृता आसन् दशा
मीऽन्ये नव कु ते । किं न सर्वगणे केऽपीशं स्तोतुं पुनरागताः ॥९॥ अन्यदेशिन एतस्माद्विना
सत्तोत्रजा अपि । कुशले त्वं तु सामार्य्य याहि स्वश्रद्धयोद्धृतः ॥१०॥ तत्परे प्रचलन्मोक्ता

स्त्पुरं प्रति कैरपि । फरीष्यै राज्यमैशं स्यात्कदेत्यापृष्ट आह तान् ॥११॥ श्रीयेषूरुवाच ॥ न
वै समालोचनयुक्तमैशमागामि राज्यं नव तर्हि वाच्यं । तत्तत्र पश्येति तदत्र वेति यतो ऽन्तरे
वः किल राज्यमैशं ॥१२॥ आगामिन्यपि काले तु यूयं शिष्या मम ध्रुवं । नरपुत्रस्य घस्त्राणा
मेकमीक्षितुमिच्छव: ॥१३॥ न तथापि समीक्षेध्वं तदा चेत् पश्य तत्र वा । अत्र वेति नरा
ब्रूयुस्तान् यूयं मानुगच्छत ॥१४॥ यथा ह्येकदिशो विद्युद्विपरीतदिगन्तरे । आकाशे ११
दीप्यते तद्वन्निजे ऽह्नि नृसुतो भवेत् ॥१५॥ तत्पूर्वं तु बहुक्लेशाः सोढव्यास्तेन भूतले ।
प्राप्तव्यश्चावमानो ऽपि गोत्रस्यैतस्य वर्गतः ॥१६॥ यथा काले हि नोहस्य तन्नावारोहणावधि ।
भुक्तिपानविवाहादिप्रवृत्तेष्वखिलेष्वपि ॥१७॥ भूमिवासिषु निःशङ्कं ततो ऽकस्माज्जल
प्लवः । सर्वप्रलयकार्यायात् तथा स्वाहे नरात्मजः ॥१८॥ यथा लोटस्य काले वा सुदूमपुर

ासिषु । तस्य निर्गतिपर्य्यन्तं भुञ्जानेष्वतिनिर्भयं ॥१९॥ विक्रीणत्सु तथा क्रीणत्स्वालयान्
व्ययत्सु च । वर्पत्सु चापतद्गन्धाश्माग्निवर्षो ऽखिलान्तकः ॥२०॥ अन्तरीक्षात्तथा सम्यगा
ीयदिवसे हठात् । दुष्टनाशी नृपुत्रो ऽपि ह्यवभासिष्यते भुवि ॥२१॥ दिने ऽमुष्मिन् गृहात्
स्वीयाद्यः स्याद्वहिरवस्थितः । स्वद्रव्यं वहिरानेतुं गृहं मा प्रतियातु सः ॥२२॥ पत्नीं
स्मरत लोटस्य या ज्वलत्पुरमीक्षितुं । परावृत्तास्मृतेशाज्ञा पाक्यस्तम्भो ऽभवत्तदा ॥२३॥ ११४
तस्यां रात्रौ भवेतां द्वावेकपर्य्यङ्कसंस्थितौ । तयोर्ग्रहीष्यते चैको द्वितीयश्च त्यजिष्यते ॥
२४॥ एकयन्त्रेण पिंषत्यौ भवेतां द्वे स्त्रियौ तदा । तयोर्ग्रहीष्यते चैका द्वितीया तु त्यजि
ष्यते ॥२५॥ गुरूरुवाच ॥ इदं श्रुत्वाब्रुवन् शिष्या एषा कुत्र भवेत्प्रभो । आपदाकस्मिका
नृणामिति पृष्टो ऽब्रवीत्स तान् ॥२६॥ श्रीयेषूरुवाच ॥ यत्र यत्र मिलेद्देहो गतप्राणो महीतले ।

तत्र वै संग्रहीष्यन्ते दाक्षाय्या मांसभोजिनः ॥२७॥ गुरुरुवाच ॥ इत्थं घोरापदं प्रोच्य
शिष्यान् मोक्तातिनिःक्लमं । नित्यं प्रार्थयितुं नूत्नदृष्टान्तेन समादिशत् ॥२८॥ श्रीयेषूरुवाच ॥
कस्यांचिदभवत्पुर्य्यामक्षदर्शी दुरात्मकः । न वा विश्वेश्वराद्भीतो न वाप्यादृतमानुषः ॥
२९॥ तत्पुरे विधवा काचित्तमभ्येत्याक्षदर्शिनं । न्यायाद्वारयितुं स्वीयविपक्षाधर्म्ममार्थ
यत् ॥३०॥ चिरं नाङ्गीचकारैतत् प्रार्थितस्तु मुहुर्मुहुः । तया विधवया पश्चाच्चिन्तया ११५
मास स स्वयं ॥३१॥ यद्यपीशान्न भीतो ऽहं न वाप्यादृतमानुषः । तथाप्युत्पीडितो ऽत्यन्तं
प्रार्थयन्त्यैतया स्त्रिया ॥३२॥ अत एव तदर्थे ऽहं न्यायं कुर्य्यां यथार्थितं । न चेत् सा नित्य
मागत्या हृन्मे संक्षोभयेद्दृढं ॥३३॥ इत्युक्तं धर्म्महीनस्य निर्दयस्याक्षदर्शिनः । यूयं शृणुत म
च्छिष्या दुष्टसंवारणेच्छवः ॥३४॥ अत ईशस्तथा स्वानां विशिष्टानामहर्निशि । स्वार्थे

प्रार्थयतामर्थं तद्विलम्ब्य चिरादपि ॥३५॥ न्यायं किं नाचरेदीशो नूनमेवाचिरात्तथा । स्थिरं
करिष्यति न्यायमिति युष्मान्ब्रवीम्यहं ॥३६॥ तन्न्यायं तु यदा कर्त्तुं समागच्छेन्नरात्मजः ।
तदा भूमण्डले किं स स्थिरविश्वासमाप्स्यति ।३७॥ गुरुरुवाच ॥ एतत्प्रोच्य प्रभुः शिष्यान्
मार्गे येरूषलेमके । स्वीयभव्यागतेर्वाक्यं न्यायकृत्यै महीतले ॥३८॥ केषांचिद्विषये पश्चादात्म
धर्म्माभिमानिनां । अवशिष्टावमन्तॄणां चापि दृष्टान्तमब्रवीत् ॥३९॥ श्रीयिषूरुवाच ॥ प्रार्थनार्थे ११६
मनुष्यौ द्वौ गतावीश्वरमन्दिरे । तयोरेकः फरीष्यो ऽभूत् करग्राही तथापरः ॥४०॥ फरीष्यः
स्थित एकाकी स्वहृदि प्रार्थयत्तथा । यादृशो ऽन्ये नरा मन्दा लोप्तारो व्यभिचारकाः ॥४१॥
यादृग्वैष करग्राही तादृङ्नास्मीतिहेतुतः । तुभ्यमीश्वर सर्व्वज्ञ धन्यवादं करोम्यहं ॥४२॥
सप्ताहे द्विरहं नित्यमुपवासं करोमि वै । सर्व्वद्रव्यदशांशेभ्य ईशायैकं ददामि च ॥४३॥

इत्थमूचे फरीष्यो ऽसौ किंतु दूरात्करग्रहः । तिष्ठन् नेत्रे अपि स्वर्गे नोत्थापयितुमैहत ॥
४४॥ अधस्त्वालोचमानः स आहतोरा अपि स्वयं । पापिने मे दयामीश कुर्वित्येव वचो
ऽब्रवीत् ॥४५॥ नम्रात्मा किल मर्त्यो ऽयं पूर्व्वोक्तादधिकं नरात् । शुद्धीकृत इतो गेहं जगा
मेति ब्रवीमि वः ॥४६॥ आत्मगौरवकर्त्ता ह्यंशेन क्षुद्रीकरिष्यते । आत्मक्षुद्रत्वकारी तु गुरू
कर्त्तव्य एव च ॥४७॥ गुरुरुवाच ॥ ततः सत्पुरसंस्थे ऽस्मिन् परमेश्वरमन्दिरे । तस्य नूत्न ११७
प्रतिष्ठायाः पर्व्वकाले ऽविशत्प्रभुः ॥४८॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (लूकस्य
सप्तदशाष्टादशसर्गाभ्यां योहन्नेर्दशमसर्गाच्चोद्धृतः) सत्प्रार्थनाविवेको नाम षोडशो ऽध्यायः ॥
शिष्य उवाच ॥ चतुर्थं तन्महापुर्य्यां प्रभुयात्रान्वितं गुरो । कीदृक् सन्मन्दिरनवप्रतिष्ठा
पर्व्व वर्णय ॥१॥ गुरुरुवाच ॥ मयोक्तमपि ते पूर्वं येषूत्पत्तिविवर्णने । हेतुं तत्पर्व्वणः शिष्य

वक्ष्ये संप्रति विस्तरात् ॥२॥ यवनः सूरशार्दूलो ऽन्तियुको नाम भानुमान् । ऐस्रयेलीयसद्धर्म्म
मुन्मूलयितुमुद्यतः ॥३॥ मन्दिरे परमेशस्य जरूबाबिलनिर्म्मिते । कोलमेधं महावेद्यां सहो
समकरोच्छठः ॥४॥ तेषां चाप्यपवित्राणां पक्वमांसरसेन सः । मन्दिरं सर्व्वशो ऽसिंचदपरि
ष्कारसिद्धये ॥५॥ यवनानां च देवस्य द्युपितुर्वज्रधारिणः । यज्ञार्थं स्थापयामास तत्र मूर्त्तिं
सवेदिकां ॥६॥ तां प्रतिष्ठाप्य चाशेषांस्तद्दुष्टार्च्चावमानिनः । शास्त्राचारान् यहूद्येषूग्रदुःखै ११८
र्न्ततमैहत ॥७॥ घृणार्हं तत्तदा पुण्ये स्थाने राहित्यकारकं । तस्थौ त्र्यब्दं महाक्लेशयुतं
धर्म्मैस्रयेलिनां ॥८॥ यहूदो मक्कबायस्तु याजकस्य सुतो बली । बलिनो मत्तथीयस्याहरो
णार्य्यकुलोद्भवः ॥९॥ यवनानां बलं जित्वा वहिष्कृत्य च सत्पुरात् । अमूर्त्तेरीश्वरस्यार्च्चां
मन्दिरे पुनरानयत् ॥१०॥ तद्राहित्यघृणानाशसिद्धये धर्म्मिणस्तदा । प्रतिष्ठां नूतनां चक्रु

एवद्वितीयेशसद्मनः ॥११॥ सलोम्नापि कृतायास्तु मन्दिरस्यादिमस्य वै । कीर्त्तितायाः प्रति
ष्ठाया दाविड्जेन प्रतापिना ॥१२॥ एतस्यापि च पूर्व्वाया द्वितीयस्येशसद्मनः । निष्पन्नायाः
प्रतिष्ठायाः पारशीकनृपाज्ञया ॥१३॥ इयं नूतनप्रतिष्ठासीदधिकाह्लादसंयुता । पूर्व्वानु
स्मारिणां तर्हि धार्म्मिकाणां यहूदिनां ॥१४॥ तन्नित्यस्मृतये घस्रेष्वष्टस्वेकादशादिषु ।
ते महःकृष्णपक्षस्यास्थापयन् पर्व्व वार्षिकं ॥१५॥ तदा द्युपितृमूर्त्तेर्हि प्रतिष्ठाभूद्घृणार्हका । तदा ११६
च त्र्यब्दशेषे ऽपि प्रतिष्ठा नूतनोत्तमा ॥१६॥ एतत्समयतः प्रायःपूर्णे वर्षशतद्वये । तत्प
र्व्वार्थं समायातः स्वयं पुण्यपुरे प्रभुः ॥१७॥ शिष्य उवाच ॥ एतस्मिन् समये यत्र कृतं
खृष्टार्थिभिः परे । तज्जन्मपर्व्व किं तत्राचरितं तेन हे गुरो ॥१८॥ गुरुरुवाच ॥ तदा
सलोमराजाख्ये तोरणे मन्दिरस्य सः । भ्रमन् संवेष्टितो ऽनेकैर्नूतनराज्याभिलाषिभिः ॥१९॥

के प्राड्मासद्वयातेन दूष्यपर्वणि सत्पुरे । कृतान्युक्तानि च स्मृत्वापृच्छंस्तं लोभिनस्तदा ॥२०॥
यहूद्या ऊचुः ॥ कियत्कालं त्वमस्माकं हृत् स्थापयसि संशये । त्वं चेत्सत्यं भवेः ख्रीष्टस्तदा
तद्ब्रूहि नः स्फुटं ॥२१॥ श्रीयेषूरुवाच ॥ पुरा तदवदं युष्मान् ननु व्यश्वसित ध्रुवं । याः क्रिया
मत्पितुर्नाम्नाकुर्वं ता मम साक्ष्यदाः ॥२२॥ यूयं तु मम मेषाणां पुरोक्तानां मयात्र हि । गणे
न स्थ स्थितास्तस्मान्मां न विश्वसिथ ध्रुवं ॥२३॥ मेषा निशाम्यन्ति गिरो मदीया ज्ञाता
मया ते ऽनुसरन्ति मां च । तेभ्यो ददे जीवनमेव नित्यं न को ऽपि तान् मे ऽपहरेद्धि हस्तात् ॥
२४॥ यस्तान् ददौ मे हि पिताखिलेभ्यो महत्तरः सो ऽस्त्यत एव तस्य । हस्तान्न तान् को
ऽपि हरेदहं हि नूनं मदीयश्च पिता स्म एकः ॥२५॥ गुरुरुवाच ॥ इति श्रुत्वा यहूद्यास्ते तद्
वधार्थं पुनः शिलाः । अगृह्णन्नथ मोक्ता ते ऽभ्युक्ता ईश्वरसूनुना ॥२६॥ श्रीयेषूरुवाच ॥ सुक्रिया

त्पितुः शक्त्या बहूर्युष्मानदर्शयं । कनमार्थमतस्तासां मां शिलाभिर्जिघांसथ ॥२७॥ यहूद्या
ऊचुः ॥ सुक्रियाहेतुतो न त्वं शिलाक्षेपेण सांप्रतं । अस्माभिः संविनाश्योऽसि किन्त्वीशस्यापवादतः ॥२८॥ यत एव मनुष्यः सन्नप्यात्मानं त्वमीश्वरं । प्रब्रवीष्यत एवेशापवादोऽस्ति
तव स्फुटः ॥२९॥ श्रीयेषूरुवाच ॥ पुण्यशास्त्रेऽपि युष्माकं किं नोक्तं दाविदा पुरा । सदा
त्मप्यापुराजेन मन्दान् प्रवदता नृपान् ॥३०॥ यूयं किलेशास्तनयाश्च सर्व्वे सर्व्वोपरिस्थस्य परा १२
त्मनः स्थ । इत्यब्रुवं किंनु नरा इवान्ये शेषाधिपाश्चेव मरिष्यथैव ॥३१॥ एवमीशान् यदि
ब्रूयात् स ईशोक्तोद्दिष्टान् नरान् । अनिराकरणीयेऽपि पुण्यग्रन्थे सदात्मनः ॥३२॥ तदा
प्रतिष्ठितं पित्रा भुवि नुन्नं च मां कथं । दण्ड्यं ब्रूथ तदुक्त्यर्थमीशपुत्रोऽस्मि खल्विति ॥३३॥
अहं स्वपितृकर्म्माणि नाचरेयं यदि ध्रुवं । मा प्रतीत तदा मां वै ब्रूतापीशापवादिनं ॥३४॥

चेतु कुर्य्यां तदा वाक्यं न प्रतीयात यद्यपि । ब्रुवतो मे तथाप्येताः क्रिया विश्वसित स्फुटाः ॥
३५॥ तत्साक्ष्येण हि युष्माभिः प्रतीतं स्यात् सुनिश्चितं । मयि संस्थः पिता तस्मिंश्चाहं
संस्थः सदेत्यपि ॥३६॥ गुरुरुवाच ॥ इदं श्रुत्वा पुनस्ते तं ग्रहीतुं दृढमुद्यताः । स तु तेषां
बलान्मुक्तो ऽनागतात्मान्तकालकः ॥३७॥ इति श्रीख्रीष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (दाबि
लीनानां द्व्यशीतितमान्मक्काबायचरित्रग्रन्थाभ्यां योहन्नेर्दशमसर्गाच्चोद्धृतः) पितृपुत्रैकत्वोपदेशो १२४
नाम सप्तदशो ऽध्यायः ॥

शिष्य उवाच ॥ ईशपुत्रो ऽवतीर्णः स भूमौ पित्रा प्रतिष्ठितः । दुष्टयरूषलेमेभ्यो मुक्तः
कुत्रागमद्गुरो ॥१॥ गुरुरुवाच ॥ न पुनर्मृत्युपर्य्यन्तं गलीलायां स संस्थितः । यहूद्यानां तु
देशस्यासीम पूर्व्वदिशं ययौ ॥२॥ यर्द्दानीं च नदीं तीर्त्वा तत्पारे देश आगतः । पिराया

स्ये पुरा यत्राग्यवरो ऽस्नापयन्नरान् ॥३॥ बहवश्च गलीलातो यहूद्यानां च देशतः । तं तत्रा
भिगताः शिक्षां चिकित्सां चाप्यवाप्नुवन् ॥४॥ तद्देशस्थाश्च सर्व्वे ऽपि तस्य संवसतः क्रियाः ।
समीक्ष्योचुः स्मरन्तो हि तत्राश्चर्य्यं जकरीयजं ॥५॥ यहूद्यादय ऊचुः ॥ न किमप्यद्भुतं कर्म्म
योहन्निः स्नापकौ ऽकरोत् । यत्त्वस्य विषये सर्व्वं तेनोक्तं सत्यमेव तत् ॥६॥ गुरुरुवाच ॥
तथा योहन्निना प्रोक्तं गुरुं विक्रमवत्तरं । सदात्मानलसंस्कारप्रदं तत्पूर्व्वसंस्थितं ॥७॥ प्रमी १२३
तस्य स्थले तस्य यद्दीन्याः किल रोधसि । व्यूहा विशश्वसुर्येषूं खृष्टमेवेश्वरात्मजं ॥८॥
वैरिणो ऽपि फरीशास्तु तत्परीक्षार्थमागताः । व्यवस्थाविषये प्रश्नमिमं केचिदुदैरयन् ॥
९॥ फरीश्या ऊचुः ॥ पत्नीं वर्जयितुं स्वीयां कस्माच्चिदपि कारणात् । गुरो किमुचितं ज्ञातं
त्वयास्मान् दयया वद ॥१०॥ श्रीयेषूरुवाच ॥ स्त्रीपुंलिङ्गविधानेनादिमौ स्रष्टासृजन्नरौ ।

सो मांसास्थितश्चापि नारीं सृष्ट्वाब्रवीदतः ॥११॥ स्वमातापितरौ तस्मान्नरस्त्यक्त्वा निज
भया । सह योक्ष्यत्यतश्चापि तावेकाङ्गौ भविष्यतः ॥१२॥ इतीशोक्तं श्रुते मौस्ये युष्मा
भिः पठितं न किं । अतस्तौ तत्परे न द्वावेक एव तु संस्थितः ॥१३॥ अत एव ययोर्योगं
चकार परमेश्वरः । तौ केनापि मनुष्येण मा क्रियेतां पृथग्ध्रुवं ॥१४॥ फरीष्या ऊचुः ॥
चेदिदं स्यात्कथं मोसिर्दत्तवर्जनपत्रिकां । मलिनामप्रियां पत्नीं वहिष्कर्त्तुं न आदिशत् ॥१२४
१५॥ श्रीयेषूरुवाच ॥ युष्मद्धृदयकाठिन्यहेतोः पत्नीविवर्जनं । ईदृशं सोऽनुमेने वः किं
त्वभून्नादितस्तथा ॥१६॥ अहं युष्मांस्त्विदं वच्मि कस्माच्चिदपि कारणात् । व्यभिचाराद्विना
यो यो निजां पत्नीं विवर्जयेत् ॥१७॥ सोऽन्तो व्यभिचरत्येव तस्या वोढा तथैव च । या च
त्यक्तधवान्योढा स्यात् सा व्यभिचरत्यपि ॥१८॥ गुरुरुवाच ॥ तान् विवादिन इत्युक्त्वा शिष्यैः

सह गृहं गतः । तैश्चैतद्विषये तर्हि समपृच्छ्यत निर्जने ॥१९॥ श्रीयेषूशिष्या उचुः ॥ तादृशी
चेद्व्यवस्था स्यान्नरस्य स्वस्त्रियं प्रति । तदा नार्हति उद्वोढुमित्यस्माकं मतं प्रभो ॥२०॥
श्रीयेषूरुवाच ॥ विवाहाकरणं वाक्यं न धार्य्यमखिलैरिदं । किंतु येभ्य इयान् दत्तः प्रसादो
धार्य्यमेव तैः ॥२१॥ कतिचित्सन्ति शण्ढा हि स्थिता आमातृगर्भतः । विद्यन्ते कतिचि
च्चान्ये नरैः क्लीवीकृतास्तथा ॥२२॥ अन्ये तु स्वर्गराज्यार्थापहतस्वीयपुंस्त्वकाः । वर्त्तन्ते १२५
यस्त्विदं धर्त्तुं क्षमः स धरतु ध्रुवं ॥२३॥ गुरुरुवाच ॥ इत्येवं प्रोक्तवत्यार्य्ये कामसंज्ञेतरि
प्रभौ । शिशूंस्तत्स्पर्शनार्थाय तदा केचित् समानयन् ॥२४॥ शिष्यास्तु तत्समानेतॄन्न्यषेध
न्नप्रियोक्तिभिः । अतो ऽसंतुष्टहृन्मोक्ता तानेतदवदद्वचः ॥२५॥ श्रीयेषूरुवाच ॥ शिशून्
मन्निकटे ऽभ्येतुमनुजानीत तांश्च मा । न्यषेधिष्टेशराज्यं हीदृश्यैव प्रजया स्थितं ॥२६॥ हेश

राज्यं शिशुरिव गृह्णीयान्नहि यो नरः । स वै न प्रविशेतस्मिन्निति युष्मान् ब्रवीम्यहं ॥
२७॥ गुरुरुवाच ॥ इत्युक्त्वा तान् शिशून् येषूः समालिङ्ग्यैकशो मुदा । तच्छिरःसु स्वहस्तौ च
स्थापयित्वाशिषं ददौ ॥२८॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (मोसेः पंचशास्त्रे
योनिस्कन्धस्य प्रथमद्वितीयसर्गाभ्यामनुवाक्यस्कन्धस्य च चतुर्विंशसर्गाद् योहन्निमार्कयोर्दशम
सर्गान्मत्थायस्योनविंशसर्गाल्लूकस्यैकादशसर्गाच्चोद्धृतो) निर्म्मलराज्यशासनं नामाष्टादशोऽध्यायः॥ १२६
गुरुरुवाच ॥ निर्गच्छन्तं ततो मार्गे प्रभुं कश्चिदभिद्रवन् । भूमिपातितजानुश्च प्रणतोऽभ्य
ब्रवीदिदं ॥१॥ युवोवाच ॥ हे सद्गुण महाचार्य्य नित्यजीवनलब्धये । किं कर्त्तव्यं मया
भद्र तन्मे त्वं कृपया वद ॥२॥ श्रीयेषूरुवाच ॥ मां कथं सद्गुणं वक्षीशाद्विना न हि सद्गुणः ।
जीवनं त्वेतुमिच्छेश्चेद्व्यवस्थाः पालयेश्वरीः ॥३॥ गुरुरुवाच ॥ इदं श्रुत्वा युवापृच्छन्मया ताः

कतमा गुरो । पालनीया इति प्रोच्य ततः प्रापोत्तरं प्रभोः ॥४॥ श्रीयेषूरुवाच ॥ ता ज्ञाता आद्रियस्व त्वं स्वमातापितराविति । मा कंचित्त्वं जहीत्येवं मा त्वं व्यभिचरेति च ॥५॥ मा चोरेति तथा मिथ्यासाक्ष्यं मा त्वं वदेत्यपि । ताः सलोभनिषेधाः षड्व्यवस्थाश्चरमा विभोः ॥ ६॥ तासां च लिखितानां वै द्वितीये ऽश्मनि मोसिना । सारो ऽयं त्वं स्ववत् स्निह्य प्रतिवासिन मित्युत ॥७॥ युवोवाच ॥ एताः सर्वा महाचार्य्याशिशुत्वादप्यहं सदा । अपालयमतः किं १२७ मे ऽधिकमावश्यकं भवेत् ॥८॥ गुरुरुवाच ॥ इति यूनो वचः श्रुत्वा तत्प्रेमाविष्टमानसः । प्रभुरालोचमानस्तं प्रत्यवादीदिदं वचः ॥९॥ श्रीयेषूरुवाच ॥ सिद्धो भवितुमिच्छेश्चेत्तदेकमधिकं तव । अवशिष्टं स्ववस्तूनि विक्रीणीह्यखिलान्यपि ॥१०॥ ततो निजधनं सर्वं दरिद्रेभ्यः प्रदाय भो । शूलमुत्थाप्य मामन्वेह्यतस्ते स्वर्धनं भवेत् ॥११॥ गुरुरुवाच ॥ इति वाक्यं

इत्याकर्ण्य दुःखी भूत्वा ततो गतः । यतः सोऽतिधनी तन्तु दृष्ट्वाभ्यूचे ऽनुगान् प्रभुः ॥१२॥
श्रीयेषूरुवाच ॥ धनवद्भिर्नरैरेव संसारफलभोगिभिः । दुःप्रवेश्यं कथं न स्यादहो सद्राज्य
मैश्वरं ॥१३॥ गुरुरुवाच ॥ तान् पर्य्यालोचमानः स इत्थं प्रोवाच तेषु तु । विस्मयं किल
गच्छत्सु भूयः प्रत्यवदत्तथा ॥१४॥ श्रीयेषूरुवाच ॥ हे पुत्रा धनविश्वासकारिभिः सकलै
र्नरैः । दुःप्रवेश्यं कथं न स्यादहो सद्राज्यमैश्वरं ॥१५॥ धनिनः स्वर्गराज्यान्तर्गतेः शक्य १२८
नरा किल । सूचीरन्ध्रान्तरे पीवो गतिरुष्ट्रस्य जायते ॥१६॥ गुरुरुवाच ॥ इति श्रुत्वा
वचः शिष्याः परमं विस्मयं ययुः । अन्योऽन्यं चाब्रुवन् कोऽतो विमुक्तिं प्राप्नुयादिति ॥
१७॥ समालोच्य तु तान् मोक्ताब्रवीत् तत्किल मानुषैः । असाध्यं किंतु सर्वाणि साध्यानि
परमात्मना ॥१८॥ इत्थं द्वादशशिष्येषु श्रुतवत्सूत्तरं प्रभोः । सीमोनः प्रथमस्तेषामिदं त

विषये ऽवदत् ॥१९॥ प्रत्तर उवाच ॥ वयं सर्व्वाणि सन्न्यस्य भूता आचार्य्य ते ऽनुगाः । ततः
किं फलमस्माकं तव राज्ये भविष्यति ॥२०॥ श्रीयेषूरुवाच ॥ यूयं मे ऽत्रानुगा विश्वपुन
र्ज्जन्मनि वै यदा । आसीत नृसूनुः स्वीयतेजःसिंहासनोपरि ॥२१॥ तदा सिंहासनेष्वेवा
सीना द्वादशसु ध्रुवं । स्यातेस्रयेलवंशानां द्वादशानां विचारकाः ॥२२॥ यो यस्तु मम ना
मार्थे सुवार्त्तार्थे ऽपि चालयं । पितरौ भ्रातृभग्नीः स्त्रीं सुतान् क्षेत्राणि वा त्यजेत् ॥२३॥ १२९
स काले ऽप्यैहिके सर्व्वमेतच्छतगुणं पुनः । लप्स्यते ताडनैर्युक्तं शेषे चानन्तजीवनं ॥२४॥
इति वो वच्म्यृतं किंतु बहवो ये ऽधुनादिमाः । ते ऽन्तिमाः स्युस्तथा चेह ये ऽन्तिमास्ते स्युरा
दिमाः ॥२५॥ सन्निभं स्वर्गराज्यं हि गृहस्थस्यास्ति कर्म्मणा । निर्गतस्योषसि प्राप्तुं द्राक्षा
र्थे भृतकान् बहून् ॥२६॥ लब्धव्यं चैकशो ह्येतैः रौप्यमाषचतुष्टयं । इत्यङ्गीकरणे पूर्णे ते

द्राक्षाकर्म्मणे गताः ॥२७॥ अथाद्यप्रहरे पूर्णे निर्गत्य विपणौ स्थितान् । निष्क्रियान् स द
दर्शान्यानभ्युवाच च तानपि ॥२८॥ मद्द्राक्षायां तथा यूयं यात यच्चोचितं भवेत् । तद्वो दास्य
इति श्रुत्वा ते ऽपि तत्कर्म्मणे गताः ॥२९॥ द्वितीये प्रहरे चापि तृतीये च तथा गते । वि
निर्गत्येतरान् स्वामी भृतकांस्तद्वदाह्वयत् ॥३०॥ चतुर्थप्रहरस्यापि स दण्डे पंचमे गते ।
निर्गत्य विपणावन्यान् स्थितान् दृष्ट्वाब्रवीत्तदा ॥३१॥ कथं तावद्दिनं यूयं स्थिता अत्रालसा १३०
इति । प्रत्यूचुस्ते यतः कार्य्ये न को ऽप्यस्मान्न्ययोजयत् ॥३२॥ इति श्रुत्वावदत् स्वामी
द्राक्षां यूयं च गच्छत । यच्चार्हं तत्फलप्स्यध्व इत्यथो ते तथा ययुः ॥३३॥ तस्मिंस्तु प्रहरे
पूर्णे स द्राक्षाध्यक्षमादिशत् । सर्व्वेभ्यश्चरमादिभ्यो वेतनं देह्यनुक्रमात् ॥३४॥ एवं कृते ततो ये
न्त्ये ऽप्याहूताः प्रहरे ऽभवन् । ते प्रापुरेकशो ऽध्यक्षाद्रौप्यमाषचतुष्टयं ॥३५॥ अतो ये

प्राक् समाहूतास्ते ऽपेक्षन्ताधिकं ततः । लब्धुं किन्त्वेकशस्ते ऽपि प्रापुर्माषचतुष्टयं ॥३६॥
विरक्तमनसो ऽतस्ते प्रोचुर्गृहपतिं प्रति । अहो मुहूर्तमात्रे ऽमी त्वत्क्रियां चक्रिरे ऽधुना ॥३७॥
तथाप्यस्थापयो ऽस्माभिः समानांस्त्वममून् दृढं । सोढवद्भिरपि श्रान्तिं तावत्यह्युष्णमेव च ॥
३८॥ इति निन्दावचस्तेषां श्रुत्वैकस्मा उवाच सः । हे सखे न किमप्यत्राधर्म्मं त्वयि
करोम्यहं ॥३९॥ मया सार्द्धं त्वया किं न प्रातरङ्गीकृतं ह्यभूत् । दिनकर्म्मभृतिं लब्धुं रौप्य १३१
माषचतुष्टयीं ॥४०॥ अतो यद्वेतनं ते ऽस्ति तद्गृहीत्वा गृहं व्रज । यावत्तुभ्यं त्वहं तावद्दास्ये
ऽस्मा अपि वेतनं ॥४१॥ मद्वस्तुविषये किं न मया कार्य्यं यथेच्छया । किं वा मद्भद्रताहेतो
र्दुष्टं चक्षुर्बभूव ते ॥४२॥ इति वाक्यानुसारेण ये ऽधुना पश्चिमाः स्थिताः । ते स्युराद्यास्तथा
चेहादिमा ये ते स्युरन्तिमाः ॥४३॥ ईशराज्ये समाहूता वर्त्तन्ते बहवः किल । किंतु तत्र

विशिष्टानामल्पो वै विद्यते गणः ॥४४॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (मोसेः पंचशास्त्रे निःसृतिस्कन्धस्य द्वाविंशसर्गाल्लैव्यस्कन्धस्योनविंशसर्गादनुवाक्यस्कन्धस्य च पंचमसर्गान्मत्थायस्योनविंशविंशतितमसर्गाभ्यां मार्कस्य दशमसर्गाल्लूकस्याष्टादशसर्गाच्चोद्धृतो) विशिष्टाल्पत्वोपाख्यानं नामोनविंशोऽध्यायः ॥

गुरुरुवाच ॥ बेथनीयानिवासिन्योः स्वस्रोर्मार्थामरीययोः । येषूसख्योस्तदा भ्राता ला १३२
जारोऽभवदामयी ॥१॥ अतः प्रैरयतां दूतं यर्द्दानीपार एव ते । येष्वे वक्तुमहो यं त्वं स्निह्य
स्यानोऽस्ति स प्रभो ॥२॥ इदं श्रुत्वा तयोर्वाक्यं तत्त्रयप्रीतमानसः । दयालुरपि सन्मोक्ता
प्रत्यवादीदिदं तदा ॥३॥ श्रीयेषूरुवाच ॥ न मृत्यर्थमयं रोगोऽभवत् किन्त्वीशतेजसे ।
तद्द्वारा चेशपुत्रस्य तेजो दर्शयितुं भुवि ॥४॥ गुरुरुवाच ॥ इत्येवोक्त्वा स तद्वार्त्ताप्राप्तेः पश्चाद्दिन

इयं । तस्मिन्नेव स्थले ऽतिष्ठत् पिरायाभिधनीवृति ॥५॥ तत्परे तु स्वशिष्यान् सो ऽभ्यवद
द्याम वै पुनः । यहूदं देशमित्येवाथ शिष्यास्तं समब्रुवन् ॥६॥ श्रीयेषूशिष्या ऊचुः ॥ हे
आचार्य्याधुनापि त्वां यहूद्या हन्तुमश्मभिः । समैच्छंस्त्वमतो यासि कथं तन्नीवृतं पुनः ॥
७॥ श्रीयेषूरुवाच ॥ किं न ख्याता दिनस्यांशा द्वादशातो दिने व्रजन् । मनुष्यो न पतेद्यस्मा
त्तेन दृष्टा जगद्द्युतिः ॥८॥ चेत्तु रात्रौ व्रजेत्को ऽपि तदा स निपतिष्यति । यस्मान्न भासते १३३
तस्मिन् प्रकाशः कश्चिदैहिकः ॥९॥ गुरुरुवाच ॥ इत्युक्त्वा तदपि प्रोचे लाजारो नः सखाधुना ।
निद्रितो ऽतो ऽहमप्येमि तं जागरयितुं त्विति ॥१०॥ शिष्यास्तूचुः प्रभो चेत्स स्वप्यात् सुस्थो
भवेत्तदा । इत्थं शयनमात्रार्थां जानन्तो हि प्रभोर्गिरं ॥११॥ अतस्तां मृत्युविषये प्रोच्य निद्रा
गिरं पुरा । तैरबुद्धां परे स्पष्टं स तानभ्यब्रवीद्वचः ॥१२॥ श्रीयेषूरुवाच ॥ ममार किल

लाजारस्तत्समीपे च तत्क्षणे । अहं तदुपकाराय न ह्युपस्थितवान् खलु ॥१३॥ तस्मादप्यस्मि
युष्माकमर्थे संतुष्टमानसः । युष्मद्विश्वासलिप्सुर्हि याम तं प्रत्यतो ऽधुना ॥१४॥ गुरुरुवाच ॥
बेथनीया तथाभ्येत्या स्थिता क्रोशान्तरे पुरात् । जिघांसूनामिति श्रुत्वाब्रवीत् थोमास्तदेत
स्थान् ॥१५॥ थोमा उवाच ॥ वयमप्यखिलास्तेन सार्द्धं स्वप्रभुणाधुना । प्रचलेम यतो ऽरी
णां हस्तैस्तद्वन्म्रियेमहि ॥१६॥ गुरुरुवाच ॥ इत्युक्ते दिदुमाख्येन शेषानेकादश प्रति ११३४
यर्हीदानीं ते ऽतरन् गन्तुं मार्गे यैरूषलेमके ॥१७॥ सशिष्यो बेथनीयायां ततो येषूरुपस्थितः ।
लाजारे मृन्निखातान्तःस्थापिते ऽहश्चतुष्टयं ॥१८॥ तद्गृहे तु तदानेके ग्रामात् सत्पुरतो ऽपि
च । यहूद्यास्तद्विताः स्वस्रोः प्रबोधाय समागताः ॥१९॥ तत्र चागमनं येष्वः श्रुत्वा सद्यः
समुत्थिता । मार्था प्रविशतो ग्रामं तस्य साक्षाद्गतैकला ॥२०॥ तं समीक्ष्य नदावादीत्

प्रभो चेत्वमुपस्थितः । अत्रासीः किल मद्भ्राता नाभविष्यन्मृतस्तदा ॥२१॥ किंत्विदानी
मपि त्वं वै यद्यदीश्वरमर्थये: । तत्तद्दास्यति तुभ्यं स इत्येवं निश्चितं मया ॥२२॥ इत्थं
मार्थावचः श्रुत्वा येषूस्तां प्रत्यवोचत । पुनरुत्थास्यति भ्राता त्वदीयो मृतवानिति ॥२३॥
अथ सोवाच सर्वेषामुत्थानाहे ऽन्तिमे स वै । उत्थास्यतीति मज्ज्ञातमित्यथोवाच तां प्रभुः ॥
२४॥ श्रीयेषूरुवाच ॥ पुनरुत्थानमेवाहं जीवनं चास्मि यश्च मां । प्रत्येति स म्रियेतापि
यदि जीविष्यति ध्रुवं ॥२५॥ जीवन् यो यश्च मामेव प्रत्येति न कदाचन । स मर्त्तेति
त्वया मार्थे किमेतन्मन्यते दृढं ॥२६॥ मार्थोवाच ॥ नूनमेवं प्रभो त्वं हि खृष्टः खल्वीश्व
रात्मजः । अपेक्ष्यागमनो भूमाविति प्रत्येम्यहं ध्रुवं ॥२७॥ गुरुरुवाच ॥ इत्थमुक्त्वा द्रुतं
मार्थागच्छद्गेहमवाप च । स्वसारं तत्र मध्ये स्वां समासीनां यहूदिनां ॥२८॥ तां रहश्च

तदावादीदाचार्य्यो ऽत्र समागतः । समाह्वयति चापि त्वामित्येवं तैरसंश्रुतं ॥२९॥ मरीया
तु तदाह्वानं श्रुत्वोत्थाय च तत्क्षणे । यत्र स्वस्त्रा पुरा दृष्टो येषूस्तत्रैव साद्रवत् ॥३०॥ यहूद्या
स्तु गृहासीनास्तां दृष्ट्वाशुगतां तथा । ऊचुर्भ्रातुर्निखाते वै रोदितुं सा ययाविति ॥३१॥ अत
स्ते ऽनुययुर्ग्रामसीमापर्य्यन्तमेव तां । तत्र सापि प्रभोः साक्षाद्गत्वेदं प्रणताब्रवीत् ॥३२॥
मरीयोवाच ॥ हे प्रभो चेत्त्वमस्माकं समीपे समुपस्थितः । अत्रासीः किल मद्भ्राता नाभविष्य १३६
न्मृतस्तदा ॥३३॥ गुरुरुवाच ॥ रुदतीं तां तु संदृश्यानुगतान् रुदतो ऽपि च । यहूद्यांस्तत्स
खान् येषूरभूत् संखिन्नमानसः ॥३४॥ सश्वासं चाब्रवीत् तं क्व समस्थापयताथ ते । नाथैहि
द्रष्टुमित्यूचुस्ततस्तत्राखिला गताः ॥३५॥ तर्ह्यरोदीत्प्रभुस्तत्तु दृष्ट्वान्योन्यं यहूदिनः । अभ्यूचुः
कियदेतस्य प्रेमामुष्मिन्नभूदिति ॥३६॥ ऊचुस्त्वन्ये ददौ यः प्रागृषिमन्धाय खल्वयं । स

किं वारयितुं मृत्युं नाशक्नोत् स्वप्रियादपि ॥३७॥ इत्युक्ते तैः स्मरद्भिर्हि दूष्यपर्व्वणि तत्क्रियां।
उपातिष्ठन्निखाते स लाजारस्य शिलावृते ॥३८॥ अथोचे खिन्नहृत्सोऽमूमुत्तोलयत खल्वितः।
शिलामिति ततो मार्था तन्नात्पर्य्याबुधावदत् ॥३९॥ प्रभोऽसौ पूतिगन्धोऽस्ति मृतश्चत्वार्य्यहानि
हि। इत्थं तद्वाक्यमाकर्ण्य प्रभुस्तामिदमब्रवीत् ॥४०॥ श्रीयेषूरुवाच ॥ विश्वस्याश्चेत्त्वमीशस्य
महौजो द्रक्ष्यसीति किं। नोदितं ते पुरा मार्थे मया जीवनदायिना ॥४१॥ गुरुरुवाच ॥ १३७
इत्युक्ते प्रभुणाथो ते निखातादुदतोलयन्। शिलां किन्त्वीक्षमाणः स ऊर्द्धमेतद्वचोऽब्रवीत् ॥
४२॥ श्रीयेषूरुवाच ॥ स्तौम्यहं त्वां पितर्यस्मान्मद्वाक्यमधुनाशृणोः। सदापि च वचो मे
त्वं शृणोषीत्यपि वेद्म्यहं ॥४३॥ स्थितस्य परितस्त्वस्य व्यूहस्यैव प्रतीतये। त्वयाहं प्रेरितो
ऽस्मीति तद्वाक्यमुदितं मया ॥४४॥ गुरुरुवाच ॥ इत्थं स्तुत्वेशपुत्रः स लाजार वहिरेह्यहो।

इत्युच्चैर्घोषयामास समस्तव्यूहगोचरे ॥४५॥ वहिरायातस सद्योऽथ न्यस्तस्तत्र यथाभवत् ।
बद्धास्यो गात्रमार्जन्या वस्त्रैर्बद्धकराङ्घ्रिकः ॥४६॥ तं च मोचयितुं तत्र नरानादिशति प्रभौ ।
पुनर्जीवन्तमखिला लाजारं ददृशुः क्षणात् ॥४७॥ तत्स्वसारावतो हृष्टे बहवश्चापि तत्सखाः ।
यहूदीयास्तां क्रियां दृष्ट्वा व्यश्वसन् सत्प्रभुं तदा ॥४८॥ तेषां केचित्तु तद्वार्तां येषूशत्रून् फरी
ष्यकान् । यिरूषलेममध्यस्थान् द्रुतं ज्ञापयितुं गताः ॥४९॥ शिष्य उवाच ॥ किमतश्चक्रु १३८
राचार्य्य जनाः स्तब्धहृदोऽपि ते । श्रुतवन्तः प्रभोः कार्य्यमियच्छक्तिदयान्वितं ॥५०॥ गुरु
रुवाच ॥ तच्छ्रुत्वा सदसि श्रेष्ठयज्वानः सफरीष्यकाः । तत्कर्म्मार्थं समाहूता इदमूचुः पर
स्परं ॥५१॥ सभ्या ऊचुः ॥ किं करिष्यामहेऽयं हि विविधाद्भुतकर्म्मकृत् । गालील्यो यदि
चास्माभिः परित्यज्येत वै तथा ॥५२॥ तदा सर्व्वेऽपि मंस्यन्ते तं व्यूहा अथ जित्वराः ।

रौम्या एत्य बलाद्राष्ट्रं नाशयेयुः पुरं च नः ॥५३॥ गुरुरुवाच ॥ इत्युक्ते रौम्यभीतैस्तैस्तद्रा
ज्यं च निनंक्षुभिः । द्रुह्यज्जिश्वाप्रहारस्य लोभारेरुपदिष्टये ॥५४॥ ततस्तेषां गणस्यैको हन्न
स्य श्रेष्ठयज्वनः । जामाता कायफो नाम समुत्थायेदमब्रवीत् ॥५५॥ कायफ उवाच ॥
अज्ञाः सकलराष्ट्रार्थे मृत्युरेकस्य नो हितः । ननु राष्ट्रलयोऽस्तीति न विचारयथाधुना ॥५६॥
गुरुरुवाच ॥ न स्वयं कायफो वाक्यमिदं दुष्ट उदैरयत् । किंतु तद्वत्सरे यस्मात् प्रधानो १३९
ऽभूत्स यज्वनां ॥५७॥ तस्मादीशात्मकर्षेण तथा प्रोवाच भाविनं । स तत्सकलराष्ट्रार्थे
मृत्युं मोक्तुर्हितं सतः ॥५८॥ नच तद्राष्ट्रमात्रार्थे किंत्वीशस्याखिलान् सुतान् । विभिन्ना
नपि संचेतुं तस्य भव्या मृतिः सतः ॥५९॥ इतस्तु यज्वनोऽमुष्य दुष्टसंकल्पतोऽखिलाः ।
संभ्या मारयितुं येषूं संपरामर्शयन् दृढं ॥६०॥ स तु मृत्योः स्वकीयस्यान्तिककालावधि प्रभुः ।

क्षाद्यैरूषलेम्यानामितो न स्थातुमैहत ॥६१॥ बेथनीयां तु संत्यज्य सशिष्यो ऽफ्रैम
नामके । पुरे यहूद्यदेशस्यैशानदिक्संस्थिते ऽवसत् ॥६२॥ इति श्रीखृष्टसंगीतायां सत्पालक
चरित्रपर्व्वणि (योहन्नेरेकादशसर्गादुद्धृतो) मृत्युविजयनिदर्शनं नाम विंशो ऽध्यायः ॥

शिष्य उवाच ॥ तदा यो ऽन्तिक आयातो मृत्युकालः प्रभोः सतः । मृत्युसंजित्वरस्या
पि कः स आचार्य्य मे वद ॥१॥ गुरुरुवाच ॥ पुरोक्तानि हि कर्म्माणि शिशिरान्ते ऽभवन १४०
सति । वसन्ते त्वागते ऽभ्यर्णः कालः पर्व्वीय एव सः ॥२॥ वैशाख्यां पौर्णमास्यां हि महापर्व्व
यदा कृतं । अविवत्समखैस्त्राणहेतोः सर्व्वैस्त्रयेलिनां ॥३॥ तदा मेध्याविवत्सस्य जगत्पाप
हृतः सतः । ईश्वरस्थापितस्यैवं भव्यः स मख एकदा ॥४॥ तत्त्राणपर्व्वणः पूर्व्वं स्वपूतीकर
णाय तु । नानाग्रामाद्यहूद्येषु समागच्छत्सु सत्पुरं ॥५॥ बहवो मन्दिरान्तःस्थाः समवो

वन् परस्परं । नागामी पर्व्वणेऽसावविति किं भवतां मतं ॥६॥ तद्भृत्यै त्वादिशन् व्यूहं
यज्वानः सफरीष्यकाः । तद्वासं कोऽपि चेद्विद्यात् तत्तान् ज्ञापयितुं किल ॥७॥ शिष्य
उवाच ॥ यदा तन्मृत्युकालः स पर्व्वीयोऽत्यन्तिकस्तथा । अभूत् किमकरोत्तर्हि प्रभुरफ्रैम
संस्थितः ॥८॥ गुरुरुवाच ॥ तदा पुण्यपुरं सोऽपि यातुमारब्धवान् प्रभुः । । मार्गे य
रोखवेऽगच्छद्बहुशिष्यैः समन्वितः ॥९॥ विस्मितांश्च तया गत्या जिघांसुनगरेऽनुगान् । १४।
श्रेष्ठान् द्वादश भीतांश्च निर्जनेऽभ्यब्रवीद्वचः ॥१०॥ श्रीयेषूरुवाच ॥ अहो इदानीं हि यिरूष
लेमं वयं प्रयामोऽथ पुरैव शास्त्रे । यद्यन्नृसूनोर्विषये व्यलेखि तत्तत्समस्तं परिपूरणीयं ॥
११॥ साध्यापकैः सत्तमयज्वभिः स संस्थापनीयो मृतिदण्डयोग्यः । अथेत्त्रयेलार्य्यकुलाधिपै
स्तैः समर्पणीयः स करेऽन्यजानां ॥१२॥ तथोपहास्यः किल थुत्प्रदेयस्तेषां कशाभिश्च स ताड

नीयः । परे च हन्तव्य इतस्तु घस्रे मृत्योस्तृतीये पुनरुत्थितः स्यात् ॥१३॥ गुरुरुवाच ॥
इत्युक्ता अपि शिष्यास्ते गूढार्थं तद्गिरस्तदा । नावजग्मुः प्रभोर्मृत्या प्रकाश्यमचिराद्ध्रुवं ॥
१४॥ यत्तु तद्विषयं शास्त्रे भव्यवक्त्रा व्यलेख्यपि । खृष्टवाग्वादिना तत्तैर्विस्मृतं वच्मि ते
ऽधुना ॥१५॥ इषाय उवाच ॥ पृथिव्यां गृहीताङ्कस्यैव कर्णं श्रवाहं विभुर्मे महेशश्चकार ।
अहं नत्वभूवं तदाज्ञानधीनो न वा तन्नियोगात्परावृत्तचित्तः ॥१६॥ अतस्ताडयत्सु स्वकं १४२
पृष्ठभागं कपोलं च रोमप्रकर्षिष्वहं स्वं । स्वयं न्यास्यमार्त्तो नचापि स्ववक्त्रं त्रपायाः परावर्त्त
यं थुत्कृतेर्वा ॥१७॥ महेशो विभुर्हि स्थितो मत्सहायस्ततो मा भवेयं त्रपाव्याप्तचेताः ।
दृढं स्थापयिष्ये ऽत आस्यं शिलावन्नव ह्रीजितः स्यां किलेत्थं सुवेद्मि ॥१८॥ विशुद्धीकरो मे
ह्यदूरे ऽस्त्यतः को विपक्षो ऽत्र तिष्ठेन्मया सार्द्धमाजौ । विभुर्मे सपक्षो ऽथ को दण्डवत्ताशुकानीव

जीर्णान्यमी कीटखाद्याः ॥१९॥ गुरुरुवाच ॥ तथोक्तं विभुनुन्नस्य मृत्यार्त्तिसहनं प्रभोः ॥
परे भावी च शत्रूणां लय ईशप्रवाचिना ॥२०॥ इषायप्रभृतीनां तु तत्तुल्योक्तीः पुरो
दिताः । समस्ताः परिपूर्तव्या अचिरादपि ते तदा ॥२१॥ नाबुध्यन्त प्रभोः शिष्यास्तत
स्तं जिबिदीयजौ । मात्रा सह समभ्यैतामैहिकैश्वर्य्यकांक्षिणौ ॥२२॥ प्रणता सा तदो
वाच प्रभो त्वामर्थये वरं । तस्मिन् पृच्छति कः सोऽस्तीत्यथ साभ्यब्रवीदिदं ॥२३॥ १४३
जिबिदीयपत्न्युवाच ॥ मत्सून्वोरनयोरेकं दक्षिणे ते तथेतरं । वामे चाप्यासितुं नाथ त्वद्राज्ये
कृपयादिश ॥२४॥ गुरुरुवाच ॥ इमां श्रुत्वार्थनां मातृमाध्यस्थ्येनेरितां तयोः । गौरवा
कांक्षिणोर्यीषूः प्रददावुत्तरं तदा ॥२५॥ श्रीयेषूरुवाच ॥ युवां प्रार्थयथो यत्तन्न जानीथः
समन्ततः । तिक्तं पेयं मया यत्तत्पातुं किं शक्नुथो युवां ॥२६॥ दुःस्नानेन च येनाहं संस्क

न्यो ऽस्मि सांप्रतं । किं तेनाप्युग्रसंस्कारं युवां प्राप्तुं क्षमौ तथा ॥२७॥ गुरूरुवाच ॥ इदं याकोबयोहन्नो पृष्टौ नूनं हि शक्नुवः । इत्थं प्रत्यूचतुर्मोहात् ततस्तेनोदितौ पुनः ॥२८॥ श्रीयेषूरुवाच ॥ यन्मयाप्यविरात्पेयं तन्नूनं पास्यथो युवां । यं चाहं स्नानसंस्कारं लप्स्ये तमपि लप्स्यथे ॥२९॥ दक्षिणे मे तु वामे चासनदानं न मद्वशे । स्थितं येभ्यस्तु मत्पित्रा प्रस्तुतं प्राप्यमेव तैः ॥३०॥ गुरूरुवाच ॥ इति श्रुत्वेतरे शिष्या दश तौ प्रत्यतिक्रुधं । ययुस्तत्तु प्रभुर्ज्ञा १४४
त्वा समाहूयाभ्युवाच तान् ॥३१॥ श्रीयेषूरुवाच ॥ भिन्नदेशाधिपाः ख्यातास्तेषां कुर्वन्ति शासनं । महान्तो ऽपि तदीशत्वं प्रकुर्वन्तीति वित्थ ह ॥३२॥ नतु युष्मासु तद्वत्स्यात् किंतु यः को ऽपि वो गणे । महान् भवितुमिच्छेत्स युष्माकं यातु सेवितां ॥३३॥ यश्च युष्मद्गणे श्रेष्ठः काङ्क्षेत भवितुं तथा ॥ स युष्माकं समस्तानां किंकरो भवतु ध्रुवं ॥३४॥ यस्मान्नृपुत्रो

ऽपि समागतोऽत्र सेवां न लब्धुं किल सेवितुं तु । अर्थे बहूनां निजजीवनं च निधातुमुर्व्या मघदण्डहत्यै ॥३५॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्व्वणि (इषायभव्यवाक्यानां पंचाशत्तमसर्गान्मत्थायस्य विंशसर्गान्मार्कस्य दशमसर्गाल्लूकस्याष्टादशसर्गाद् योहन्नेरेकादशसर्गाच्चोद्धृतो) भव्यमृत्युसूचनं नामैकविंशोऽध्यायः ॥

गुरुरुवाच ॥ तस्यां स्वान्तिमयात्रायां यिरीखूनगरं प्रभौ । आयाते मार्गपार्श्वेऽन्धावा १४५
सातां भिक्षुकौ तदा ॥१॥ महत्यपि च तं द्रष्टुं मोक्तारमनुगैर्वृतं । निर्गते परितो व्यूहे तद्बृहत्पुरवासिनां ॥२॥ तयोर्भिक्षुकयोरेको बार्तिमायाभिधानकः । तिमायतनयोऽपृच्छत् कुतो व्यूह इयानिति ॥३॥ ततः प्रत्युदितो मर्त्यैर्नासरेत्योऽत्र गच्छति । श्रीयेषूरित्यथान्धः सोऽनर्द्दुच्चैर्मुहुर्मुहुः ॥४॥ हे प्रभो दाविदुत्पन्न येषूर्मे करुणां कुरु । तथा चापीतरो

भिक्षुर्ननादातीव यत्नतः ॥५॥ ततस्तावग्रगो व्यूहस्तूष्णीं भवितुमादिशत् । भर्त्सितावपि तौ तूच्चैस्तद्वन्मुहुरनर्द्दतां ॥६॥ तच्चाकर्ण्य प्रभुर्दावविदुत्पन्नः करुणामयः । तद्वचोवादिनं दीनं साक्षादानेतुमादिशत् ॥७॥ तथामी बार्त्तिमायं तं समभ्येत्याब्रुवन्निदं । स्थिरचेताः समुत्तिष्ठ त्वां समाह्वयति प्रभुः ॥८॥ ततः स्वं वस्त्रमुत्क्षिप्य सो ऽगच्छत् प्रभुसन्निधौ । इतरेणान्वितो ऽन्धेनाथ येषूरभ्युवाच तौ ॥९॥ युष्मत्कृते मया किं नु कार्य्यमिष्टं भवेदिति । १४६
प्रत्यूचे बार्त्तिमायस्तु दृष्टिरिष्टैव नौ प्रभो ॥१०॥ ततः स करुणाविष्टस्तयोर्नेत्राणि संस्पृशन् । अवदत् प्राप्नुतं दृष्टिं विश्वासो वां ह्यमोचयत् ॥११॥ अतः प्राप्तेक्षणौ सद्यस्तं तावनुगतौ पथि । सर्व्वे त्वेतां क्रियां दृष्ट्वा तुष्टुवुः परमेश्वरं ॥१२॥ मध्ये यैरीखवानां तु चलन्तं मुक्तिदं तथा । खर्व्वः को ऽपीक्षितुं वाञ्छन् नाशक्नोद्व्यूहहेतुतः ॥१३॥ असौ मर्त्यो यिरीख्वस्तु कर

संयाहिणां महान् । नायको बहुवित्ताढ्यो ऽभवज्जक्कायसंज्ञकः ॥१४॥ ततो ऽभिद्रुत्य पुरतः
स द्राक् खृष्टदिदृक्षया । ब्रह्मदारुं समारोहन् पदवीपार्श्वसंस्थितं ॥१५॥ तत्स्थाने समुप
स्थाय येषूस्तु व्यूहसंवृतः । नीचतो वृक्षसंस्थं तं समालोक्येदमब्रवीत् ॥१६॥ श्रीयेषूरु
वाच ॥ हे जक्काय तरोरस्मादवरोहाविलम्बितं । यत एव त्वदीये ऽहमद्य स्थास्यामि
वेश्मनि ॥१७॥ गुरुरुवाच ॥ इदमाकर्ण्य खर्व्वः सो ऽवारोहन्नरुतो द्रुतं । तत आत्मगृहे १४७
चापि प्रभुं प्रावेशयन्मुदा ॥१८॥ तद्दृष्टारः समस्तास्तु पापकर्त्तुर्निकेतने । आतिथ्याय
गतो ऽसावित्यनुष्ट्योचुः परस्परं ॥१९॥ नायकः करहर्नॄणां स तु पापी स्मृतो ऽपि तैः । सरलः
स्वगृहे संस्थं प्रभुमेतद्वचो ऽब्रवीत् ॥२०॥ जक्काय उवाच ॥ अहो स्वरिक्थार्द्धमहं ददामि
निष्किंचनेभ्यो यदि चानृतोक्त्या । कस्माच्चिदत्यन्तकरं ह्यगृह्णां तद्वै चतुर्घ्नं प्रददामि तस्मै ॥

२१॥ गुरुरुवाच ॥ इदं तदनुतापस्य चिह्नं संज्ञाय सत्तमं । संतुष्टः प्रभुरभ्यूचे तथा तद्गृहसं
स्थितान् ॥२२॥ श्रीयेषूरुवाच ॥ अद्यागतास्मिन् भवने विमुक्तिर्यतो ऽयमप्यब्रहसूनुरस्ति ।
अन्वेष्टुमेवापचितं हि वस्तु त्रातुं च भूमौ नरपुत्र आयात् ॥२३॥ गुरुरुवाच ॥ तथा यैरीख
बस्योकः करग्राहिपतेः प्रभुः । त्यक्ष्यन् स्वान्तिमयात्रायां प्रोचे ऽतीवदयावचः ॥२४॥ इति
श्रीख्रिष्टसंगीतायां सत्पालकचरित्रपर्वणि (मत्थायस्य विंशसर्गान्मार्कस्य दशमसर्गाल्लूकस्याष्टा १४८
दशोनविंशसर्गाभ्यां चोद्धृतो) ऽन्धादिविमुक्तिर्नाम द्वाविंशो ऽध्यायः ॥

शिष्य उवाच ॥ तदा स प्रचलन्मोक्ता यिरीखूतो महापुरं । किं चकार स्वयात्रायामन्ति
मायां गुरो वद ॥१॥ गुरुरुवाच ॥ पूर्वोक्तान्यपि वाक्यानि शृण्वत्सु सहगामिषु । तदा
चापेक्षमाणेषु प्रकाश्यं राज्यमैश्वरं ॥२॥ अतस्तदुपदेशाय यात्राशेषे प्रभुस्तदा । अन्य

दृष्टान्तरूपं तान् वाक्यमेतत्समब्रवीत् ॥३॥ श्रीयेषूरुवाच ॥ कुलजः कोऽपि दूरस्थे देशे
राज्यप्रलब्धये । गन्तुमैच्छत् ततः स्वीये पुनरैतुं च नीवृति ॥४॥ अत आदौ समाहूय
स्वान्तिके किंकरान् दश । सकर्षं षट्पलं तेषु निदधौ रौप्यमेकशः ॥५॥ यूयमेतैर्धनैर्मेऽत्र
पुनरागमनावधि । वाणिज्यं कुरताश्रान्तमित्याज्ञाप्य जगाम सः ॥६॥ दुर्हृदस्तु प्रजा देशे
तस्मिन् दूतान् परेऽनुदन् । वयं राजममुं न स्वीकर्त्तुकामा इतीरितुं ॥७॥ स तु संप्राप्य १४९
राज्यं तत् पुनरैत्य च किंकरान् । आह्वयत् प्राप्तरूप्यांस्तान् धनवृद्धिप्रबुद्धये ॥८॥ आदि
मस्त्ववदन्नाथ त्वद्दत्तपलतो मया । लाभो दशगुणः प्राप्तः कर्षसार्द्धशतद्वयः ॥९॥
अथोवाच नृपः साधु भद्र दास यतोऽभवः । त्वं क्षुद्रेऽर्थेऽपि विश्वस्तोऽतः स्या दशपुरी
पतिः ॥१०॥ द्वितीयस्त्ववदन्नाथ प्राप्तस्त्वद्रूप्यतो मया । लाभः पंचगुणः कर्षसपादैक

[illegible]त्मकः ॥११॥ ततस्तमपि भूमीशोऽभ्यवदत् साधु किंकर । विश्वस्त त्वं तथा पंचपुरेष्वो [illegible]ऽभवेरिति ॥१२॥ इतरस्त्ववदन्नाथ निजं पश्यात्र रक्षितं । यत्नतो गात्रमार्जन्यां [illegible]कर्षं षट्पलं मया ॥१३॥ ऊयस्त्वं हि नरो यन्न न्यदधास्तद् हरस्यपि । नावपो यच्छिन्नत्स्येतत् त्वत्तो ऽत्रस्यमहं ह्यतः ॥१४॥ इत्युक्ते तेन भूमीशः प्रत्यवादीत् तवाप्यहं । उक्तेर्विचारयेयं त्वामिदानीं मन्द किंकर ॥१५॥ ऊयो ऽहं हि नरो यन्न न्यदधां तद् हराम्यपि । नावपं यच्छिन्नमेतदिति ज्ञातं त्वया किल ॥१६॥ अतो रूप्यं मदीयं त्वं कथं स्थाने कुसीदिनां । नार्पयो ऽथाहमात्मीयं सवृद्धि प्राप्नुयां पुनः ॥१७॥ इत्युक्त्वा स परिस्थेभ्यो ऽब्रवीत् कर्षं सषट्पलं । अस्माद्धृत्वा नराद्दत्त किंकरायादिमाय मे ॥१८॥ इत्याज्ञाप्तास्तु ते नाथ कर्षसार्द्धशतद्वयं । अमुष्यास्त्यधुनेत्यूचुः सतूचे स्यात्तथापि तत् ॥१९॥ यो दध्याद्धि नर

स्तस्मै देयं भूर्यपि किंतु यः । न दध्यात् तत आकर्ष्यं तद्वस्त्वित्यपि वच्मि वः ॥२०॥ किंतु ये मां नृपं न स्वीकर्त्तुकामाः पुराभवन् । दुर्हृदस्तान् समानीय हत यूयं मदन्तिके ॥२१॥ गुरूरुवाच ॥ इति दृष्टान्तवाक्यं सो ऽनुगान् प्रोच्य महाप्रभुः । मार्गे यैरूषलेमीये तैर्वृतो ऽचलद् मतः ॥२२॥ अवशिष्टे च षड्घस्त्रे त्राणपर्व्वसमागतेः । बेथनीयामुपातिष्ठन्महानगरसन्निधौ ॥२३॥ पुनर्जीवितलाजारगृहं तर्हि विवेश सः । हृष्यन् यात्रान्तिमक्रोशं राज १५१
वन् स्वपुरे ऽचिरात् ॥२४॥ शिष्य उवाच ॥ भव्यां पूर्णचरित्रस्य यां जिघांसुपुरे ऽचिरात् । स्वागतिं दाविदुत्पन्नप्रभोर्गीतसमावृतां ॥२५॥ प्रोवाच स पुरा धूर्त्तैरोद्यभृतकान् प्रति । तां गुरो श्रोतुमिच्छामि तत्काले ऽत्यन्तिके ऽधुना ॥२६॥ किंतु दृष्टान्तवाक्यं यदीशराज्यप्रतीक्षिणां । शिष्याणामुपदेशाय यात्राशेषे ऽब्रवीत्प्रभुः ॥२७॥ तद्वै राज्यप्रलब्ध्यर्थे दूरा

ध्यातिगोचरं । अत्याश्चर्य्यं मया ज्ञातं खृष्टसिद्धिप्रतीक्षिणा ॥२८॥ गुरुरुवाच ॥ अवश्यं
तत्रागा
स्वर्गगमनं नित्यराज्यप्रलब्धये । इत्यज्ञातं तदा खृष्टशिष्यैरपि यथा त्वया ॥२९॥
वश्यकी त्वासीदमीषां कुक्रिया नृणां । दुर्हृदां तन्नृपत्वं न स्वीकर्तुमभिलाषिणां ॥३०॥
तस्यास्त्वप्रत्ययो नूनं प्रजाया हेस्त्रयेलिनां । पश्यन्त्या अपि नम्रस्याशीर्युक्तां राज्ञ आगतिं ॥
३१॥ तज्ज्ञातः सत्प्रभोश्चैवाज्ञातस्याघहृतो बधः । ततः स्वर्गगतस्यापि तस्य दिग्विजयो १५२
महान् ॥३२॥ एतत्सर्व्वप्रबन्धस्ते कथनीयोऽतिविस्तरात् । आदौ तु श्रूयतां शिष्य
यथोक्तो भव्यवादिना ॥३३॥ इषाय उवाच ॥ गुरुराड्विषयां तु नः श्रुतिं क इह प्रत्ययका
र्यमन्यत । किमु कस्य जनस्य गोचरे विभुबाहुर्विजयात्मको बभौ ॥३४॥ नवपल्लववद्धि सद्गुरुः
स समुत्थास्यति तत्समक्षतः । अतिशुष्कधरास्थलात्तथा तरुणं मूलमिवाक्ष्यगोचरं ॥३५॥

न हि तस्य सुरूपता स्थिता न रुचिर्वास्मदवेक्षणार्हिता । अभिदृष्टमपीह तन्मुखं न तदास्मा
भिरभीष्यते ऽन्तैः ॥३६॥ मनुजैरवहेलितो ऽस्ति सो ऽर्द्दितमर्त्यश्च सुवित्तदुःखकः । समप
ह्नुतवन्नवच्च सो ऽवमतो ऽस्माभिरनादृतो ऽपि च ॥३७॥ किल दुःखचयं स नो ऽधरत् किल नो
ऽर्त्तीरसहिष्ट स स्वयं । अविदां तु मतः स नो गणैः परमेशाहतपीडितो नरः ॥३८॥ स तु
नो व्रणितो ऽप्यधर्म्मतो ऽस्मदघेभ्यो ऽबधि शासनं च नः । तदुपर्य्यपि सन्धये स्थितं क्षतिभि १५३
स्तस्य चिकित्सनं च नः ॥३९॥ वयमप्यविवन्निजे निजे ऽध्वनि सर्व्वे निहितानना भ्रमैः ।
विभुरेव तु नो ऽघसंचयं सकलानां तदुपर्य्यपातयत् ॥४०॥ अत एव स दण्डभाक्कृतो दृढमार्त्तो
ऽपि च मौनमाश्रयत् । अविवत्स इवाहतो बधे ऽविरिवोर्णापरिहृत्सु चारवः ॥४१॥ स सपीड
विचारतो हृतो ऽथ तदायुः खलु केन शस्यते । निरभिद्यत जीवतां स्थलान्मम लोकाघत एव

x

स क्षतः ॥४२॥ कुजनैः सह तस्य च व्यसोर्विहितं गर्त्तनिखातमेकदा । धनिना तु सह

स्थितः परे मृदि सो ऽभूत्समवाप्तमृत्युकः ॥४३॥ अकृते ऽपि च तेन किल्विषे ह्यनवाप्ते

ऽपि तदुक्तिषु च्छले । व्रणकृद्व्यथया तथापि तं विभुराघातयितुं समैहत ॥४४॥ निजजीवन

मद्धसे यदा बलिमीशार्पितमुत्सृजेत्तु सः । तत एव निजान्वयोद्भवांश्चिरजीवी स समी

क्षिता मुदा ॥४५॥ अथ तस्य करे विभुस्पृहा प्रणिधेयैष्यति सिद्धिमुत्तमां । फलमात्मपरिश्र १५४

मस्य चातिशयं वीक्ष्य तदा स तर्प्स्यति ॥४६॥ स च मे परिचारकस्तदा परिशुद्धो बहुलान् स्व

विद्यया । परिशोधयिता यतः फलं तदघानां स सहिष्यते दृढं ॥४७॥ महतां सहभाङ्ग मया

कृतो विभुना कार्य्य इतः स भूतले । स तथा सह वीरपुङ्गवैररुलोप्राणि विभक्ष्यति ध्रुवं ॥

४८॥ स यतो गणितो ऽघकृत्सु वै निदधौ जीवमपि स्वयं मृतौ । बहुमानुषपापहृच्च सो ऽघ

कृदर्थे ऽपि चकार चार्थनां ॥४९॥ गुरुरुवाच ॥ अनघस्य गुरोर्नृणां पापतो दण्डसाहिनः । जनैरवमतस्य स्वैर्महतस्त्वीशगोचरे ॥५०॥ सदात्मव्याप्तकविना तथोक्तं वर्णनं पुरा । यथा दृष्टमभूत्तेन दूरतः कालदर्पणे ॥५१॥ किंतु पादोनसाहस्रे वर्षाणां वै ततो गते । यदभूद्वर्णनस्यास्य भूतले परिपूरणं ॥५२॥ तत् संपूर्णचरित्रस्य येषूखृष्टस्य सत्प्रभोः । सहनोत्थित माहात्म्यं शिष्य वक्ष्यामि ते परे ॥५३॥ इति श्रीखृष्टसंगीतायां सत्पालकचरित्रपर्वणि 
(इषायभव्यवाक्यानां त्रिपंचाशत्तमसर्गाल्लूकस्योनविंशसर्गाद्योहन्नेर्द्वादशसर्गाच्चोद्धृतो) यात्राशेषो नाम त्रयोविंशोऽध्यायः ॥ समाप्तं चेदं चतुर्दशोनद्विशताधिकसहस्रश्लोकात्मकं सत्पालकचरित्रनामकं तृतीयं पर्व ॥




# श्रीख्रिष्टसंगीता

## मोक्षमाहात्म्यपर्व

# CHRISTA-SANGÍTÁ,

OR THE

# SACRED HISTORY

OF

# OUR LORD JESUS CHRIST,

*IN SANSCRIT VERSE.*

## BOOK IV.

## THE PASSION AND GLORIFICATION.

CALCUTTA:

BISHOP'S COLLEGE PRESS.

1838.

श्रीपित्रे पुत्राय च सदात्मने च नमः ॥ शिष्य उवाच ॥ सत्पालको योऽपचिताव्यवाप्त्यै
तन्मुक्तये चाववतार नाकात् । स्वे स्वेऽपि मार्गे निहिताननान् प्रागभ्रमान्निनीषुः पितरं
प्रतीशं ॥१॥ स्वजीवनं योऽविकृते निधातुं पुनश्च तल्लब्धुमपि क्षमोऽभूत् । निजाततथाज्ञां
पितुरेव पूर्वं ह्याप्नोद्यथोचे कुहृदो यहूद्यान् ॥२॥ योऽव्यक्तवाक्योऽपि सुदिष्टधर्म्मो नृदुःखहर्त्ता
पि सुभुक्तदुःखः । यो मृत्युजेतापि जिघांसुहस्ते स्वयं स्वजीवं न्यसितुं जगाम ॥३॥ योऽना १
दृतोऽप्यात्ममहत्त्वमतैर्ज्ञातोऽतिदीनैरभिषिक्तराजः । ऐश्वर्य्यसत्ताश्रय आर्य्यशक्तिः सर्वार्त्ति
धारी करुणार्णवात्मा ॥४॥ तत्सद्गुरूर्म्मीविषयां श्रुतिं वै सदात्मशक्त्या कविना प्रगीतां । कथं
स्वचिन्तेन गुरोऽवगन्तुं क्षमे तदासक्तहृदप्युताहं ॥५॥ सोऽर्त्तः कथं स्यान्महतां सहांशी स दण्ड
भाक् शोधयिता कथं नॄन् । ईशाहतः सोऽप्युरुलोप्रभागं वीरैः सहाप्ता कथमुग्रदुःखात् ॥६॥

तत्सर्वतात्पर्य्यबुभुत्सयाहं वृतस्तवाचार्य्य कथां शृणोमि । महानगर्य्यां चरमां तु यात्रां
श्रुत्वाहमत्येधिततद्विवित्सः ॥७॥ यिरूषलेमे ह्यचिराय भाविनी ख्रीष्टस्य या निःसृतिरेव
भूमितः । महागुरू यद्विषये ऽद्रिशेखरे सहोचतुर्गुर्वधिपेन भास्वता ॥८॥ सावश्यको तस्य हि
राज्यलब्धये दूरस्थितस्वर्गगतिर्महीतलात् । अतीवसान्निध्यमगादिति श्रुतं त्राणोत्सवे
ऽपेक्षित ऐस्रयेलिभिः ॥९॥ स्वजीवनोत्सर्गकृते ऽविवत्सवद्यात्रा प्रभोस्तर्ह्युदिता महापुरे । तद २
न्तिमक्रोश इहावशिष्यते तदद्भुताशेषवचः प्रपूर्त्तये ॥१०॥ गुरुरुवाच ॥ बुभुत्सां तव शिष्या
हमितः पूरयितुं भृशं । बेथनीयागतस्यैव कथयिष्ये क्रियाः प्रभोः ॥११॥ राजवत् स्वपुरे
हि स्वात् प्रवेशात् पूर्व्वमेव सः । महापर्व्वसमारम्भात् प्राक् षष्ठदिवसे शनौ ॥१२॥ मार्थायाः
संस्थितो गेहे ख्याते नाम्नैव तत्पितुः । कुष्ठिसीमोनसंज्ञस्य तया स समभोज्यत ॥१३॥

भोजनायोपविष्टेषु लाजारोऽपि स्थितो नृषु । तत्स्वसा च तदा मार्था येष्वः सेवां मुदाकरोत् ॥
१४॥ भगिन्यन्या मरीया तु पंचविंशतिकर्षकं । अतिमूल्यजटामांसीपात्रं चिक्कण
मानयत् ॥१५॥ तन्मुखं च विनिर्भिद्याखिलां पिष्टमिसीं वरां । तद्यीसोनस्य ख्रीष्टस्या
पातयन्मूर्द्धि सिक्तये ॥१६॥ तत्पदौ च तथाभ्यज्य स्वकेशैरप्यमार्जयत् । पूरितं च गृहं
सर्वं जटामांस्याः सुगन्धतः ॥१७॥ अथ द्वादशशिष्यैक इष्कार्य्योत्यभिधः शठः । यहूदो २
निन्दनवचस्तत्क्रियाविषयेऽब्रवीत् ॥१८॥ इष्कार्य्योतियहूद उवाच ॥ किमर्थेऽयं व्ययो
ऽकारि किंकृते वेयमुत्तमा । न विक्रीता जटामांसी रजताशीतिकर्षकैः ॥१९॥ अधिकै
र्वापि विपणौ ततस्तन्मूल्यमीदृशं । शक्नुयाम प्रदातुं हि दीनेभ्यो दयया वयं ॥२०॥ गुरुरु
वाच ॥ इत्युक्तं न दरिद्राणां कृपार्थं तेन लिङ्गिना । यस्मात्तु तत्क्षणे सोऽभूत् कोषधृच्चौर्य्यमानसः ॥

२१॥ तस्मात्तत्कोषपूर्त्तिं स ऐच्छदन्ये तु तद्वचः ।श्रुत्वा शिष्या दयाकारं तथोचुरविदो मिथः॥
२२ ॥ अनुभूय प्रभुस्त्वेतन्मरीयानिन्दनं कृतं । स्वशिष्यैस्तदसन्तुष्टस्तदा तानिदमब्रवीत् ॥
२३ ॥ श्रीयेषूरुवाच ॥ तिष्ठत्वस्याः क्रिया नार्य्याः किमर्थं यूयमेव तु । क्लेशयध्वे वचोभिस्तां
भद्रकर्म्मविधायिनीं ॥२४॥ सर्व्वदा वो ऽन्तिके दीनाः स्थिता नूनं यथेच्छया । अनुग्राह्या ननु
स्थाताहं तद्वद्वो ऽन्तिके सदा ॥२५॥ यदशक्नोत्तु तच्चक्रे नार्य्येषा मय्युपस्थिते । मृत्स्थापनाय ४
देहं मे ऽभ्यानञ्ज ह्यग्रतो ऽपि सा ॥२६॥ यत्र यत्र सुवार्त्तैषा मन्मृत्युविषया त्वितः । विस्तृता
युष्मदुक्त्या स्यात् समस्ते भूमिमण्डले ॥२७॥ तत्र तत्र क्रियैषापि नार्य्यास्तत्स्मृतये सदा । नरै
र्विख्यास्यते नूनमित्थं शिष्या ब्रवीमि वः ॥२८॥ गुरुरुवाच ॥ मरीयायास्तथा कर्म्माखिलैः
ध्वंस्यमुदैरयत् । मुमूर्षुर्नरमुक्त्यै स लोभेर्ष्यापरिहारकः ॥२९॥ किंत्वेतच्छ्रनिवाराद्वै मानसं

नस्य लोभिनः । इष्कार्य्योतियहूदस्य दुष्टसंकल्प आविशत् ॥३०॥ यत्पूर्वैः कालमचिरा
नस्मै धूर्त्तो ऽभिशापकः । तमोनाथो ददौ प्राप्तहितस्वसमयः परे ॥३१॥ धनलब्ध्यै ह्यतः
श्रेष्ठयज्वादीनां द्विषां करे । निधातुं स्वामिनं स्वीयं यहूदः समकल्पयत् ॥३२॥ शिष्य
उवाच ॥ कृतघ्नेन कथं तेन सत्प्रभुर्वैरिणां करे । निहितो ऽभूत्तदाश्चर्य्यवाक्यपूर्त्यै गुरो वद ॥
३३॥ गुरुरुवाच ॥ इतश्चतुर्दिने शिष्य तेनाभद्रेण पूरितः । स्वामिविक्रयसंकल्पो यथोत्पन्न ५
स्तदा हृदि ॥३४॥ अचिरात् कथयिष्ये तत् किंत्वेतत्कालयोर्द्वयोः । मध्ये यदभवच्छिष्य
श्राव्यं तत्प्रथमं त्वया ॥३५॥ पूर्वोक्ताद्भोजनात्त्वाद्यं वक्ष्ये परदिने कृतं । बध्यस्यापि प्रभोः
स्वीये पुण्ये स्वागमनं पुरे ॥३६॥ व्यूहा यैरूषलेम्या हि तं मार्थागृहसंस्थितं । श्रुत्वा तत्रेक्षितुं
जग्मुर्लाजारं च पुरामृतं ॥३७॥ तत्पुनर्जीवनात्ते हि जीवदस्य महागुरोः । खृष्टत्वं

व्यश्वसन् स्वे च प्रत्यैक्षन्तागतिं पुरे ॥३८॥ तेषां यात्रां तु सश्रद्धां विज्ञाय श्रेष्ठयाजकाः ।
लाजारमपि संहर्तुं सयेषू समकल्पयन् ॥३९॥ शनौ सायं बभूवेदं मध्याह्ने तु रवौ प्रभुः ॥
आरेभे श्रेष्ठवृक्षाद्रेरवतर्त्तुं महापुरे ॥४०॥ तदा स बेथनीयातो नुदन् शिष्यावधःस्थिते ।
बेथफाग्यभिधे ग्रामे ऽन्तिके ताविदमादिशत् ॥४१॥ श्रीयेषूरुवाच ॥ ग्राममग्रेस्थितं गत्वा
बद्धां तत्राप्स्यथः खरीं । तद्वत्सं चाप्यनारूढं कैश्चित् क्वापि सहस्थितं ॥४२॥ तद्द्वयं मोचयित्वा ६
तु साक्षादानयतं मम । तदा चेत्तु युवां ब्रूयात् को ऽप्येतत्कुरुथः कथं ॥४३॥ इति पृष्टौ वदेतं
तं प्रभोरावश्यकं तयोः । इत्थं श्रुत्वा त्वसौ नेतुं तौ मुदाप्यनुमंस्यते ॥४४॥ गुरुरुवाच ॥
तथोचे प्रभुरार्य्यः स भव्यवाक्यस्य पूर्त्तये । प्रोक्तस्य जकरीयेणाद्दुजेनेशप्रवाचिना ॥४५॥
शिष्यैरपि तदा यन्न ज्ञातं तदचिरात् प्रभौ । आत्मतेजः प्रपन्ने ऽतस्तैः खृष्टविषयं स्मृतं ॥४६॥

जकरीय उवाच ॥ अतीव प्रहृष्यैव शीयोनकन्ये यतोऽहो नृपस्ते त्वदग्रे समैति । स नम्रो
ऽस्ति धर्म्मी विमुक्तिप्रदायी समासीन आर्य्योऽपि खर्य्याः स वत्से ॥४७॥ गुरुरुवाच ॥ तदा
ऽर्य्यवचःपूर्त्तिं परे पंचशताब्दके । कृतां खृष्टेन तद्वत्स्वामार्य्यां प्रविशता पुरीं ॥४८॥ खर
वत्ससमासीनयेष्वा नम्रेण धर्म्मिणा । अन्वितेन महाहर्षैः सर्व्वशीयोनवासिनां ॥४९॥ तां
प्रवक्ष्यामि ते शिष्यान्तिमक्रोशे यथाभवत् । यात्रायास्तौ यदा शिष्यौ प्रभुप्रोक्तान्यवापतुः ॥ ७
५०॥ खरवत्सं च तत्राप्त्वानीय च स्वाम्यनुज्ञया । तस्मिन्नास्तीर्य्य वस्त्राणि स्वान्यारोहयतां
प्रभुं ॥५१॥ इति श्रीखृष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (जकरीयभव्यवाक्यानां नवमसर्गाद्
योहन्नेर्द्वादशसर्गान्मत्थायस्यैकविंशषड्विंशसर्गाभ्यां मार्कस्यैकादशचतुर्दशसर्गाभ्यां लूकस्योन
विंशसर्गाच्चोद्धृतो) मुमूर्षुदेहाभ्यञ्जनं नाम प्रथमोऽध्यायः ॥

गुरुरुवाच ॥ कः पूर्व्वदिक्स्थसरणौ बहुरार्य्यपुर्य्यां व्यूहो निरेति परिहर्षनिमग्नचेताः । आश्रेष्ठवृक्षगिरि पद्धतिमेव सर्व्वां संपूरयन् परमभूभुगपेक्षणोक्त्या ॥१॥ हस्तैर्धरन्ति बहव स्तृणराजवृन्तान्यागन्तुरप्यधिपतेर्जयलक्षणार्थं । उद्धृत्य चित्रवसनानि निजानि चान्ये स्तृणव न्त्यधोऽपि तदुपर्य्ययनाय राज्ञः ॥२॥ अन्ये तथा तदुरुसंहतिमध्यसंस्थाः श्रेष्ठद्रुमेभ्य इह
खल्ववलूय शाखाः । सर्व्वत्र वर्त्मनि मुदाप्यतिचारुपत्राः स्तृणवन्त्यधः परमराट्सृतिभूषणाय ॥ ८
३॥ सत्पार्थिवस्तु स यदावततार शैलात् सर्व्वे तदा वरजयध्वनिमूचुरुच्चैः । प्रत्नस्य राज्ञ उरु कीर्त्तिमतो वचोभिस्तच्छ्रेष्ठपुत्रविषयैः किल दाविदस्तैः ॥४॥ यहूद्या ऊचुः ॥ आयाति योऽत्र परमेश्वरनामशक्त्या धन्योऽस्तु स प्रणत ईश्वरसद्मसंस्थैः । त्राहीश नो वितर चात्मकुलाय भद्रं त्राहीश्वरेति वचसाधिपमाश्रयेम ॥५॥ आयाति यः स्वपितृराज्यविवृद्धये नो धन्योऽस्तु

स प्रथितदाविद आर्य्यपुत्रः । त्राहीश नोऽद्य हि तदद्भुतकर्म्म दृष्ट्वा तत्स्थापितेऽश्मनि वरे मुदिता भवेम ॥६॥ आयाति योऽत्र हि न उज्ज्वलदस्य नाम्नेशस्योत्तमक्रतुहुतस्य स मङ्गलोऽस्तु । त्राहीश्वरेति भुवि सन्धिकृते प्रगेयं स्वर्गेऽपि चोर्द्ध्वतमवासिगणैः प्रकीर्त्यै ॥७॥ गुरुरुवाच ॥ इत्थं तदग्रगगणा अनुगाश्च नेदुस्तालीयवृन्तविधृतः प्रभुमीडयन्तः । तैरावृतश्च खरशिश्वधिरूढ इवाधीशोऽभ्यगात्सुविनयः स यिरूषलेमं ॥८॥ लाजारमृत्युविजयं प्रभुणा कृतं हि ये पूर्व्वमेव ददृशुस्तममी प्रतीयुः । व्यूहस्तदापि च तदद्भुतकर्म्म शृण्वन् मृत्युञ्जयं सकलराजममन्यतातः ॥९॥ तेषां विलोक्य तु फरीष्यगणाः प्रतीतिं त्राहीश्वरेति विजयध्वनिना विभान्तीं । एतद्गुरोश्चिरविरोधनतोऽधुनाहो किं वः फलं तमनुयाति जगद्ध्यशेषं ॥१०॥ इत्यूचिरेऽर्द्दितहृदो मिथ ईर्ष्यया ते शेषा जनास्तु सकलाः प्रशशंसुरुच्चैः । हेशक्रियास्मरणहृष्टहृदो

 C

थ कोचिद्दुर्हृतफरोष्यकगणे प्रभुमप्यवोचन् ॥११॥ स्वामिन्नियत्स्तुतिगिरोऽनुचिताः प्रवक्तुं शिष्यान्निवर्तय निजानिति तूदितः सः । नम्रोऽधिपोऽवददिमे यदि नीरवाः स्युस्तर्ह्युन्नदेयुरूपला अपि भद्रनुत्यै ॥१२॥ इत्युक्तवांस्तु स यदातिसमीपसंस्थं कान्तं पुरं परिददर्श महोपलाढ्यं । तद्वासिनामघफलं करुणार्द्रचित्तो जानंस्तदा किल रुरोद जगाद चैव ॥१३॥ श्रीयेषूरुवाच ॥ अहह त्वमदम्यमानसे पुरि मेऽस्मिन् दिवसे यदि स्वके । कुशलानि निजान्यवैस्तदा कियदाप्यं सुफलं त्वयाप्यतः ॥१४॥ अधुना त्विह तानि तेऽक्षितः परिगुप्तान्यभवन् समन्ततः । कुशलाविदि चाचिरात्परे त्वयि दुष्टो निपतेद्दिनव्रजः ॥१५॥ परितो हि तवारयस्तदा परिखां कुर्य्युरतीवकोपिनः । परिवेष्टितया च तैस्त्वया दृढपीडा समवाप्स्यते तदा ॥१६॥ अथ भूमितलेऽपि निर्दयं दलनीया त्वमहो द्विषां बलैः । तव चान्तर एव

सूनवो हननीया असिभिर्दुरात्मनां ॥१७॥ उपलोपरि चोपलोऽप्यतो न विहातव्य इहालयेषु
ते । यत एव निजावलोकनागतकालं त्वमवेर्न किंचन ॥१८॥ गुरुरुवाच ॥ इत्युक्तवान्
सदय आगत ईशनाम्ना शीयोनभूभुगवलोकनकालशेषे । श्रेष्ठद्रुमाद्रितलतिष्ठदुपत्यकान्ते
किद्रोणसंज्ञसरितं द्रुतगां ततार ॥१९॥ अभ्यर्णतां तत उपेत्य महापुरस्य व्यूहैर्वृतः क्रमश
एव विवर्द्धमानैः । तत्संस्तुतोऽपि च तदा नगरस्य कान्तं प्राग्दिक्स्थगोपुरमिह प्रविवेश ११
नाथः ॥२०॥ विष्टे तथा सदधिपे तु यिरूषलेमं त्राहीश्वरेति नदतां महिते गणेन ।
संक्षुब्धमेव सकलं नगरं बभूवाशेषैश्च पृष्टमिति कोऽस्त्ययमाप्तनूतिः ॥२१॥ गालील्यदेश
नगरान्नशरेदभिख्यादीशप्रवाच्ययमिहागत एव येषूः । इत्थं ददौ प्रतिवचः स्तुतिकर्तृवृन्दं
त्राणोत्सवार्थसमुपस्थितसर्वनृभ्यः ॥२२॥ रथ्यास्वतीव महतो नगरस्य खृष्टोऽग्येऽतश्चाल

भूतकान्वित आर्य्यराजः । ग्राहीश्वरेति च सुसंस्मृतकाव्यवाक्यैः सस्वान सर्व्वमिव तैः पुर
मोघगीतैः ॥२३॥ तद्वज्जयध्वनिकृदन्वित ईशपुत्र ईशार्य्यमन्दिरसमीप उपस्थितो ऽभूत् ।
तत्रावरुह्य खरवत्सत इव नम्रः पुण्याजिरेष्ववविशदोघवृतो निजेषु ॥२४॥ तत्राखिलानि
परिदृश्य मलापहृत्यै सायं तदा सति गतेषु च दुर्बणिक्षु । पुण्यालयस्य परिपालक इव खृष्टः
श्रेष्ठदु पर्व्वतमुपैतुमियेष भूयः ॥२५॥ किंत्वन्धखञ्जनिकुरम्बमिह प्रविष्टं मोक्तुस्तदा सदय १२
सिद्धिफलान्यवाप्तुं । स त्वात्मसद्मनि तदा स्थित आर्य्यराजः सुस्थीचकार सकलान् करुणा
र्द्रचेतमा ॥२६॥ साध्यापकाः परमयज्वगणास्तु सर्व्वाश्चर्य्यक्रिया इह सुनम्रनृपस्य दृष्ट्वा ।
ग्राहीश्वरेति तनयाय तु दाविदो ऽस्मै येष्वे नमो ऽस्त्विवति शिशूक्तमपि प्रबुध्य ॥२७॥ ईर्ष्या
विरक्तहृदया अभवन्नमुष्य खृष्टत्वसाक्षिनिकरैर्विभुसद्मसंस्थैः । तं चोचुरेव कुपिता न

शृणोषि किं त्वं रे ऽज्ञैस्तवेश्वरवदेव कृतां प्रशंसां ॥२८॥ इत्थं निशम्य परमेश्वरपुत्र आर्य्य
स्तेषां वचांसि कुहृदामहरोणजानां । तान् प्रत्युवाच खलु तद्वचनं शृणोमि यूयं तु नापठत
किं नृपदाविदुक्तं ॥२९॥ स्वर्गोपर्य्यपि गौरवं निहितवान् स्वीयं विभो नाथ नो भूमौ त्वं स्तन
पायिनामपि मुखात् प्राप्नोः शिशूनां स्तुतिं । तेषां क्षीणवचोभिरेव सुदृढां शक्तिं त्वमस्था
पयस्तूष्णीं कर्त्तुमतिप्रचण्डमनसो ऽप्युर्व्वीस्थितान् वैरिणः ॥३०॥ गुरुरुवाच ॥ इत्थं प्रत्नन्
पस्य कीर्त्तितगिरा तद्वंश्य ईशात्मजो ऽमूंस्तूष्णीमकरोत् स्वगौरवरिपून् शक्तान् प्रचण्डात्मनः।
शिष्यावध्यखिलैश्च तर्ह्यवनतो व्यूहे विभोरालये सन्ध्यान्ते वरशिष्यषड्द्वयवृतो ऽतो बेथ
नीयां गतः ॥३१॥ इति श्रीखृष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (द्वाविंशीतानामष्टमा
दष्टादशाधिकशततमाच्च मत्थायस्यैकविंशसर्गान्मार्कस्यैकादशसर्गाल्लूकस्योनविंशसर्गाद् यो 13

हल्लेर्द्वादशसर्गाद्बोद्धृतः) पुण्यसप्ताहारम्भणे रविवारचरित्रसूचकः मद्राजप्रवेशो नाम द्वि
तीयो ऽध्यायः ॥
गुरुरुवाच ॥ पुण्यस्योक्तस्य खृष्टीयैः सप्ताहस्य ह्युपक्रमे । यदभूद्रविवारे ऽस्मिन् प्राङ्महा
त्राणपर्वणः ॥१॥ दाविदुद्भवराजस्य स्वे पुरे मन्दिरे ऽपि च । जकरीयमलाकीयादिभिः
प्रोक्तं प्रवेशनं ॥२॥ कथितं तन्मया शिष्य किंतु तद्वाक्यपूर्तये । अश्विनां शोधनायैव वहि 14
ष्कृत्ये मलस्य च ॥३॥ मोक्त्रा पावकरूपेण यत्कृतं निजमन्दिरे । सोमवारे परे तत् त्वं शृणु
मे मदतो ऽधुना ॥४॥ शयित्वा बेथनीयायां प्रभुरार्य्यो ऽरुणोदये । वृतो द्वादशशिष्यैः स्वैर
भीयाय महापुरं ॥५॥ पथिमध्ये बुभुक्षुस्तु बहुपर्णमुडुम्बरं । दूराद्दृष्ट्वान्तिके ऽगच्छत् फल
लाभप्रतीक्षया ॥६॥ दलमात्रं तु तत्राप्त्वानायातफलकालके । ऊचे त्वत्तः फलं को ऽपि मा

भक्ष्याच्छाश्वतीः समाः ॥७॥ इत्युक्तं च तदाशृण्वन् शिष्याः सत्स्वामिना निजे । यैरूषलेम
कोद्याने चिरादन्विच्छता फलं ॥८॥ अदम्या तु पुरी स्वीयावलोकसमयाबुधा । वाह्यधर्म्मे
दलाप्त्वापि ददती नतु सत्फलं ॥९॥ नित्यशुष्कतया दण्ड्या तदा स्वप्रभुणा दृढं । गुप्तेषु
कुशलेष्वेवाक्षितस्तस्याः समन्ततः ॥१०॥ तल्लक्ष्मोडुम्बरः शुष्को भूनः प्रभुगिरा क्षणात् ।
प्रागच्छत् स तु शिष्यैः स्वैस्तदर्थाविद्भिरन्वितः ॥११॥ अथ द्वादशभिः सार्द्धं तैर्विवेश महा १५
पुरीं । स्वावलोकाविदं प्रातर्मन्दिरे चाप्युपस्थितः ॥१२॥ तद्वाह्याजिरमाविश्य परदेशा
जिराभिधं । अन्यजैः केवलं गम्यं यत् सत्यार्च्चावलम्बिभिः ॥१३॥ पूर्णं तत्प्राप सद्राजो महा
पर्व्वसमागतैः । मेध्यादिक्रेतृविक्रेतृगणैर्लुब्धैर्यहूदकैः ॥१४॥ अकस्मात्तु यथोक्तं स्वे प्रभु
रागत आलये । वाङ्मात्रेणाखिलान् क्षिप्रं वहिरद्रावयत्ततः ॥१५॥ बणिजां तत्र वीथीश्च

परिचर्य्यै सरोप्यकाः । स्थापिता बलिदानार्थं समस्ताः सोऽक्षिपद्भुवि ॥१६॥ तद्वत्कपोत
विक्रेतृवर्गाणामासनानि सः । अधश्चिक्षेप पुण्येशालयमार्ज्जनहेतवे ॥१७॥ न किंचिच्चापि
पात्रं स ऐहिकार्थोपकारकं । अनुजज्ञे समानेतुं पारमार्थ्यगृहाजिरे ॥१८॥ तत्कृत्वा
मन्दिरस्थान् स सकलान् यज्वनोऽपि च । लाभार्थं तदनुज्ञातृनिदं प्रभुरुपादिशत् ॥१९॥
यीयेषूरुवाच ॥ समस्तान्वयार्थेऽपि खल्वालयो मे सदा प्रार्थनामन्दिराख्यो भुवि स्यात् । १६
इतीशप्रवक्त्रोदितं किंतु यूयं परास्कन्दिगर्त्तं तमेतर्हि चक्र ॥२०॥ गुरुरुवाच ॥ इषायस्य
तथा वाचा परदेशकृतेऽपि तत् । शुद्धीकार्य्यमुपादिश्य सवाह्याजिरमन्दिरं ॥२१॥ प्रोच्य
सर्व्वान्वयानां च विभोः पुण्यतमालये । प्रार्थनायै समाह्वानं कार्य्यं स्वक्रतुनाचिरात् ॥२२॥
यिरिमीयस्य वाचापि मन्दिरस्थैस्तयेत्कान् । अनिन्दत्कुर्व्वतो लुब्ध्या तत् परास्कन्दि

गर्व्ववत् ॥२३॥ अतिक्रुद्धास्त्वतो भूताः प्रधाना याजकास्तदा । साध्यापकाः प्रभौ तत्र शक्तिं दर्शयतीदृशीं ॥२४॥ तं तद्वीश्वर्य्यकर्त्तारं व्यूहनूत्नोपदेशदं । हन्तुमैच्छन् महेर्ष्यातो ऽत्र स्यंस्तु निपुणा अपि ॥२५॥ सर्व्वसामान्यवर्गो हि तत्क्रियौघातिविस्मितः । अद्रवन्मन्दिरे श्रोतुं नम्रराजोपदेशनं ॥२६॥ तद्वत्प्रत्नकविद्वयस्य वचनैः ख्यातैः स ईशात्मजो ऽमूंस्तूष्णीमकरोत्परान्वयरिपून् लुब्धान् विभोरालये । तावत्यह्न्युपदिश्य चेह सकलैस्तत्रस्थितौघैर्नतः १७
सन्ध्यान्ते वरशिष्यषड्द्वयवृतो ऽतो बेथनीयां गतः ॥२७॥ इति श्रीखृष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (इषायभव्यवाक्यानां षट्पंचाशत्तमसर्गाद् यिरिमीयभव्यवाक्यानां सप्तमसर्गान्मत्तीयभव्यवाक्यानां तृतीयसर्गान्मत्थायस्यैकविंशसर्गान्मार्कस्यैकादशसर्गाल्लूकस्योनविंशसर्गाच्चोद्धृतः) पुण्यसप्ताहसोमवारचरित्रसूचकः सर्व्वान्वयप्रार्थनालयशोधनं नाम तृतीयोऽध्यायः ॥

शिष्य उवाच ॥ सूर्य्याहे स्वागतिं प्राप्तः स्वालये तत्र वान्यजान् । परे ऽह्याहूतवान् किं
मङ्गलाहे ऽकरोद्गुरो ॥१॥ गुरुरुवाच ॥ मार्थागेहे शयित्वा स प्रागिवाथारुणोदये । वृतो
द्वादशभिः शिष्यैरभीयाय महापुरं ॥२॥ ततो वर्त्मन्युपस्थाय ह्योदृष्टोडुम्बरस्थले । आमूलं
शुष्कमाप्त्वा तं शिष्या विस्मयमाययुः ॥३॥ प्रस्तरश्च ततो ऽवादीदहो यमशपस्तरुं । बहु
पर्णं कियच्छीघ्रं गुरो ऽयं शुष्कतां गतः ॥४॥ इति संश्रुत्य तेनोक्तं सर्वशिष्यार्थवादिना । प्रभु १८
र्निष्फलनाशाङ्कृदातोवाचाखिलानिदं ॥५॥ श्रीयेषूरुवाच ॥ ईशे श्रद्धैव युष्माभिर्निःशङ्कं
क्रियतामतः । न कार्य्यं केवलं तद्वद्यन्मयोडुम्बरे कृतं ॥६॥ किन्तूत्थाय पताब्धौ त्वमि
त्युक्तो गिरिरप्ययं । युष्माभिर्दृढविश्वासैर्विशङ्कैस्तत्करिष्यति ॥७॥ इत्थं वो वच्म्यृतं
यद्यत्त्वाप्तिविश्वाससंयुताः । याचथ प्रार्थनास्वेव यूयं तत्प्राप्स्यथ ध्रुवं ॥८॥ गुरुरुवाच ॥

इति श्रेष्ठद्रुगिरितो ऽवरुह्योचे महागुरुः । अथ प्रातर्महापुर्य्यां मन्दिरे ऽपि च सो ऽविशत् ॥९॥
ततो याजकशार्द्दूलाः प्रधानाश्च यहूदिनां । ह्यस्तनक्रेतृनिःक्षिप्त्या प्राकृस्वागत्या च रोषिताः ॥
१०॥ मन्दिरे परिगच्छन्तं प्रभुमभ्येत्य यत्नतः । सशास्त्राध्यापका एतत् पप्रच्छुर्दुष्टमानसाः ॥
११॥ प्रधाना ऊचुः ॥ कर्म्माण्येतानि केन त्वमैश्वर्य्येण करोष्यहो । त्वयि को वेयदैश्वर्य्यं निद
धावीयसद्मनि ॥१२॥ श्रीयेषूरुवाच ॥ एकं युष्मानहमपि प्रक्ष्याम्याप्तोत्तरस्तु वः । तदा वक्ष्यामि १९
केनैतान्यैश्वर्य्येण करोम्यहं ॥१३॥ जकरीयजयोहन्निकीर्त्तितं स्नापनं हि वः । कुत आयात्
किमु स्वर्गात् किं वा मानुषमात्रतः ॥१४॥ गुरुरुवाच ॥ इमं श्रुत्वा प्रभोः प्रश्नं व्यमृशंस्ते पर
स्परं । किमेतत्पृच्छते ऽमुष्मै दद्याम वयमुत्तरं ॥१५॥ योहन्निस्नापनं स्वर्गजातमुच्येत
चेत्तदा । वक्तासौ किं कृते यूयं तं न प्रत्यैत खल्विति ॥१६॥ ब्रूयाम तु नरोत्थं चेत्तदास्मान्

हन्युरश्मभिः । व्यूहाः सर्व्वे हि योहन्निं जानन्तीशप्रवाचिनं ॥१७॥ इत्थं विचार्य्य धूर्तास्ते
प्रत्यूचुर्व्यूहभीतितः । न विद्मः स्नापनं तस्य कुतः समुदभूदिति ॥१८॥ अथ तानब्रवीद्येषूरतो
ऽहमपि वो नहि । प्रतिवक्ष्यामि केनैतान्यैश्वर्य्येण करोमि वै ॥१९॥ युष्माभिस्त्वपि किं
ज्ञातं नरः को ऽपि स्वपुत्रयोः । अभ्येत्यैकं निजद्राक्षां कार्य्यार्थे गन्तुमादिशत् ॥२०॥ स त्व
वादीन्न गन्तास्मीत्यथो स्वाधर्म्मतः परे । अनुतप्य पितुर्द्राक्षां तत्कर्म्माचरितुं ययौ ॥२१॥
तथान्यं पुत्रमभ्येत्य पिता तत्रैतुमादिशत् । स तूचे याम्यहं नाथेत्यथो नायात्कदाचन ॥२२॥
एतयोः कतरः स्वीयपितुराज्ञामपालयत् । इति पृष्टा अवोचंस्ते प्रथमाज्ञां य आप सः ॥
२३॥ इत्थं श्रुत्वाब्रवीद्येषूः करसंग्राहकास्तथा । वेश्याश्चाप्यैश्वरं राज्यं युष्मत्प्राक्
प्रविशन्त्यहो ॥२४॥ इत्थं वो वच्म्यहं सत्यं धर्म्माध्वन्यागतं हि वः । योहन्निं करसंग्राहि

वर्गा वेश्याश्च मेनिरे ॥२५॥ धर्म्माकारास्तु यूयं न मेनिध्वे नानुतेप च । तेषां शुद्धिं समीक्ष्यापि सद्विश्वासार्थमात्मनां ॥२६॥ इति प्रोच्य प्रधानान् स यहूद्यान् धर्म्मलिङ्गिनः । मोक्षैश्वर्य्यनिरोधेच्छून् परे ऽन्यदवदद्वचः ॥२७॥ श्रीयिषूरुवाच ॥ नवं शृणुत दृष्टान्तं गृहस्थः को ऽपि वित्तवान् । द्राक्षोद्यानं विनिर्म्माय परिखां परिखन्य च ॥२८॥ तदन्तश्च खनि

त्वापि रसनिष्पीडनावटं । स्थापयित्वा च तन्मध्ये मंचमूर्द्धस्थितं शुभं ॥२९॥ तत्सर्वं च २१

समर्प्यैव केषुचित् कृषकेषु सः । परदेशं ततो ऽगच्छच्छङ्कारहितमानसः ॥३०॥ आगते फलपक्वत्वकाले तु कृषकान्प्रति । प्रेरयामास भृत्यं स द्राक्षायाः फललब्धये ॥३१॥ ते त्विमं किंकरं धृत्वा बलान्निजगृहुर्दृढं । शून्यहस्तं च दुर्वाग्भिः प्राणुदन् स्वामिनं प्रति ॥३२॥ ततो ऽन्यमपि भृत्यं स प्रैरयत् कृषकास्तु तं । दृषदाहतमूर्द्धानं सलज्जमनुदंस्तथा ॥३३॥

अथान्यं प्रैरयत् स्वामी जघ्नुस्तु कृषका अमुं । बहूंश्चापीरितानन्यानाजघ्नुर्जघ्नुरेव च ॥३४॥
अथोचे ऽधीश्वरो ऽहं किं कुर्य्यामात्मसुतं प्रियं । तान् प्रति प्रेरयिष्ये ऽत आद्रियेरंस्तमेव
ते ॥३५॥ एवं तेन कृतं किंतूद्याने ते कृषकास्तदा । स्वनाथैकसुतं बुद्ध्वायान्तमूचुः पर
स्परं ॥३६॥ दायादो ऽयमहो ऽस्माभिरिदानीं हन्यतां ततः । अधिकारो ऽस्मदीयः
स्यादित्युक्त्वोद्यानतो बलात् ॥३७॥ निरस्य स्वामिपुत्रं ते ऽबधन् किंतु पतिर्यदा । आगन्ता २२
किं तदा कुर्य्यात् कृषकानिति वो मतं ॥३८॥ प्रधाना ऊचुः ॥ सम्यग्घन्ता स तान्दुष्टान्
द्राक्षोद्यानं नवेषु तु । निधाता कृषकेषु स्वं कालयोग्यफलाप्तये ॥३९॥ गुरुरुवाच ॥
इत्यूचुः प्रभुदृष्टान्तार्थाज्ञास्ते किंतु तत्परे । एवं तेभ्यो ऽचिरात् कुर्य्यात् स्वामीत्युक्तवति
प्रभौ ॥४०॥ स्वीयं कुकृषकत्वं ते जिघांसुत्वं च तद्गिरा । इङ्गितं किल विज्ञाय विभु

वाक्यावहेलिनः ॥४१॥ मा भूयादित्यवोचन्त भीताः स्वस्थितिनाशतः । श्रेष्ठयज्वादयः
किंतु तान्प्रत्यूचे विभोः सुतः ॥४२॥ श्रीयेषूरुवाच ॥ पुण्यग्रन्थेषु युष्माभिः किं नाधीतं
कदाचन । दाविदः सन्नृपस्यैतत् स्वपुत्रविषयं वचः ॥४३॥ निर्म्मायका यमवमत्य निरा
सुरेवाश्मानं स मन्दिरवरोपलतां जगाम । ईशोत्थितं तदतिविस्मयकारि नोऽग्रे तेना
र्पितेऽह्यपि वयं मुदिता भवेम ॥४४॥ इत्युक्तानुक्रमान्नूनं युष्मत्तोऽपहरिष्यते । ऐश २३
राज्यं निधेयं च तद्योग्यफलदातरि ॥४५॥ कुलेऽन्यस्मिन्नपीत्येव वच्मि युष्मानसंशयं ।
दुष्टान्निर्मायकानीशस्थापिताश्मनिरासकान् ॥४६॥ एतदश्मोपरि तु यः पतेत् स किल
भंक्ष्यते । यस्मिंस्त्वेष पतेदश्मा स चूर्णः स्यात् समन्ततः ॥४७॥ गुरुरुवाच ॥ तद्दृष्टान्तं
फरीष्यास्तु श्रुत्वा सश्रेष्ठयाजकाः । अविश्वस्ता विभूद्यानपालकाः सद्विरोधिनः ॥४८॥

स्वनाशविषयं जज्ञुरतः कोपविमोहिताः । दायादं हन्तुमैच्छंस्तमीश्वरैकसुतं प्रियं ॥
४९॥ तत्काले च बलाद्धर्तुमिच्छन्तोऽपि भयान्नृणां । येषूवाक्यादराणां तदशक्तत्वमवा
प्नुवन् ॥५०॥ अतस्तं रौम्यभूपाग्रेऽभिशापैर्व्यूहवर्जितं । कथं मृत्युं नयेयुस्ते मन्त्रणार्थे
बहिर्गताः ॥५१॥ तदा स सकलव्यूहैर्ज्ञात ईशप्रवाचकः । तानन्यमपि दृष्टान्तं शुश्रूषू
नवदत्स्फुटं ॥५२॥ श्रीयेषूरुवाच ॥ उपयामोत्सवस्यैव स्वर्गराज्यं समं स्थितं । युवराज २४
कृते पित्रा प्रस्तुतस्यार्य्यभूभुजा ॥५३॥ तत्काले त्वागते राजानुदङ्कृत्यान् दिशं दिशं ।
निमन्त्रितगणं सर्व्वमाह्वातुं ह्युत्सवं प्रति ॥५४॥ तद्गणे तु न कोऽप्यायादतोऽन्यानपि भूमिपः ।
भृत्यानादिशदभ्येतुं वक्तुं चेदं निमन्त्रितान् ॥५५॥ अहो उक्षादिमेधो मे भूरिभोजनवस्तु
च । युष्मभ्यं प्रस्तुतं सम्यगायातोद्वाह आश्विति ॥५६॥ तद्वाक्यं त्ववहेलन्तस्तेऽखिलाः

स्वस्वकर्म्मणे । स्वक्षेत्रे केचिदन्ये तु स्ववाणिज्ये तथा ययुः ॥५७॥ इतरे च नृपप्रेष्यान् समा
क्रम्य बलात्तदा । दुर्व्वचोभिः प्रहृत्यैवानाशयन्नतिदुर्हृदः ॥ ५८ ॥ तच्छ्रुत्वा तु नृपः क्रुद्धः सेनां
प्रेष्य नरानमून् । घातकान् घातयामासादाहयच्चापि तत्पुरं ॥५९॥ अथोवाच स्वभृत्यान् स
विवाहोत्सव एष मे । प्रस्तुतो ऽस्ति तदर्हास्तु नासन् पूर्व्वनिमन्त्रिताः ॥६०॥ अतः शृङ्गाट
केष्वेव यूयं निर्गत्य यत्नतः । यान् यानाप्नुथ तान् सर्व्वान् ममात्राह्वयतोत्सवे ॥६१॥ इत्या
ज्ञानुक्रमाद् भृत्या यान् यान् रथ्यास्ववाप्नुवन् । मन्दान् भद्रांश्च तान् सर्व्वान् समगृह्णन्नृपालये ॥
६२॥ ततः संपूरिते गेहे विवाहोत्सवयात्रिभिः । आसीनं तज्जनं तत्रागच्छद्राजा समीक्षितुं ॥
६३॥ तत्रापरिहितोद्वाहवस्त्रं कंचिद्ददर्श सः । भोक्तृमध्ये समासीनमभ्यवादीदिदं च तं ॥
६४॥ कुतो ऽपरिहितोद्वाहांशुको ऽत्र त्वं प्रविष्टवान् । हे मित्रेत्युदितो ऽसौ तु नीरवो ऽभूत्सम

म्नतः ॥६५॥ अतः परिचरान् राजाब्रवीद् बद्धकरांघ्रिकं । इममुत्तोल्य वाह्ये ऽतस्तिमिरे
विनिरस्यत ॥६६॥ तर्हि स्यात्क्रन्दनं घोरं दन्ताघातस्वनो ऽपि च । समाहूता हि बहवो
ऽल्पे विशिष्टा भवन्ति तु ॥६७॥ गुरुरुवाच ॥ इत्थमुक्तवतीशस्यात्मजे खल्वैस्त्रयेलिनां ।
अप्रतीतिं ततश्चैवाह्वानमन्यकुलोद्भवां ॥६८॥ ईशार्य्यमण्डले चान्तराहूतानां किलोचितं ।
गुरुत्वं दण्डमुग्रं च तद्धीनानां नृणामिह ॥६९॥ तदाभ्यायन् फरीष्याणां केचिद्वैरोद्यकैः २६
सह । अभिशापनिदानाप्त्यै ऽनुन्ना नार्थैर्जिघांसुभिः ॥७०॥ ते प्रभुं प्रति गच्छन्तो
धर्म्मजिज्ञासुताछलात् । नम्रा इव वचः प्रोचुरादराकारकं तथा ॥७१॥ फरीष्यादय
ऊचुः ॥ सत्यरूपस्त्वमाचार्य्य विभुमार्गोपदेशकः । नृसन्तोषेच्छया हीनस्तदतुष्टिभयेन च ॥
॥७२॥ अतस्त्वां वयमायाता जिज्ञासार्थे किमूचितं । करं दातुं न वाब्राह्मैर्भिन्नधर्म्माय

भूभुजे ॥७३॥ अस्मत्संशयहृत्यर्थमेतज्ज्ञापय नो गुरो । किं देयः किं न वास्माभिः करो
रौप्येशकेशरे ॥७४॥ गुरूरुवाच ॥ इत्युक्तेर्धूर्ततां तेषां सर्व्वज्ञो ऽनुममे प्रभुः । अतो ऽवादीत्
परीक्षध्वे कस्मै मां धर्म्मलिङ्गिनः ॥७५॥ करैरौप्यमिदानीं मां यूयं दर्शयतेत्यथो । ते तं
प्रत्यानयन् रौप्यकर्षपादं सुमुद्रितं ॥७६॥ सो ऽब्रवीत्तांस्त्वियं मूर्तिः कस्यैतैश्चाक्षरैरपि ।
लिखितं कस्य नामेति प्रत्यूचुस्ते तु कैशरः ॥७७॥ अथोवाच प्रभुर्यानि कैशरः सन्ति २७
कैशरे । तानि यच्छत यान्येवमीशस्येशाय तानि तु ॥७८॥ तथा प्राप्तोत्तरास्ते वै सर्व्व
व्यूहस्य सन्निधौ । धूर्त्ता भग्नपरामर्शा विस्मयं प्राप्य निर्ययुः ॥७९॥ हैरोद्यकफरीष्याणां
निवृत्ते वञ्चने तथा । हेतुं तदभिशापस्य पीलाताग्रे विदुण्ढतां ॥८०॥ तदा येषूं समभ्येत्य
परलोकावमानिनां । शादूक्यानां नराः केचित् परीक्षार्थे ऽब्रुवन्निदं ॥८१॥ शादूक्या ऊचुः॥

हे गुरो मोसिनोक्तं नः को ऽप्यपुत्रो म्रियेत चेत् । तदा तत्कुलरक्षार्थं तत्स्त्रीं भ्रातोद्वहेदिति ॥
८२॥ अस्मन्मध्ये तु सप्तासन् भ्रातरो ज्येष्ठ एषु तु । परिणीयासुते प्रेते ऽनुजो जग्राह
तत्स्त्रियं ॥८३॥ तथा तस्मिन्नपुत्रे तु मृते भ्रातेतरः स्त्रियं । गृहीत्वातनयः प्रेतस्तद्वदन्ये
ऽपि चाखिलाः ॥८४॥ तथा प्रेतेषु सर्व्वेषु सप्तभ्रातृष्वसूनुषु । शेषे सापि ममार स्त्री तत्समस्त
गणावला ॥८५॥ अतस्तेषां महाचार्य्य भ्रातृणां कतमस्य सा । गतासुपुनरुत्थानकाले पत्नी २८
भविष्यति ॥८६॥ गुरुरुवाच ॥ इत्युक्तं तैरविश्वासैः पुनरुत्थानहेलया । संश्रुत्य प्रभुरे
तत्तान् वचः प्रत्यवदत्स्फुटं ॥८७॥ श्रीयेषुरुवाच ॥ पुण्यशास्त्राविदो यूयमीशशक्त्यविदो ऽपि
च । मृतानां पुनरुत्थाने महाभ्रान्तिं समागताः ॥८८॥ उत्थास्यन्ति पुनर्ये हि परलोकार्ह
मानुषाः । नोद्वहन्ति न वोह्यन्ते स्वर्गदूतात्मकाः स्थिताः ॥८९॥ न मर्त्तुमपि वा तत्र

शक्नुवन्ति कदाचन । ईशपुत्रनिभीभूताः पुनरुत्थानजा ध्रुवं ॥१०॥ यत्तु तद्विषये शास्त्रे पुरा
लिखितमैश्वरे । तन् किं न पठितं क्वापि युष्माभिर्भ्रान्तमानसैः ॥११॥ अहमीशो ऽब्र
हस्यास्मीशहकस्येश एव च । याकोबाख्येस्रयेलस्याहमेवेशो निरन्तरं ॥१२॥ इत्युवाच
ज्वलत्स्तम्बमध्यतो मोसिमीश्वरः । नुदन् मोचयितुं हस्तादब्रहाद्युद्भवान् द्विषां ॥१३॥ न
मृतानां तु सो ऽस्तीशो जीवतां त्वखिलाश्च ते । नित्यं जीवन्ति तस्याग्रे ऽतो वो ऽतिभ्रमणं २९
स्फुटं ॥१४॥ गुरुरुवाच ॥ तथा शादूक्यवर्गं स तूष्णीं चक्रे सदुक्तिभिः । तन्नु केचिन्
स्थितास्तत्र समीक्ष्याध्यापका मुदा ॥१५॥ ऊचुः साधु त्वया प्रोक्तमेतदाचार्य्य खल्विति ।
फरीष्याश्चापि तच्छ्रुत्वा बहुशस्तं समागताः ॥१६॥ परामर्शात्परे चैकस्तेषां सच्छास्त्रशिक्षकः ।
परीक्षार्थमपृच्छत्तं भ्रान्तिनाशमिदं वचः ॥१७॥ शास्त्रशिक्षक उवाच ॥ हे महाचार्य्य मोस्युक्तै

अथात्वाज्ञासु भूरिषु । कतमा सत्तमास्त्येव रक्षणीया विशेषतः ॥९८॥ श्रेयेषूरुवाच॥ तत्सर्वासामियं श्रेष्ठा वाक्यं शृण्विवस्त्रयेल सत् । अस्मदीशो विभुर्ज्ञेय एक एवेश्वरः [illegible]तः ॥९९॥ तं च तावद्धृदा नूनं प्रीणयेस्तावदात्मना । तावच्चित्तेन चापि त्वं तावच्छक्त्या तथैव च ॥१००॥ इयमाज्ञाखिलास्वेवादिमा श्रेष्ठा च संस्थिता । द्वितीया तु स्थिता तस्मिन्शास्त्रे प्रथमसन्निभा ॥१०१॥ प्रतिवासिनमात्मीयं प्रीणयेस्त्वं किलात्मवत् । इत्यादेशद्वयाज्ज्ञेया न काप्याज्ञा महत्तरा ॥१०२॥ एताभ्यां हि वराज्ञाभ्यां समस्तं शास्त्रमैश्वरं । समस्तेशप्रवक्तृणां वाक्यौघश्चावलम्बते ॥१०३॥ शास्त्रशिक्षक उवाच॥ साधूक्तमिदमाचार्य्य त्वयैको यत ईश्वरः । संस्थितो न च को ऽप्यन्यो विद्यते वै कदाचन ॥१०४॥ तं च तावद्धृदा तावच्छक्त्येशं तावदात्मना । तावच्चित्तेन चैवं स्व

प्रतिवासिनमात्मवत् ॥१०५॥ प्रीणयेत्किल यो यः सो ऽधिकं धर्म्मं समाचरेत् । सर्व्वहोम
क्रतूत्सर्गादपि तत्र न संशयः ॥१०६॥ गुरुरुवाच ॥ इदं तस्योत्तरं धीरस्येव ज्ञात्वाब्रवीत्
प्रभुः । त्वं न दूरस्थितो नूनं राज्यादप्यैश्वरादिति ॥१०७॥ नीरवे च ततो भूते
करीष्याणां गणे ऽखिले । तत्स्थानोपस्थिते ऽपृच्छदन्यत्सन्नृप एव तान् ॥१०८॥ श्रीयेषू
रुवाच ॥ सच्छास्त्राध्यापकैर्नूनं युष्माभिः कस्य मन्यते । पुत्र ईशाभिषिक्तः स खृष्टो राजा ३१
प्रतीक्षितः ॥१०९॥ गुरुरुवाच ॥ इदं पृष्टाः समस्तास्ते पुत्रो दाविद एव सः । इति
प्रत्यूचिरे ऽथो सो ऽन्यं प्रश्नं तर्ह्युवाच तान् ॥११०॥ श्रीयेषूरुवाच ॥ तदा तं कथमैशात्म
व्याप्तः सत्पार्थिवो ऽप्यसौ । वर्णयामास खृष्टं वै स्वीयनाथाभिधानकं ॥१११॥ नाथं मदीय
मिदमभ्यवदद्विभुर्हि त्वं मे ऽधुनोपविश दक्षिणहस्तपार्श्वे । यावन्न ते ऽहमखिलारिगणं

त्वदङ्घ्रिपीठीकरिष्य इह तिष्ठ मया सहैव ॥११२॥ इत्युक्तं दाविदातो यः कवेर्नाथस्तथो च्यते । कथं खृष्टः स तत्पुत्रो भवितुं शक्नुयादपि ॥११३॥ गुरुरुवाच ॥ इदं वाक्यं मुदा शृण्वन् व्यूहाः किंतु विरोधिनां । फरीष्याणां गणः किंचिन्नाशक्नोत्तं प्रतीरितुं ॥११४॥ तस्माच्च परे नैकः प्रचण्डहृदयो ऽप्यरिः । प्रभुं किंचित्परिप्रश्नं विवादार्थं समैहत ॥११५॥ जितेषु च तथा सर्व्वविरोधिषु ततः प्रभुः । शिष्यांस्तद्विषये ऽवादीदखिलव्यूहसन्निधौ ॥ ३२
११६॥ श्रीयेषूरुवाच ॥ फरीष्यकाध्यापकशास्त्रिवर्गा मोस्यासनेषूपविशन्त्यतो वै । शास्त्रा नुसारेण यदादिशन्ति ते वो ऽपि शिष्या मम तत्कुरुध्वं ॥११७॥ क्रियानुसारेण तु तद्गणा नां प्रिया विनीता अपि मा कुरुध्वं । यतो ऽतिभद्राण्यपि ते मनुष्यानाज्ञाय कार्य्यैर्न समा चरन्ति ॥११८॥ दुःसह्यभारानपि बन्धयित्वा स्कन्धेषु नृणां किल ते ऽर्पयन्ति । किंत्वे

कयाप्यात्मकराङ्गुलीनां नेच्छन्ति तांश्चोदयितुं समन्तात्॥११९॥ सर्वं हि तत्कर्म्म नरेक्षणाया
लो धर्म्मलक्ष्मार्थमुरूकृतास्तैः । स्मृत्यंशलेखाकवचा अतश्चांशवोऽधिकास्तद्वसनायनद्धाः ॥१२०॥
श्रेष्ठासनान्येव मठेष्वतस्ते कांक्षन्ति तद्वच्च नृभोजनेषु । व्रजन्ति हट्टेषु नमस्कृतास्ते गुरो
गुरो इत्यतिलिप्समानाः ॥१२१॥ मा त्वेव लिप्सध्वमिदं यतो वोऽस्त्येको गुरुर्भ्रातर एव
यूयं । मा भूस्थितं वा पितरं प्रवक्त स्वर्गस्थितो ह्यस्ति पिता व एकः ॥१२२॥ मा प्रोच्यतां ३३
कोऽपि च नायको वोऽस्त्येको हि वो नायक एव खृष्टः । स्यात्सर्व्वभृत्यश्च महत्तमो वो यस्त्वा
त्मकीर्त्तीच्छुरधः स गामी ॥१२३॥ अध्यापकास्तु सफरीष्यगणा अरे वो धिग्लिङ्गिनो
ऽस्ति यत एव चिरार्थनानां । यूयं छलेन विधवालयगाः समन्तात्संभुग्ध्व उग्रतरदण्डमवा
प्स्यथातः ॥१२४॥ अध्यापकास्तु सफरीष्यगणा अरे वो धिग्लिङ्गिनोऽस्ति यत आर्य्यमपो

बराज्यं । बध्नीथ यूयमिह न प्रविशन्त एवमन्यांश्च तत्र चलतो ऽपि निरोद्धुकामाः ॥
१२५॥ अध्यापकास्तु सफरीष्यगणा अरे वो धिग्लिङ्गिनो ऽस्ति यत एककशिष्यलब्ध्यै ।
वार्न्धिं भुवं च परिगच्छथ तं त्ववाप्यात्मभ्यो ऽधिकं नरकजं द्विगुणं कुरुध्वे ॥१२६॥ युष्मान्
धिगन्धमनसो विभुमार्गदेष्टृनाख्यात ईश्वरगृहाय शपेत कश्चेत् । भंक्तुं क्षमेद्यदि तु तत्स्थित
काञ्चनाय कुर्य्याच्छपं स न निराक्रियतां किलेत्थं ॥१२७॥ मूर्खास्तथान्धहृदयाश्च तयोर्हि मध्ये ३४
श्रेयं नरैः कतरदेव बुधैर्महीयः । किम्वत्र सन्निहितमेव हिरण्यमज्ञाः किंवा हिरण्यपरि
शुद्धिकृदीशसद्म ॥१२८॥ ब्रूथैव को ऽप्युत शपेत यदीशवेद्यै भंक्तुं क्षमेद्यदि तु तद्बलये तदा
न । श्रेयो ऽनयोः कतरदस्ति हि किं बलिर्वै किंवा बलेः परिविशुद्धिकृदीशवेदिः ॥१२९॥
सो यो नरः किल शपेत महेशवेद्यै तत्संस्थसर्व्वबलये शपते तदा सः । यो यः शपेत च महे

मन्दिराय तत्रस्थसर्व्ववसुने शपते स एवं ॥१३०॥ स्वर्गीय यस्त्वपि शपेत नरः पृथिव्यां
सिंहासनाय शपते स तदीश्वरस्य । सिंहासनाय शपमेव नरस्तु कुर्व्वंस्तस्मिंस्तथोपविशते
विभवे करोति ॥१३१॥ धिग्वोऽस्ति शिग्रुकवितुन्नकजीरकादीन् यस्माद्विभज्य दशभागत
एकमेषां । यत्नात्समुत्सृजथ किंतु गरीयसीः सच्छास्त्रे विवर्जथ विचारदयाप्रतीतीः ॥
१३२॥ एताः किलार्हत समाचरितुं विशेषान्नावारमप्यमुमतीव विवर्जितुं ह । पात्राण्य ३५
मी मशकपानभयेन यूयं वस्त्रैः समावृणुथ हन्त मयं निगिल्य ॥१३३॥ अध्यापकास्तु सफरीष्य
गधा अरे वो धिग्धर्म्मलिङ्गिन ऋतायनदृष्टिहीनाः । यत्नाद्धि पानघसवासनवाह्यमेव
पृष्ठान्तरे तु गृध्नत्तामलपूरिताः स्थ ॥१३४॥ रे रे फरीष्य विदृगात्मक शिक्षकापि त्वं यानि
पानघसपात्रचयोदरे स्युः । आदौ विशुद्धि किल तानि ततो हि वाह्यं शुद्धीभवेत्स्वयमिवात्र

न संशयो ऽस्ति ॥१३५॥ अध्यापकाः कपटिनः सफरोष्यका रे धिग्वः शितीकृतशवावटका
यथा हि । चिह्ने गते वहिरतो रुचिरा भवेयुरभ्यन्तरं तु मृतकुल्यमलप्रपूर्णाः ॥१३६॥
मर्त्यैरवेद्यमलकास्तदुपर्य्युपेतैर्यूयं तथा मनुजवञ्चनकर्म्मदक्षाः । विद्यध्व एव नरगोचर
[illegible]शोला अभ्यन्तरे तु कपटित्वविधर्म्मपूर्णाः ॥१३७॥ अध्यापकास्तु सफरोष्यगणा अरे
वो धिग्धर्म्मलिङ्गिन ऋतायनदृष्टिहीनाः । ईशप्रवाचिशववासविधायकाः स्थ धर्म्यप्रमीत ३६
मंगलक्ष्मविभूषकाश्च ॥१३८॥ तर्हि प्रवक्थ यदि नः समये पितृणां जाता वयं नु सह तैर्न तदा
भवेम । ईशप्रवाचिवधका इति किंतु यूयं स्वोक्त्यापि तद्वधकसूनव एव सिद्धाः ॥१३९॥
तस्मात् सतां वधकसूनव आश्विदानां पित्रंघसां परिमितिं परिपूरयध्वं । सर्पा भुजङ्ग
तनयाः कथमेव यूयं विन्देत मोचनमरे नरकाग्रदण्डात् ॥१४०॥ वाक्यं संशृणुतैतदोश्वर

नूलाद्ये
धिया वः प्रोक्तमेवाधुनाहो युष्मान्प्रति संनुदाम्यहमतो ध्यापिप्रवक्तृन् बुधान् । शूलाद्ये
स्वपि नाशयिष्यथ बहूनन्यांश्च तेषां बलादाहत्य स्वमठेष्वहो प्रतिपुरं संताडयेतादयाः ॥
१४११ तस्माद्धार्म्मिकहाबिलादिकसतां भूमौ हतानां बलात् मृष्ट्यावध्यसृगेव यद्यदभवत्सर्वत्र
संपातितं । तद्दण्डः किल वः प्रतीह निपतेत्तेषां सतां ह्यन्तिमो वेद्यग्रे जकरीय एव निहतो
त्रार्य्यो बराकीयजः ॥१४२॥ हे सद्यन्तृयिरूषलेमनगरि त्वां प्रत्युत प्रेरितानश्माद्यैः सक ३७
लान् वधन्त्यपि कियद्वारं त्वपत्यानि ते । हेच्छं मां प्रति संग्रहीतुमनिशं स्वांस्ताम्रचूडा
यथा पक्षेषु प्रचिनोति सावकगणांस्तन्नु त्वदस्वीकृतं ॥१४३॥ त्याज्यं वो ह्यचिरान्निकेतन
मिदं शून्यं वधाग्न्यावृतं मां यूयं तु यिरूषलेमनगरे न द्रक्ष्यथात्रस्थिताः । यावद्भूम्यधिपं
म यूयमपि मां ज्ञात्वा विशन्तं तदा वाञ्छितोन्नदितुं य एति विभुनाप्यस्मान् स धन्यो

ष्यति ॥१४४॥ इति श्रीख्रिष्टसंगीतायां मोक्षमाहात्म्यपर्वणि (मोशिपंचशास्त्रे निःसृतिस्कन्धस्य तृतीयसर्गादनुवाक्यस्कन्धस्य पंचविंशसर्गाद् द्वाविज्ञातानां दशाधिकशततमाद्ष्टादशाधिकशततमाच्च मत्थीयस्यैकविंशद्वाविंशत्रयोविंशसर्गेभ्यो मार्कस्यैकादशद्वादशसर्गाभ्यां लूकस्य विंशसर्गोद्धृतः) पुण्यसप्ताहमङ्गलवारपूर्वचरित्रसूचकः सदन्तृमन्दगुरुपराजयो नाम चतुर्थोऽध्यायः ॥ ३८

गुरुरुवाच ॥ मन्दिरे तत्समाप्यार्य्यः स मन्दाचार्य्यभर्त्सनं । न विवाद्य इतस्तत्र तैर्जिघांसुतरीकृतैः ॥१॥ प्रोच्य चापि स्वमैश्वर्य्यं तथा यैरूपलेभिरे । पूर्णपित्रघमानानां भव्यं भविष्यमाश्वपि ॥२॥ ततो निर्गन्तुकामः स श्रेष्ठवृक्षगिरिं प्रति । अनायाते त्रियामेऽपि वरशिष्यगणावृतः ॥३॥ निर्गतेः प्राङ् महासद्माजिरे कोषाभिधे स्थितः । बहूंस्तत्रैक्षत

स्मूहान् ददतः स्वस्वदक्षिणाः ॥४॥ धनवत्सु त्वनेकेषु निदधत्स्वतिमूल्यकाः । कोषे स्वा
दक्षिणाः कापि दरिद्रा विधवाययौ ॥५॥ सा सार्द्धपंचमाषांस्तु निदधौ तत्र ताम्रिकान् ।
तदा शिष्यान् समाहूय निजानभ्यवदत्प्रभुः ॥६॥ श्रीयेषूरुवाच ॥ विधवैव दरिद्रैषाधिकं
कोषे समार्पयत् । समस्तेभ्यो धनिभ्यो ऽपि दत्तवद्भ्यो ऽत्र दक्षिणाः ॥७॥ इत्यृतं वच्मि वो ऽमी
हि स्वाधिकद्रव्यतो ददुः । स्वन्यूनत्वात्त्वियं सर्वं निदधावपि वेतनं ॥८॥ गुरुरुवाच ॥ ३१
तथोक्ता सर्वविन्मोक्ता ततो द्वादशभिः सह । निर्गच्छन् मन्दिरे नानाजिरमध्ये ऽतरत् खलु ॥९॥
शिष्याणामब्रवीत्त्वेकः पश्याचार्य्येह कीदृशाः । उपलाः सद्मनिर्म्माणप्रवयाश्चातिसुन्दराः ॥१०॥
प्रत्युवाच प्रभुस्त्वेनं पश्यथोपलसंचयं । नैको ऽप्यन्योपरि स्थाताच्छिन्नभिन्नो ऽचिरादिति ॥
११॥ अथ वृक्षगिरौ ने तु यदा सर्व उपस्थिताः । प्रभौ तत्र समासीने समन्दिरपुरागतः ॥

॥१२॥ तदा जिज्ञासयाचार्य्यमभ्येत्य प्रस्तरान्द्रियौ । तथा याकोबयोहन्नौ समपृच्छन्निदं पृथक् ॥१३॥ श्रीयेषुःशिष्या ऊचुः ॥ त्वदुक्तं सर्व्वमेतन्नः कदा भव्यं वदाथ ते । आगतेः किं भवेच्चिह्नं कालसंपूरणस्य च ॥१४॥ श्रीयेषूरुवाच ॥ मा वंचयध्वं कुचिन्नाम्नानेके ह्यागामिनो मम । भ्रामयेयुश्च तत्पूर्त्तौ खृष्टो ऽस्मीत्युक्तिभिर्बहून् ॥१५॥ किंतु युद्धरवं यूयं तद्वार्त्ताः श्रोष्यथापि च ॥ ततो मा व्यग्रतां यात कालान्तो न तदा भवेत् ॥१६॥ अन्योन्यं आक्रमिष्यन्ति राज्यराष्ट्राण्यतो ऽपि च । दुर्भिक्ष्यमारिभूकम्पा भव्याः प्रतिदिशं भुवि ॥१७॥ एतत्सर्व्वमवश्यं हि भूमौ स्यात् किंतु भाविनां । अतिदुःसह्यदुःखानां समारम्भणमेव तत् ॥ ॥१८॥ आकाशे चातिभीमानि चिह्नान्याविःस्युरप्यथ । तेभ्यः प्राग्वो गृहीत्वा ते ताडयिष्यन्ति दुर्हृदः ॥१९॥ मठेषु च तदानेया यूयं कारासु चैव तैः । देशाध्यक्षनृपाग्रे च मन्नामार्थे

मुहुर्मुहुः ॥२०॥ सोढव्यं तनु साक्ष्यार्थे बन्धुभिर्भ्रातृभिश्च हि । ज्ञातिभिश्चापि मित्रैश्च निधा
स्यध्वे द्विषां करे ॥२१॥ हन्तव्याश्चापि केचिद्वो द्रोहिष्यध्वे च मत्कृते । सर्वैर्नत्वणुकेशो
ऽपि नाश्यो वः शिरसां ध्रुवं ॥२२॥ सावधानास्तु तर्हि स्त यतो ऽनेके ऽपि तद्बलात् । पातिताः
स्युः परांश्चापि निधास्यन्ति दुरात्मकाः ॥२३॥ तदा मिथ्योपदेष्टार उत्थास्यन्त्यप्यनेकके ।
ईशानामच्छलोक्त्यैव मोहयन्तो बहूनपि ॥२४॥ अधर्म्मस्य च मर्त्येषु महावर्द्धनहेतुतः । बहूनां ४१
प्रेमसन्तापस्तदा शीतीभविष्यति ॥२५॥ सहिष्णुत्वे तदा यूयं स्वीयप्राणान् सुरक्षत । यो
ह्येतच्छेषपर्य्यन्तं सोढा प्राप्ता स मोचनं ॥२६॥ आदौ राज्यसुवार्त्ता तु प्रवाच्या भूमिमण्डले ।
साक्ष्यार्थं सर्व्वराष्ट्रेभ्यो ऽथ शेषस्तत्परे भवेत् ॥२७॥ किंत्वाहूतैर्नराग्रे ऽपि यत्नात्स्थाप्य
मिदं हृदि । युष्माभिर्नीतरार्थं वै किंचिच्चिन्तयितुं पुरा ॥२८॥ अहं वो हि मुखं दायी

बुद्धिं चापि दृढां ययोः । शक्तिं वारयितुं शक्तो न को ऽपि स्याद्विरोधिनां ॥२९॥ अक्षौहिणी
भिः परिवेष्टितं तु यदा प्रपश्येत यिरूषलेमं । स्थाने ऽप्यथो पुण्यतमे ऽपकृष्टं दान्येलसूक्त
भृतीकृदुत्थं ॥३०॥ तदा सदुक्तिं पठितां सुबुध्य यहूद्यदेशे निवसन्ति ये ये । ते निर्जनी
भव्यपुरं विवर्ज्य यत्नात्पलायन्तु महीधरेषु ॥३१॥ यस्त्वात्मगेहोपरि संस्थितः स द्रव्याणि
मा यातु ततो ग्रहीतुं । क्षेत्रे स्थितो यश्च स मा पुरान्तर्यात्वात्मवस्त्राण्यपि हर्तुमाशु ॥३२॥ ४२
या गर्भवत्यः स्तनपाजनन्यश्चातिव्यथा स्यात् किल तर्हि तासां । पलायनं वः शिशिरे तु विश्रा
माहे ऽथवा मास्त्विति याचनीयं ॥३३॥ तदा हि सृष्ट्यावधि यावती नाभूत्क्वापि पीडा भुवि
तावती स्यात् । न तत्परे वापि जगल्लयान्तं तत्तुल्यपीडेशरुषा प्रदेया ॥३४॥ ऊनीकृता
चेन्न तु तद्दिनानां संख्या भवेत् को ऽपि न मुक्तिमाप्ता । दयान्वितस्त्वात्मविशिष्टवर्गार्थे

तां किलोनीप्रकरिष्यतीशः ॥३५॥ तदा त्वहो खल्विह खृष्ट इत्थं तर्ह्यस्ति वा खृष्ट इति श्रुतं
चेत् । युष्माभिरेतत्सकलं ह्यमान्यमाश्चर्य्यकर्म्मान्वितमप्यतीव ॥३६॥ ये तर्हि मिथ्यागुरवो
हि मिथ्याखृष्टास्तथाविर्भवितार उर्व्यां । ते चित्रलक्ष्मौघबलैर्वृतानप्युन्मोहयेयुर्यदि तत्तु
शक्यं ॥३७॥ मत्प्रोदिताः सर्व्वमहो स्थ यूयं स प्रान्तरे ऽस्तीत्युदितास्ततो मा । निर्यात चेत्सो
ऽस्ति गृहान्तरे त्वित्युच्यध्वमप्रत्ययमानसाः स्त ॥३८॥ यथा तडित्प्राग्दिश आगतैव प्रत्यग्दिशं ४३
व्योम्न्यवभासमाना । तथा नृपुत्रागमनं शवो हि स्याद्यत्र दाक्षाय्यगणो ऽपि तत्र ॥३९॥
एवं समस्तैशलिपिप्रपूर्त्यै पतेन्महार्त्त्यन्वितदण्ड उर्व्यां । एतत्कुलं चार्य्यसिभिर्हतं स्यात्
तद्बन्धनायापहृतं बलाद्वा ॥४०॥ गते स्ववृन्दे ऽखिलराष्ट्रमध्ये मर्द्यं परौघैस्तु यिरूषलेमं ।
स्थेयं च सर्व्वान्वययोग्यकालसंपूर्त्तिपर्य्यन्तमिहैवमेतत् ॥४१॥ भूता यदा तत्समयन्यथा तु सूर्य्ये

स्तमित्रीभविता तदैव । चन्द्रो न दाता स्वरुचिं तदा वाकाशात्पतिष्यन्त्युडवो ऽपि भूमौ ॥
४२॥ क्षित्यां च राष्ट्रेषु परस्परं स्यात् संक्षोभणं व्याकुलता च बह्वी । सिन्धोस्तरङ्गस्वन एव
भीत्यागाम्यापदां नृष्ववदीर्णहृत्सु ॥४३॥ तदा हि धूतास्वपि नाकशक्तिष्वाकाशमध्ये नरपुत्र
लक्ष्म । आविर्भवेदुर्व्यखिलान्वयास्तु व्यग्रत्वमाप्त्वा विलपेयुरुच्चैः ॥४४॥ अथो महाविक्रम
युक्तमूर्द्धान्तरोक्षमेघोपरि ते नृपुत्रं । अतीवतेजो ऽन्वितमीक्षितार आयान्तमुर्व्वीतलमैशशक्त्या ४४
॥४५॥ स चात्मदूतान् परिनोत्स्यते ऽतस्तूरीनिनादेन समस्तदिग्भ्यः । धरान्ततो ऽपि स्व
विशिष्टवर्गमुच्चैः समाह्वातुमतीवशक्त्या ॥४६॥ अतो यदारम्भणमात्रमेषां यथोदितं द्रक्ष्यथ
यूयमेव । तदोर्द्ध्वमुत्तोलयताभयाः स्वान् मूर्द्धः समायाति हि वो विमुक्तिः ॥४७॥ ज्ञेयं तु
युष्माभिरुडुम्बरादिद्रूणां सुदृष्टान्तमवेततर्कैः । शाखामृदुत्वे दलनिर्गमे च सत्यन्तिको ग्रीष्म

तथा यद्देक्षेध्वमिदं मदुक्तं सर्वं तदाभ्यर्णमिहेशराज्यं । इत्थं सुवितैष
इतो ऽनुभूतः ॥४८॥ तथा यद्देक्षेध्वमिदं मदुक्तं सर्वं तदाभ्यर्णमिहेशराज्यं । इत्थं सुवितैष
गणो ऽपि नैतत्सर्वागतेः प्रैष्यति पूर्वमेव ॥४९॥ इत्युच्यते सत्यतमं मया वः प्रेयाद्धि नाकः
पृथिवी च नूनं । मदुक्तवाक्यानि तु वः कृचिन्न प्रेष्यन्ति कालेन निराकृतानि ॥५०॥ एनं
मुहूर्तं दिवसं च भीमं न को ऽपि जानाति विना पितुर्मे । न स्वर्गदूतेषु न वा मनुष्यात्मजे
ऽपि बोधो निहितः किलास्य ॥५१॥ नोहस्य यद्वत्समये ऽखिलास्तु भूस्थाः किलागामिजल ४५
प्लवाज्ञाः । तन्नौसमारोहदिनान्तमन्नोद्वाहादिमध्ये विलयं प्रपन्नाः ॥५२॥ तद्वन्नृपुत्रागमनं
तदैकक्षेत्रे सतोर्मानुषयोर्द्वयोस्तु । नार्य्योर्द्वयोर्वैककपेषयन्त्रे स्यादेकलाभो ऽपरवर्जनं च ॥५३॥
अतो ऽपि यूयं स्त नु सावधाना मा भुक्तिभिर्मत्ततयाथ वा मा । संसारचिन्ताभिरवप्लुतं वो हृत्
खल्वकस्माद्दिनमाप्नुयातत् ॥५४॥ दिनं ह्यदः पाशवदुर्व्विवासिसमस्तवृन्दे निपतेदकस्मात् ।

नरात्मजाग्रेस्थितिमेव यूयं ॥५५॥ तदार्थयध्वं परिदृश्य यत्ना
चेत्तद्विपन्मोचनमाप्नुमर्हा नरात्मजाग्रेस्थितिमेव यूयं ॥५५॥ तदार्थयध्वं परिदृश्य यत्ना
तदर्हतां जागृत चैव नित्य । यस्मिन् मुहूर्त्ते ऽत्र समागतिः स्याद्युष्मत्प्रभोस्तं नहि वित्त
सम्यक् ॥५६॥ यथा मनुष्यः परदेशगामी त्यक्ते स्वगेहे निजकिङ्करेषु । पृथक् पृथक् कर्म्म
विधाय यत्नाद्दौवारिकं जागरितुं दिशेत्स्वं ॥५७॥ तथैव वो जागरणं नियोज्यं सायं गृही
किं ह्यथवा निशार्द्धे । किं ताम्रचूडस्वनितक्षणे वा किं वोषसीयात्किल तन्न वित्थ ॥५८॥ ४६
माप्नोतु सुप्तांस्तु स वः कदाचिद्युष्मांस्तु यद्वच्मि विशिष्टभृत्यान् । तदेव सर्व्वान्ममवाक्य
लब्धॄन् वच्म्यप्यहं जागृत गाढयत्नात् ॥५९॥ विशिष्टभृत्यस्तु गृहीव चोराक्रान्तिज्ञ एतत्स
मयाविदेवं । सुप्रस्तुतः स्यात् परिवारवर्गप्रत्येकयोग्यान्नविभागदाता ॥६०॥ विश्वा
स्यमेवं हि बुधं च भृत्यं कुर्व्वन्तमेतत् प्रभुराप्नुयाद्यं । आयातिकाले तमतीवधन्यं सर्व्वाधिकारे

ऽपि नियोजयेत्सः ॥ ६१ ॥ इत्थं ब्रवीम्येव विशिष्टभृत्यश्चेत्तु प्रभोरतिविलम्बहेतोः ।
मन्दः स हन्यादवशिष्टभृत्यान् पिवेच्च मत्तैः सह तद्वदद्यात् ॥६२॥ तदापि तस्य प्रभुरात्म
गेहमज्ञात एवाह्यनपेक्षिते च । मुहूर्त्त आगाम्युत खल्वकस्मात् द्विधा तमप्रस्तुतमेव
भिन्देत् ॥६३॥ स धर्म्मलिंग्योघयुतो हि तस्याविश्वास्यभृत्यस्य निधेयभागः । आक्रन्दनं
तत्र भवेत्तु घोरं दतां तदाघातरवोऽपि भूरिः ॥ ६४ ॥ स्वर्गराज्यं तदा ज्ञेयं दशकन्या ४७
इवोत्सवे । वैवाहे दीपधारिण्यः साक्षात्कर्त्तुं वरं गताः ॥६५॥ तासां पंच बुधा दीपांस्तैल
पात्रैः सहाददुः । शेषाः पंच तु मूर्खाः स्वानाददुस्तद्विवर्जिताः ॥६६॥ वरे विलम्बमाने तु सुप्ता
स्वासु तदा ध्वनिः । निशीथेऽभूद्वरोऽत्राहो साक्षात्कर्त्तुमवेत तं ॥६७॥ इति संश्रुत्य कन्यास्ताः
स्वप्नतः शीघ्रमुत्थिताः । प्रस्तोतुं यत्नतो दीपान् स्वान् स्वानारेभिरे तदा ॥६८॥ विदुषी

त्वेनरो ऽवादीत् स्वामिंस्त्वं कठिनो नरः । त्वदन्यस्तधनग्राही त्वदनुप्तच्छिदो ऽपि च ॥८६॥
इत्यज्ञानामतो भीत्या तव सार्द्धसहस्रकं । रौप्यकर्षं मृदि न्यास्यमहो त्वं स्वं पुनर्नय ॥८७॥
एवं तद्वाक्यमाकर्ण्य प्रत्यवादीदिदं प्रभुः । अरे किंकर दुष्टात्मन्नलस त्वं ब्रवीषि किं ॥
८८॥ मदन्यस्तवसुग्राही मदनुप्तच्छिदो ऽपि च । अहमस्मीति नूनं त्वं हृदये सममन्यथाः ॥
८९॥ अतो रूप्यं मदीयं त्वं प्रणिधातुं कुशीदिषु । आर्हो ऽतो ऽप्यहमात्मीयं सवृद्धि प्राप्नुयां
पुनः ॥९०॥ ततो ऽस्माद्धे परिचरा हृत्वा सार्द्धसहस्रकं । कर्षं तं न्यस्यतामुष्मिन् सार्द्धायुत
विधारके ॥९१॥ यो दद्याद्धि नरस्तस्मै देयं भूर्यपि किंतु यः । न दध्यान्मानुषस्तस्मा
दपहार्य्यं स्ववस्त्वपि ॥९२॥ भृत्यं तु निष्फलं वाह्ये तिमिरे विनिरस्यत । तर्हि स्यात् क्रन्दनं
घोरं दन्ताघातस्वनो ऽपि च ॥९३॥ नरपुत्रो यदागन्ता निजतेजःसमन्वितः । वृतो दूतैः

समासीत महःसिंहासने तदा ॥९४॥ सर्व्वराष्ट्रजनौघो ऽपि तदग्रे संग्रहीष्यते । द्विधा कुर्य्या
च्च तं यद्वत्पालको ऽव्यजसंहतिं ॥९५॥ स्वीयदक्षिणपार्श्वे ऽपि समर्प्यावीनजांस्तथ । वाम
पार्श्वे तदा राजा दक्षिणस्थानिदं वदेत् ॥९६॥ एत मत्पितुरापन्ना आशिषं जगदादितः।
प्रस्तुतं युष्मदर्थे यद्राज्यं तदधुनाप्नुत ॥९७॥ क्षुधितं मां यतो यूयं भोजयामास तृड्युतं ।
अपाययत गेहे चोदासीनं निन्य मां ध्रुवं ॥९८॥ पर्य्यधापयतैवं मां नग्नं रोगिणमेव च । ५१
अपालयत बद्धं च कारायां द्रष्टुमागताः ॥९९॥ इत्युक्ता धार्म्मिका ब्रूयुः क्षुधितं त्वां कदा
प्रभो । अभोजयाम तृड्युक्तं तथैवापाययाम वा ॥१००॥ त्वां कदा वाप्युदासीनं प्राप्य गेहे
ऽनयाम नु । त्वां पर्य्यधापयामापि कदा नग्नमवाप्य वा ॥१०१॥ रोगिणं त्वां कदा दृष्ट्वा
पालयाम कुचिद्वयं । कारायां बद्धमपि वा कदा त्वामीक्षितुं गताः ॥१०२॥ इदं पृष्टो नृपो

ब्रूयान्मद्भ्रातृणां लघीयसि । एकस्मिंश्चक्र यद्येषां तच्चक्रापि तथा मयि ॥१०३॥ एवं वो
वक्ष्यहं सत्यमित्युक्त्वा धार्म्मिकान्नृपः । ततो वामस्थितान् सर्व्वानभिब्रूयादिदं वचः ॥१०४॥
यात मत्तः शपापन्ना यूयमग्नावनन्तके । प्रस्तुते भूतनाथाय सदूतौघाभिशापिने ॥१०५॥
क्षुधितं मां न हि क्वापि भोजयामास तृड्युतं । नापाययत गेहे चाप्युदासीनं न निन्य मां ॥
१०६॥ पर्य्यधापयतैवं न मां नग्नं रोगिणं च मां । नापालयत न द्रष्टुं मां काराबद्धमागताः ॥ ५२
१०७॥ इत्युक्ता ब्रूयुरपि ते क्षुधितं त्वां तु तृड्युतं । प्रभो नग्नमुदासीनं रोगिणं बद्धमेव
वा ॥१०८॥ कदा प्राप्य वयं क्वापि नोपकारमदद्म ते । इदं पृष्टो नृपोऽप्येतत् प्रतिवक्ष्यत्यय
धार्म्मिकान् ॥१०९॥ मद्भ्रातृणां लघिष्ठेऽपि यदेकस्मिन्न चक्र वै । एषां तन्मय्यपि ज्ञेय
मकृतं वो ब्रवीम्यृतं ॥११०॥ अनन्तं दण्डमेष्यन्ति चैते वाचाक्षदर्शिनः । धार्म्मिकास्त्वपि

मह्राचा गच्छेयुर्नित्यजीवनं ॥१११॥ गुरूरुवाच ॥ इत्थं भौमविचारघस्त्रकथनैः स्वीयान् स

शिष्यान् प्रभुस्तत्सुप्रस्तुतये ध्रुवं स्वमृतितः पूर्वं किलोपादिशत् । पूर्णे प्रात्यहिके महेश

भवनान्तःस्थे हि सच्छिक्षणे श्रेष्ठद्व्युपरिस्थितो ऽथ शयितुं यातः स मार्थागृहे ॥११२॥ इति

श्रीखृष्टसंगीतायां मोक्षमाहात्म्यपर्वणि (मोसिपंचशास्त्रस्य योनिस्कन्धाद्दान्येलभव्यवाक्यानां

नवमसर्गान्मत्थायस्य चतुर्विंशपंचविंशसर्गाभ्यां मार्कस्य त्रयोदशसर्गाल्लूकस्यैकविंशसर्गाच्चोद्धृतः) ५३

पुण्यसप्ताहमङ्गलवारोत्तरचरित्रसूचको नरपुत्रद्वितीयागमनादेशो नाम पंचमो ऽध्यायः ॥

शिष्य उवाच ॥ भव्यकालाधिराजः स जीवत्प्रेताक्षदर्शकः । तत्सप्ताहस्य सौम्ये ऽह्नि

किं चकाराान्तिकान्तकः ॥१॥ गुरूरुवाच ॥ पंचाशीतितमे वर्षे वैक्रमादित्यके शके ।

मासो ऽन्त्यश्चैत्र आद्यो ऽभूत्तदाब्दस्यैत्त्रयेलिनां ॥२॥ तत्पूर्णेन्दौ त्र्यहे ऽपि प्राग्ज्यौतिष्यविषु

वात् स्थिते । न्यधायि त्राणकं पर्व गणकैर्हि यहूद्यकैः ॥ ३ ॥ शुक्रवारे तु सा सायं सकलोत्तमपूर्णिमा । नरत्राणकृदिज्यातः पुण्याख्ये समसिध्यत ॥ ४ ॥ सौरमासस्य रौम्याणां मार्त्यस्यैकादशं दिनं । ख्रृष्टीयशकवर्षस्य ह्यूनत्रिंशत्तमस्य तत् ॥ ५ ॥ रोमामहापुरस्यैत द्वर्षे ऽध्यक्षौ स्थितौ किल । रुबिल्ल्यजमिनः फूष्यजमिनश्चाप्युभौ सकृत् ॥ ६ ॥ कैशरो हि तिबर्य्यस्यास्मिन् साम्राज्यस्य षोडशे । वर्षे निश्चितमभ्यूचुर्बुधा मृत्युं महाप्रभोः ॥ ७ ॥ त्वत्पृष्टे 54
बुधवारे तु चैत्रस्य द्वादशे दिने । शुक्लपक्षस्य किंत्वेनमासमार्त्यस्य षोडशे ॥ ८ ॥ तदैतत्सर्व विज्ञः स प्रोक्तदीर्घोपदेशवाक् । स्वशिष्यान् बेथनीयस्थ एतदभ्यवदत्स्फुटं ॥ ९ ॥ श्रीयेषू रुवाच ॥ परश्वः पूर्णिमान्तः स्यात् त्राणपर्व च तर्हि तु । शूलहत्यै प्रदेयो ऽस्ति नृपुत्र इति वित्त नु ॥ १० ॥ गुरुरुवाच ॥ इत्यूचे सर्वविन्मोक्ता तदा हि श्रेष्ठयाजकाः । सफरोष्याः

प्रधानाश्च तद्यस्तनवचोभयात् ॥११॥ कायफस्य समाहूता महायज्वन आलये । प्राक्
संकल्पितघातस्योपायं मन्त्रयितुं प्रभोः ॥१२॥ छलमात्रेण तं हत्यै गृह्णाम नतु पर्व्वणि । न्यूह
क्षुब्धिभयादित्थं ते ऽब्रुवन् दुर्हृदो मिथः ॥१३॥ तदा चतुर्दिनात्प्राग् यो मार्त्थानिलयभोजने ।
शनौ तेभ्यो निधातुं स्वं स्वामिनं समकल्पयत् ॥१४॥ यथाप्रोक्तं यहूदः स इष्कार्य्योत्यभिधः
शठः । श्रेष्ठयज्वसभामेनां समभ्येत्येदमब्रवीत् ॥१५॥ इष्कार्य्योतियहूद उवाच ॥ हे ५५
प्रधानाः कियन्मह्यं दास्यध्वे यदि वः करे । निदध्यां नशरेतीययेषूं युष्मद्गवेषितं ॥१६॥
गुरूरुवाच ॥ इत्युवाच कृतघ्नः स दुर्नागेनाभिशापिना । लोभव्याप्तमनाः खृष्टजिघांसून् प्रति
याजकान् ॥१७॥ तस्मै हृष्टास्तु ते त्रिंशद्रौप्यकर्षान् ददुस्तदा । दातुं तदधिकं चाङ्गीचक्रु
स्तद्ग्रहणात्परे ॥१८॥ दुष्टायाः संविदस्त्वस्याः पश्चात्स स्वप्रभुं द्विषां । निर्जने ऽर्पयितुं

हस्ते हितकालमचेष्टत ॥१९॥ शिष्य उवाच॥ ॥ नरकार्हं गुरो नूनं बुधवारस्य कर्म्म तत्। मन्दिरे तु प्रभूतानि किं पूर्णान्यभवंस्तदा ॥२०॥ गुरुरुवाच ॥ एकमन्यन्मया शिष्य कथनीयं प्रभोर्वचः । यथोक्तं निजसद्गेहे चिरात्प्राङ्मृत्युकालतः ॥२१॥ प्रविश्य हि महापुर्य्यां यथाविधि दिने दिने । मन्दिरस्य वहिःस्थे स परदेशाजिरे स्थितः ॥२२॥ तदा च परदेशीयाः केचित्सत्येश्वरार्च्चिनः । त्राणपर्व्वणि ये ऽर्च्चायै महापुर्य्यामुपस्थिताः ॥२३॥ ५६ द्वारगाख्या यहूद्येषु यतो नाभ्यन्तराश्रिताः । यज्वभ्यः प्रैरयंस्ते स्वबलीन् भास्वति गोपुरे ॥२४॥ प्रभुर्वाह्याजिरे शिष्यैः सह प्राविशदित्यमी । श्रुतवन्तस्ततो ऽभ्येत्य फिलिप्पमिदमब्रुवन् ॥२५॥ भक्तपरदेशिन उचुः ॥ हे महाशय संप्राप्ता वयं येषूदिदृक्षया । प्रार्थयामो भवन्तं नो नेतुं किल तदन्तिके ॥२६॥ गुरुरुवाच ॥ इत्याकर्ण्य फिलिप्पस्तद्वचो

ज्ञापयदन्द्रियं । ततोऽन्द्रियफिलिप्पौ तु ज्ञापयामासतुः प्रभुं ॥२७॥ स तु तौ प्रति सद्भक्त
परदेशिगणान्वितौ । अव्यक्तमिदमभ्यूवे स्वमृत्युविषयं वचः ॥२८॥ श्रीयेषूरुवाच ॥ नर
पुत्रस्य माहात्म्यकीर्तिकाल उपस्थितः । अतो युष्मान् वचः सत्यं यद्वच्मि शृणुतैव तत् ॥
२९॥ भूमौ गोधूमवीजं वै पतितं न म्रियेत चेत् । तिष्ठेत्तदैककं किंतु मृत्वा धत्ते फलं बहु ॥
३०॥ स्निह्यादात्मीयजीवं यो नरोऽपचिनुयात् स तं । संसारेऽस्मिंस्तु यो द्रुह्यातं रक्षेत्सोऽमरं ५७
सदा ॥३१॥ यो मत्सेवां नरः कुर्य्यादनुगच्छतु सोऽपि मां । अहं यत्र च तिष्ठेयं तत्र स्यान्मम
सेव्यपि ॥३२॥ यो यश्चापि मनुष्येषु प्रकुर्य्यान्मम सेवनं । तस्मै गौरवमत्यन्तं प्रदद्या
न्मामकः पिता ॥३३॥ इदानीं व्याकुलात्माहं किं वक्ष्यामि त्वतो वचः । कालात्त्वं पितर
स्मान्मां रक्षेत्यर्थयितास्मि किं ॥३४॥ किंत्वेतत्सहनायैवास्मिन् कालेऽहमुपस्थितः ।

अतो हे पितरात्मीयनाममाहात्म्यमाचर ॥३५॥ गुरुरुवाच ॥ इत्युक्तवति दृष्टोग्रमृत्युकाला
न्तिकागतौ । पुण्य ईशात्मजे वाणी श्रुताकाशोत्थिता क्षणात् ॥३६॥ श्रीपरमेश्वर उवाच ॥
आत्मीयनाममाहात्म्यं समाचरितवानहं । इदानीमपि तद्भूय आचरिष्यामि वै दृढं ॥
३७॥ गुरुरुवाच ॥ एनां संशृण्वति व्यूहे वाणीं मन्दिरसंस्थिते । केचिदन्योन्यमभ्यूचु
र्वज्रशब्दोऽस्ति खल्विति ॥३८॥ अन्ये त्वीश्वरदूतस्तं कश्चिदभ्यब्रवीदिति । मिथ ऊचु ५८
स्ततः सर्व्वानिदं प्रत्यवदत्प्रभुः ॥३९॥ श्रीयेषूरुवाच ॥ न मदर्थमियं वाणी युष्मदर्थं बभूव
तु । ईशमाहात्म्यसंपूर्तिकालं ज्ञापयितुं ध्रुवं ॥४०॥ अधुनैहिकलोकस्य विचार उप
तिष्ठति । अधुनैहिकलोकस्य नाथो निःक्षिप्यते वहिः ॥४१॥ अहमेव च चेदूर्द्ध्वं समुत्तुल्येय
भूमितः । तदात्मनिकटे सर्व्वान् समाकर्ष्यामि मानुषान् ॥४२॥ गुरुरुवाच ॥ इत्युवाच स्व

शूलोपर्य्युयान्तविषयं वचः । सन्मोक्ता मानुषाकर्षी पापच्छिद्यज्ञशक्तिभिः ॥४३॥ मोस्यु
त्तोलितपैत्तल्यसर्पविम्बाङ्कितप्रभोः । शक्तिं त्वेनां न जानन्तो ऽयूहाः प्रत्यवदन्निदं ॥४४॥
यहूद्या उचुः ॥ नित्यमेव प्रभुः खृष्टः स्थास्यतीति वयं सता । शास्त्रेण ज्ञापितास्त्वं तु कीदृङ्
नूत्नोपदेशदः ॥४५॥ उत्तोल्यो नरपुत्रो ऽस्तीति त्वदीयवचः कथं । प्रसिद्धं नरपुत्रो ऽयं को
वा त्वदुदितः सदा ॥४६॥ गुरुरुवाच ॥ एवं दिदृक्षवो ऽप्येते खृष्टं तमरिजित्वरं । सत्खृष्टो ५९
क्तो ऽयमन्यन्त स तु तान् पुनरब्रवीत् ॥४७॥ श्रीयेषूरुवाच ॥ मत्प्रकाशस्थितेर्युष्मास्वल्पकालो
ऽवशिष्यते । यावत्तद्भासितास्तु स्थ तावच्चलत यत्नतः ॥४८॥ तन्न चेत्स्यादकस्माद्वस्तदे
वाधिपतेस्तमः । चलेद्यस्त्वन्धकारे स न जानाति क्व गच्छति ॥४९॥ यावत्प्रकाशो युष्मासु
तावदेव प्रतीत तं । यूयं येन भवेतार्हाः सत्प्रकाशात्मजा अपि ॥५०॥ गुरुरुवाच ॥ इत्युक्त्वा

सत्प्रकाशः स तान् हित्वान्तर्हितो ऽभवत् । तेषां त्वप्रत्ययो ऽतिष्ठद्दृष्टेयल्लक्ष्मणामपि ॥५१॥ पुरोक्तेषायवाक्यं च ततो ऽलभत पूरणं । क इह श्रुतिमस्माकं प्रतीतिकृद्मन्यत । कस्य वा गोचरे जेता विभुबाहुर्बभाविति ॥५२॥ तदप्रत्ययहेतुश्च दृष्टवृष्टमहौजसा । ज्वालस्पृष्टोष्टकविना तेन प्रागुदितस्तथा ॥५३॥ भवेत्स्तब्धहृद्येष वर्गः समस्तो निरुद्धश्रुतिर्मुद्रिताक्षश्च सम्यक् । यतो नापि पश्येन्न बुध्येत वा स न वा स्यात् परावृत्तहृद्रोगहृत्यै ॥५४॥ इतीषायोदितं किंतु प्रधाना अपि भूरयः । तं प्रत्यायन् फरीष्यौघभयात् स्वीकारिणो नहि ॥५५॥ मठतो हि निरासात्ते ऽत्रस्यन् कीर्त्तिं नृणां किल । ईश्वरप्रत्तसत्कीर्त्तेरधिकं प्रेमकारिणः ॥५६॥ किंतु पित्राभिषिक्तः स नृणामेको विमुक्तिदः । अवतीर्णेशपुत्रः स्वे मन्दिरे ऽघोषयत्तदा ॥५७॥ श्रीयेषूरुवाच ॥ मां यः प्रत्येति स न मां प्रत्येति किल केवलं ।

किंतु प्रेरयितारं मे पितरं स्वर्गवासिनं ॥५८॥ मां यः पश्यति सो ऽस्त्येव मत्प्रेरयितृदृक्तथा ।
अहं तत्संमुखाद्भूमौ प्रकाशो हि समागतः ॥५९॥ न तमिस्त्रे चलेयुर्हि मत्प्रत्येतृगणा
भुवि । तदर्थमेव तत्राहं सत्प्रकाशः समागतः ॥६०॥ यस्तु वाक्यानि मे श्रुत्वा न प्रत्ये
त्यक्षदर्श्यहं । तस्य नास्मि विचाराय नैतो मुक्त्यै तु संसृतेः ॥६१॥ यो हि मामवमन्येत न
गृह्णीयाच्च मद्गिरः । तस्येदानीं स्थितो नूनं कर्म्मणो ऽहो ऽक्षदर्शकः ॥६२॥ मत्प्रोक्तं ह्यखिलं ६१
वाक्यं तदेव चरमे दिने । घोरे तं मानुषं सत्यप्रकाशारिं विचारयेत् ॥६३॥ न स्वयं ह्यह
मेतानि प्रावदं किंतु मां पिता । प्रेरयन्नादिशद्वाच्यं प्रवाद्यं च वचो ऽखिलं ॥६४॥ नित्य
जीवात्मकस्त्वस्ति तदादेश इति ध्रुवं । वेद्म्यतो यद्यदूचे मां पिता तत्प्रवदाम्यहं ॥६५॥
गुरूरुवाच ॥ तथा स्वं चरमं वाक्यं प्रावदन्निजमन्दिरे । प्रभुः खृष्टो ऽन्धसंव्याप्ये हतसद्दीपके

ऽचिरात् ॥६६॥ तदोयाक्षौहिणोभिश्चापकृष्टोकार्य्य एव हि । दान्येलोक्त्यनुसारेणाज्ञातस्वहित
कालके ॥६७॥ शिष्य उवाच ॥ दण्डं यैरूषलेम्यानां स्वदीपागतिहेलिनां । या दान्येलो
ऽभिरवदत् का सा येषूस्मृता पुरा ॥६८॥ गुरूरुवाच ॥ बाबिले स स्थितो दग्धस्वपुर्य्या
मन्दिरस्य च । सप्तत्यब्दानुनिर्म्माणं यिरिमीयोक्तमर्थयन् ॥६९॥ एतत्सान्त्ववचः प्रापे
शदूतेनोदितं सता । गब्रियेलेन सन्ध्यायामुत्सर्गसमये ध्रुवं ॥७०॥ दूत उवाच ॥ हे दान्येल गणे ६२
त्वदोय इह सत्पुर्य्यां च संस्थापिता अब्दा एव हि सप्त सप्ततिगुणाः पापान्तकृत्यै दृढं ।
प्रायश्चित्तकृते ऽङ्कुसो ऽनवरतं धर्म्मं च नेतुं भुवि मुद्रोकर्त्तुमपोशदृष्टिवचसी पुण्याग्रिमाभ्य
क्तये ॥७१॥ आज्ञाया हि यिरूषलेमनगरं निर्म्मातुमार्य्यं पुनः पश्चात् खलूभिषिक्तराजसमयान्तं
सप्तवर्षास्तदा । स्युर्वै सप्तगुणा द्विषष्टिगुणकाश्चाथ द्विषष्टिष्वहो सप्ताब्देषु पुनर्दुरर्न्तिसमये

तिष्ठेत् सरथ्यश्वयः ॥७२॥ सप्ताब्दात्तु परे द्विषष्टिगुणकाद्राजाभिषिक्तो ऽप्यसौ हन्तव्यो ऽस्ति
न तस्य चैव भविता पश्चाद्यहूद्यो गणः । किन्त्वागन्तुरमुष्य राज्ञ इतरः संघः पुरीं सत्स्थलं
चाप्युम्र्य्यैव विनाशयिष्यति युधाश्लेषं च तं निर्जनं ॥७३॥ सप्ताब्दे स तु संविदं बहुजनैः सार्द्धं
नृपो ऽस्मिन् दृढीकुर्य्यात्खल्वथ चास्य मध्य इह स स्थाने बलिं साध्वरं । सम्यग्वै विनिवर्त्त
यिष्यति यतो ऽपूतीकृतां वैरिणां पक्षैस्तन्निभृतीप्रकार्य्यमथ च स्थेयं सदा निर्जनं ॥७४॥ ६३
गुरुरुवाच ॥ एवं दान्येलसद्ग्रन्थे ऽव्यक्तं भव्यवचः स्थितं । पूर्य्यं यदवदत् खृष्टो निजकालात्
परे ऽचिरं ॥७५॥ हते राज्यभिषिक्ते ऽस्मिन् पूर्व्वोक्तसमयान्तरे । तथा दण्डयं पुरं ह्येव स्वसद्रा
जविवर्ज्जितां ॥७६॥ तन्नुन्नश्चेतरः संघो भीमो रौम्यः स्वसेनया । घातकान् घातयामास
ददाहापिच तत्पुरं ॥७७॥ सत्स्थलं चापि यत्पूर्व्वमासीत् तत्रापकर्म्म ते । निदधुस्तत्र नित्यं

चाध्वरादीनि न्यवर्त्तयन् ॥७८॥ चन्द्रादितिमिते ऽब्दे तत् खृष्टीये वैक्रमे त्वभूत् । अष्टाविंश
शते किंतु सप्ताब्दे प्राक् शकेश्वरात् ॥७९॥ एतस्माद्भीमकालात्तु दान्येलोक्त्यनुसारतः ।
सप्ताब्दाः सप्ततिगुणाः पूर्वस्था गणिता यदि ॥८०॥ तदाप्तो ऽब्दः कलेः पक्षजीवर्त्तुयम
संमितः । पूर्वं खृष्टशकान्नूनविंशाधिकचतुःशतः ॥८१॥ राजा द्वितीयदार्य्यूर्हि मन्दिर
स्यादिशत्तदा । पूर्वार्त्तक्षेरूषा रुद्धं निर्म्माणं पारसीककः ॥८२॥ तस्मिंश्च पुनरारब्धे यथा ६४
कूराः पुरादिशत् । सिद्धं सद्म यथाज्ञोक्तं तत्परे ऽब्दचतुष्टये ॥८३॥ ततो दुरर्त्तियुक्तेषु
द्विषष्टिगुणकेषु तु । सप्ताब्देषु सदातिष्ठदाखृष्टागति सत्पुरं ॥८४॥ तच्छेषे ऽस्मिन् यथा
प्रोक्तमूनत्रिंशत्तमे किल । तच्छकाब्दे स हन्तव्यो न स्वीयैस्तत्परे गणैः ॥८५॥ या ह्यहे ऽपि
तु तत्पूर्वं तस्याभीत् प्रस्तुतिर्मृतेः । सतः पित्रभिषिक्तस्य शिष्य ते तामवर्णयं ॥८६॥

ऽपिक्रीतस्तु कृतघ्नशिष्यकुमनोलुब्ध्याभिषिक्तो नृपः सर्वैर्द्वादशभिस्तदैवममुना तद्वस्त्रशेषे ऽन्वि तः । आत्मीयालयतः समाप्य चरमं तत्रोपदेशं दृढं तत्सद्वीप्यवमानिनां पुरवहिःस्थां वेथ नीयां गतः ॥८७॥ इति श्रीख्रिष्टसंगीतायां मोक्तृमाहात्म्यपर्व्वणि (इषायभव्यवाक्यानां षष्ठ त्रिपंचाशत्तमसर्गाभ्यां दान्येलभव्यवाक्यानां नवमसर्गाद्यिनहर्मीयचरित्राभ्यां मत्थायस्य षड् विंशसर्गान्मार्कस्य चतुर्द्दशसर्गाल्लूकस्य द्वाविंशसर्गाद्योहन्नेर्द्वादशसर्गाच्चोद्धृतः) पुण्यसप्ताहबुध ६५ वारचरित्रसूचको ऽभिषिक्तघातकालप्रस्तुतिर्नाम षष्ठोऽध्यायः ॥

शिष्य उवाच ॥ विक्रीतः शठशिष्येण बल्यध्वरनिवर्त्तकः । सद्राजस्त्राणपर्व्वप्राग्गुरूवारे चकार किं ॥१॥ गुरूरुवाच ॥ सत्पालकचरित्रस्यान्तिमे यस्मिन् दिने ऽर्पयत् । आशेषं सो ऽखिलस्वीयेष्वन्नं स्वादुतमं वरं ॥२॥ स वृहस्पत्यहः पुण्यः सर्व्वैः ख्रिष्टार्च्चिभिर्मतः । स्मरणीयाश्च

तस्यैव क्रियाः सर्व्वसमास्वाप ॥३॥ तत्प्रातर्बैथनीयातो नायात् प्राग्वन्महापुरं । शिष्यप्रश्नं
त्ववापैनमागन्तूत्सवगोचरं ॥४॥ श्रीयेषूशिष्या ऊचुः ॥ भवेदद्यैव सन्ध्यायां समारम्भ
स्तिथेः प्रभो । पौर्णमास्या यदन्तर्नः कार्य्यं त्राणीयभोजनं ॥५॥ अतः कस्मिन् स्थले
ऽस्माभिस्तदा श्वो वेश्वरोक्तितः । प्रस्तव्यं भोजनं पुण्यमैस्त्रयेल्यं त्वयेष्यते ॥६॥ गुरुरुवाच॥
इति संश्रुत्य सन्भोक्ता वरशिष्यौ तदानुदत् । पुरे प्रस्तरयोहन्नो प्राक् समादिश्य खल्विदं ६६
॥७॥ श्रीयेषूरुवाच ॥ मोसिशास्त्रानुसारेण प्रस्तुतं नः कृते युवां । सर्व्वाण्यन्नोपयुक्तानि
विद्यातं तु स्थलं तथा ॥८॥ पुरं प्रविशतोः साक्षान्निष्ठेद्धि युवयोर्नरः । धृतोदकलसस्तं च
प्रतोल्यामनुगच्छतं ॥९॥ यस्मिंस्तु स विशेद्गेहे तस्मिन् विष्ट्वा तथा युवां । गृहस्थं ब्रूत
मेवं त्वामभिवक्त्यधुना गुरुः ॥१०॥ अन्तिकः समयो मेऽस्ति ततोऽहं त्राणभोजनं । यत्राद्यां

सह शिष्यैः सान्नशाला कुत्र विद्यते ॥११॥ इति पृष्टः स वां वड़ां शालामूर्द्धस्थितां तदा ।
दर्शयिष्यति तत्रैव सर्वाणि प्रस्तुतं युवां ॥१२॥ गुरूरुवाच ॥ इत्याज्ञां प्राप्य सीमोनयोहन्नी
नगरं गतौ । सर्वं चावापतुस्तत्र सम्यग् यद्वत्प्रभूदितं ॥१३॥ सर्वं मेध्यादिविषयं सायं
प्रस्तुत्य च ध्रुवं । आरब्धे सतिथौ तत्रापैक्षेतामागतिं प्रभोः ॥१४॥ शेषशिष्यान्वितः सो
ऽस्मिन्नन्नशाल उपस्थितः । निशि स्वीयगणप्रेमलक्ष्मोपाक्रमतान्तिमं ॥१५॥ जगतो यत ६७
आत्मीयं पितरं प्रति निःसृतेः । इदानीमागतः काल इति जानन् महाप्रभुः ॥१६॥ तदा
यान् भुवने स्वीयानस्निह्यन्मानुषान् सदा । आशेषमपि तानार्य्यस्तथास्निह्यद्विशेषतः ॥१७॥
भोजने ऽतः समासीनः सशिष्यस्त्राणपर्व्वकं । अविमात्मीयभण्येज्याविम्बमालोक्य सो ऽब्रवीत् ॥
१८॥ श्रीयेषूरुवाच ॥ आत्मदुःखसहात्पूर्व्वं युष्माभिः सह खल्वहं । अतुमैच्छं महायत्नादे

तत्त्राणीयभोजनं ॥१९॥ इतस्तद्धि पुनर्नाद्यां यावन्न किल पूरितं । तन्नवेदीशराज्यान्त
रिति युष्मान् ब्रवीम्यहं ॥२०॥ गुरूरुवाच ॥ तिक्तवल्लियुतं मिश्रनिःसृत्यर्त्यङ्कमेव तत् ।
अत्त्वान्नं स सुरापात्रे न्यस्याशिषमुवाच तान् ॥२१॥ श्रीयेषूरुवाच ॥ धन्यवादान्वितं पात्र
मिदं विभजतात्मसु । यूयं यदधुना वच्मि स्मरन्तो वाक्यमेव तत् ॥२२॥ इतो न हि पुनः
पेया द्राक्षोत्पन्नसुरा मया । इयं यावन्न वो मध्य आगच्छेद्राज्यमैश्वरं ॥२३॥ गुरूरुवाच ॥ ६८
इत्युवाच महामोक्ता प्रत्नत्राणस्मृतिं यदा । वरमामकरोन्नूत्नमहात्राणाङ्कपूर्विकां ॥२४॥
समाप्ते भोजने चास्मिन् निधेयो यत्परे ऽरिषु । इष्कार्य्योतियहूदेन नागाविष्टहृदैव सः ॥
२५॥ तद्विज्ञः सुविदंश्चापि स्वहस्ते ऽखिलमर्पितं । पित्रेतीशावतीर्णश्चारोहिष्यंश्चैश्वरं
प्रति ॥२६॥ एवं ज्ञापयितुं शिष्यान् स तदोत्थाय भोजनात् । त्यक्तवस्त्रो वराशिं स

लब्ध्वात्मानमवेष्टयत् ॥२७॥ आधारेऽम्भस्ततो न्यस्य संप्रक्षालयितुं पदान् । शिष्याणां
मार्ष्टुमपि चारेभे स्वीयवराशिना ॥ २८ ॥ प्रस्तरस्तु यदा तद्वत् स्वामिनाधिगतस्तदा ।
उवाच त्वं प्रभो किं मे पादौ प्रक्षालयेरिति ॥२९॥ तदा तमवदद्येषूरिदानीं यत्करोम्यहं ।
तन्न वेत्स्यधुना किंतु पश्चाज्ज्ञास्यसि खल्विति ॥३०॥ प्रस्तरस्तु कदाचिन्मे पादौ न क्षाल
येः प्रभो । इत्युवाच दृढं किंतु येषूः प्रत्यब्रवीदिदं ॥३१॥ चेन्न प्रक्षालयेयं त्वामहं हे ६९
प्रस्तर ध्रुवं । तदा तव मया सार्द्धं भागो न स्यात्कदाचन ॥ ३२ ॥ इत्थमाकर्ण्य
सीमोनो न मेऽङ्घ्री केवलं प्रभो । किंतु हस्तौ शिरश्चापि क्षालयेत्यब्रवीत् ततः ॥ ३३ ॥
श्रीयेषूरुवाच ॥ यः स्नातः क्षालनं तस्मा आवश्यं केवलं पदोः । सम्यक् पूतोऽस्ति स
स्थापि यूयं नत्वखिलास्तथा ॥३४॥ गुरुरुवाच ॥ एवं प्रोवाच मोक्ता स्वनिधातृशठ

शिष्यवित् । तद्धेतोर्हृदितं पूता यूयं न त्वखिला इति ॥ ३५ ॥ सर्वेषां क्षालयित्वाङ्घ्रीन् पुनः स्वीयांशुकानि च । परिधायोत्थितस्तान् स इममादेशमब्रवीत् ॥३६॥ यीयेषूरुवाच ॥ यद्वः प्रति मयेदानीं कृतं तद्वित्थ किं ध्रुवं । गुरुं प्रभुं च मां ख्याथ सत्यं सो ऽहं यतः स्थितः ॥३७॥ चेत्पदो ऽक्षालयं वो ऽहं प्रभुः सन् गुरुरेव च । तदान्यो ऽन्यं पदो यूयं प्रक्षालयितुमर्हथ ॥३८॥ दृष्टान्तं ह्यददां नूनं युष्मभ्यं येन सर्वशः । यथाकरवमेवाहं यूयं कुर्य्यात वै तथा ॥३९॥ न श्रेयान् किङ्करो नाथान्न वा प्रेरयितुः प्रभोः । श्रेयांस्तत्प्रेरितो ऽस्तीति सत्यं युष्मान् ब्रवीम्यहं ॥४०॥ यद्येतानि तु जानीथ हे मत्प्रेरितकिङ्कराः । मङ्गलाः स्यात चेद्यत्नात्तानि कुर्य्यात सर्वशः ॥४१॥ भिन्नदेशाधिपा नूनं कुर्वते भृत्यशासनं । ये वशीकुर्य्युरेव स्वांस्ते ख्यातास्तत्सुकारिणः ॥४२॥ यूयं तु मा तथा स्यात महीयान् ७०

यस्तु वो गणे । कणिष्ठ इव सो ऽस्त्वेवं शास्ता सेवनकर्त्तृवत् ॥४३॥ कतरो ह्येतयो
र्युष्मन्मते किल महत्तरः । भोजने किं समासीनः किं वा तत्परिचारकः ॥४४॥ अहं
विद्ये तु वो मध्ये परिचारकवद्ध्रुवं । यूयं तु मत्परीक्षासु स्थिता नित्यं मया सह ॥४५॥
निधास्ये ऽहं च युष्मासु न्यधाद्यद्वत् पिता मयि । राज्यं राज्ञा मया सार्द्धं ततो ऽद्यात पिवेत
च ॥४६॥ तर्हि सिंहासनेष्वेव समासीनाः सगौरवाः । स्यातेस्त्रयेलवंशानां द्वादशानां विचा ७१
रकाः ॥४७॥ न त्वशेषगणस्योक्तमिदं वो विषये वचः । यान् यान् ह्यवृणवं पूर्व्वं तान्
सर्व्वान् किल वेद्म्यहं ॥४८॥ द्वादशस्वपि तेष्वेकः पिवत्यत्ति च यो मया । सहेदानीं स सद्ग्रन्थे
तद्वचःपूर्त्तये स्थितः ॥४९॥ मम यो ऽप्यतिमित्रतां गतो बहु यस्मिन्निहितं च कर्म्म मे ।
मम चान्नमखाददेव यो मयि पार्ष्णिं न्यसितुं स उद्यतः ॥५०॥ एतद्वो वाक्यमधुना

प्राणत्पूर्त्तेः प्रवक्ष्यतः । तत्पूर्त्तिसमये ऽहं सन्निति वो निश्चयो भवेत् ॥५१॥ यो यः कमपि
मन्नुन्नं लभेत लभते स मां । मां लभेत तु यः सो ऽपि नोतारं लभते मम ॥५२॥ गुरुरुवाच ॥
इदमुक्त्वा महात्मोक्त्वा दाविज्ञोतोत्थितं वचः । पूर्त्तव्यमचिरात् तर्हि व्याकुलात्मेदमब्रवीत् ॥५३॥
योयेषूरुवाच ॥ एको युष्मद्गणे नूनं मां निधास्यति शत्रुषु । इति सत्यतमं वाक्यं युष्मान्
सर्व्वान् प्रवक्ष्यहं ॥५४॥ गुरुरुवाच ॥ इति संश्रुत्य शिष्यास्तु निरैक्षन्त परस्परं । ७२
शङ्कित्वा कस्य विषये दुष्टं तत्कर्म्म सो ऽवदत् ॥५५॥ येषूप्रेष्ठस्तु यः शिष्यो योहन्निर्जिबि
दीयजः । तस्मिन्नेव समासीने प्रभुवक्षो ऽन्तिके तदा ॥५६॥ इङ्गितं निदधौ प्रष्टुं प्रभुं तत्
कठिनं वचः । प्रस्तराभिधसीमोनस्तदर्थज्ञानलिप्सुकः ॥५७॥ येषूवक्षो ऽन्तिकासीनस्ततो
योहन्निरेव सः । अवदत् कः प्रभो सो ऽस्ति त्वन्निधाता रिपुष्विति ॥५८॥ तत्काले चैक

शो ऽन्ये ऽपि प्रष्टुमारेभिरे प्रभो । किं सो ऽस्म्यहमिति व्यग्राः सर्वे ऽपि स किमस्म्यहं ॥५९॥
तदा स्वप्रेष्ठशिष्यस्य सशेषैकादशस्य सः । प्रश्नं प्रत्यवदन्मोक्तान्निशङ्काहृतये तथा ॥६०॥
योयेषूरुवाच ॥ भाजने यो मया सार्द्धं करं न्यस्य करान्मम । आर्द्रखण्डं लभेतैव निधाता
खलु सो ऽस्ति मे ॥६१॥ गामी नरसुतो नूनं यद्वत्तद्विषये पुरा । पुण्यग्रन्थेषु लिखितं शक्त्या
किल दुरात्मनां ॥६२॥ किंतु येन नरेणास्यां नरपुत्रो निधीयते । धिक्तं श्रेयो भवेत्तस्मै ७३
चेन्नाजायत स क्वचित् ॥६३॥ गुरुरुवाच ॥ इत्याकर्ण्य यहूदः स इष्कार्य्योतिरहं गुरो । किं
सो ऽस्मीत्यवदत् तं चाब्रवीद्येषूस्त्वयोदितं ॥६४॥ इत्थमुक्त्वा प्रभुः पूर्वं मैत्त्रयेल्यं समाप्तवान् ।
त्राणीयभोजनं नूत्नं स्वयज्ञाङ्कं समार्पयत् ॥६५॥ गौधूम्यपिष्टमादाय तदाशीर्व्वादतः परे ।
बभञ्जाथ समस्तेषु तेषु तद्विदधौ पृथक् ॥६६॥ तांश्चोवाच स आदाय यूयमत्तेदमेकशः ।

मत्स्मृत्यै यत एतन्मे शरीरं ह्यस्ति खल्विति ॥६७॥ पानपात्रं तदादाय धन्यवादात्परे
ऽपि सः । विदधौ तेषु सर्व्वेषु तथोवाच च तान् प्रति ॥६८॥ एतस्माद्यूयमखिला मत्स्मृत्यै
पिवत ध्रुवं । इदं ह्यस्ति ममासृग् वोऽर्थे सिक्तं नूतनसंविदि ॥६९॥ तद्बहूनां कृतेऽसृक् तु
सिच्यते पापमुक्तये । द्राक्षोत्पन्नसुरां त्वेनां न पिवेयमहं पुनः ॥७०॥ यावन्न किल
युष्माभिः सार्द्धं राज्ये पितुर्मम । नूत्नामपि पिवेयं तां संवित्पूर्त्त्यङ्ककामिति ॥७१॥ तथा ७४
स्वप्रेम्ण आश्चर्य्यं चिह्नं तेभ्योऽददात्प्रभुः । मरिष्यन् सकलेभ्यश्च प्रत्येष्यद्भ्योऽपि तद्वचः ॥७२॥
एतत्कुर्व्वन्ति नित्यं हि शिष्य ख्रीष्टार्च्चिनोऽखिलाः । तच्छरीरासृगङ्कान् हि पिवन्तोऽदन्त
एव च ॥७३॥ तत्प्रेरितगणात्तेऽङ्कान् लभमाना हि तान् प्रियान् । गौधूम्यपिष्टं सद्राक्षं पुण्यी
भूतं तदाशिषा ॥७४॥ तथा स्वप्रभुसन्मृत्युं प्रशंसन्ति निरन्तरं । नित्यजीवनदं पापहर

मातन्नवागति ॥ ७५ ॥ शिष्य उवाच ॥ प्रभोरन्यत्नवचनं त्वया प्राक्कथितं गुरो ।
स्मरामि बहुपातस्यानुगानामपि कारणं ॥७६॥ सत्यमन्नं हि मे मांसं सत्यं पीतमसृङ्मम ।
मन्मांसभुगसृक्पायी मय्यस्त्यस्मिंस्तथाप्यहं ॥७७॥ यथाहं जीवता पित्रा प्रेरितो जीवितो
ह्यतः । तथा योऽत्स्यति मां सोऽतो मया जीविष्यति ध्रुवं ॥७८॥ इत्यन्यत्नवचःपूर्त्ति
चिह्नं वेद्म्यधुना गुरो । निहितं वरशिष्येषु सन्मण्डल्यधिकारिषु ॥७९॥ द्वादशानां ७५
गणे त्वेषां योऽभिशापिस्वरूपकः । शठोऽभूत् किं तथा सोऽपि तत्पुण्यान्नमविन्दत ॥
८०॥ गुरुरुवाच ॥ तन्नूत्नभोजने भोक्ता यथोक्तं निजभाजनात् । आर्द्रखण्डं ददौ तस्मै तत्र
न्यस्तकराय हि ॥८१॥ इष्कार्य्योतियहूदैस्तु स सीमोनसुतो यदा । सर्व्वाग्रे प्रभुतो लेभे स्व
शठत्वस्य लक्ष्म तत् ॥८२॥ तदा भूताधिपेनैवाविष्टो दुरभिशापिना । वहिर्निर्गन्तुमुत्तस्थौ

सद्यो नरकजो निशि ॥८३॥ यत्क्षणे तूदतिष्ठत्स तदा तं प्रभुरब्रवीत् । यत्करोष्याशु
तत्कुर्वित्युक्त्या शिष्यैरबुद्धया ॥८४॥ तेषां केचिद्य हृदस्य कोषधारित्वहेतुतः । आज्ञां तं प्रत्य
मूं येष्वा किलानुममिरे कृतां ॥८५॥ पर्वार्थे यन्न आवश्यं क्रीणीह्याम्विति वस्तु वा ।
दीनेभ्यो देयमदिहोत्यर्थं ते ऽन्वभवन् प्रभोः ॥८६॥ भूताविष्टाय तस्मै तु स्वदुःसंकल्पपूर्तये ।
आशुत्वाज्ञां प्रभुप्रोक्तां नह्यबुध्यन्त ते तदा ॥८७॥ निर्गते तु शठे तस्मिन् दुर्म्मनोयाजकान् ७६
प्रति । स्वीयस्वामिनिधानार्थं प्रभुरेतद्वचो ऽब्रवीत् ॥८८॥ श्रीयेषूरुवाच ॥ अधुना नर
पुत्रस्य माहात्म्यसमयः किल । उपतस्थौ विभोश्चापि तस्मिन् माहात्म्यभासनं ॥८९॥
चेत्तस्मिंस्त्वीशमाहात्म्य बभौ पूर्वमितो ऽपि तं । विभुरात्मनि माहात्म्ययुतीकुर्य्यात्सप
द्यपि ॥९०॥ अल्पकालं स्थितो बाला युष्माभिः सह खल्वहं । यूयं मां मृगयिष्यध्वे मत्पूर्वो

ह्यनुसारतः ॥९१॥ यत्र तिष्ठाम्यहं ह्येव तत्र गन्तुं न शक्नुथ । इति यद्वद्यहूदीयांस्तथा वो
ऽपि ब्रवीम्यहं ॥९२॥ नूतनाज्ञां वो ददाम्येव स्नेहितुं हि परस्परं । यथास्निह्यमहं युष्मान्
स्निह्यतापि मिथस्तथा ॥९३॥ मच्छिष्याः संस्थिता यूयमिति सर्व्वे नरास्तदा । विज्ञा
स्यन्ति यदि स्नेहं धारयेत परस्परं ॥९४॥ गुरुरुवाच ॥ इत्युक्तवति सर्व्वज्ञे मोक्तरि प्रस्तरो
ऽब्रवीत् । प्रभो कू गच्छसीत्येव तं तु प्रत्यवदत्प्रभुः ॥९५॥ श्रीयेषूरुवाच ॥ यत्र गच्छाम्यहं तत्रा ७७
न्वेतुं न क्षमसेऽधुना । किंतु पश्चादिहापि त्वं मां खल्वनुगमिष्यसि ॥९६॥ प्रस्तर उवाच ॥
कस्माद्धेतोः प्रभोऽहं त्वामन्वेतुमधुना ध्रुवं । न क्षमेऽहं निधास्ये हि त्वदर्थे निजजीवनं ॥
९७॥ श्रीयेषूरुवाच ॥ जीवनं स्वं मदर्थे किं त्वं निधास्यसि सांप्रतं । अहो सीमोन सीमोन मदुक्तं
ते वचः शृणु ॥९८॥ त्वदादीनभिशापी हि ग्रहीतुमधुना शठः । गोधूममिव चालन्यामैच्छ

चालयितुं च वः ॥९९॥ त्वद्विश्वासाचलत्वायाधुना मत्पितरं त्वहं । प्रार्थयं त्वत्कृते नूनं
बहुःसंकल्परोधकः ॥१००॥ त्वं तु तद्दुष्टसंक्षुब्धेः प्रत्यावृत्तो यदा भवेः । तदा तद्वन्निजा
भ्रातॄन्स्खलतान् सुस्थिरीकुरु ॥१०१॥ प्रस्तर उवाच ॥ हे प्रभोऽहं त्वया सार्द्धमिदानीं
बन्धनालयं । मरणं चाप्युपैतुं वै मुदातिप्रस्तुतोऽस्म्यपि ॥१०२॥ श्रीयेषूरुवाच ॥ प्रस्तरै
तन्निशान्ते प्राक् ताम्रचूडध्वनेरपि । कर्त्तव्यः खलु मज्ज्ञानास्वीकारस्त्रिरपि त्वया ॥१०३॥ ७८
गुरुरुवाच ॥ शिष्याग्र्यस्य तथा भव्यमचिरात् पातमुक्तवान् । मानिनोऽपि प्रभुः सर्वानिद
मेकादशाब्रवीत ॥१०४॥ श्रीयेषूरुवाच ॥ रूप्याधारैः सकोषैर्वो विहीनाननुपानहः । यदाहं
प्रेरयं किं वो वस्त्वप्राप्तिरभूत्तदा ॥१०५॥ गुरुरुवाच ॥ एवं पृष्टास्त ऊचुर्नाप्राप्तिर्नः
कस्याप्यभूदिति । प्रभुस्तूवाच यस्यैव रौप्याधारोऽधुना नहि ॥१०६॥ स तं प्राप्नोतु तद्वच्च पान्थ

कोषो ऽपि यस्य न । यस्यासिर्नास्ति वस्त्रं स्वं विक्रीयाप्नोत्वसिं स तु ॥१०७॥ सा खृष्टविषयो
क्तिर्हि गणितः सो ऽघकृत्स्विति । मय्येव पूरणीयास्ति यथा मद्विषयाखिलाः ॥१०८॥ इदं
संश्रुत्य ते ऽवोचन् प्रभो ऽसी द्वाविह स्थितौ । इत्युक्तः स त्वलमिति प्रोच्येदं तानुपादिशत् ॥
१०९॥ श्रीयेषूरुवाच ॥ मातिसंक्षुभ्यतां युष्मद्धृदयं परमेश्वरे । प्रतीतिर्वो ऽस्ति तद्वच्च
मय्यपि प्रत्ययो ऽस्तु वः ॥११०॥ मत्पितुः सद्मनि स्थानान्यनेकानि स्थितानि हि । तन्न चेत्स्या ७९
त्तदा यूयं ज्ञापिताः स्यात तन्मया ॥१११॥ किंतु तत्र स्थलं वो ऽपि प्रस्तोतुं किल गाम्यहं ।
तत्कृत्वा त्वागमिष्ये ऽहं पुनर्वो लब्धये समं ॥११२॥ ततो ऽहं यत्र तत्रापि स्यात यूयं सुवित्थ
हि । स्थानं यत्राप्यहं गामी तन्मार्गमपि वित्थ च ॥११३॥ गुरुरुवाच ॥ एवं सान्त्ववचः
स्वीयान् संवदत्यनुगान् प्रभौ । शङ्कादुःखयुतस्तेषामेकः प्रत्यब्रवीत्तदा ॥ ११४ ॥ थोमा

उवाच ॥ यत्र त्वं हे प्रभो गामी तन्न विद्मः स्थलं वयं । अतस्तन्मार्गमेवाहो कथं वेत्तुं क्षमामहे ॥११५॥ श्रीयेषूरुवाच ॥ अहं मार्गोऽस्मि सत्यं च जीवनं चापि संस्थितः । नोपैति पितरं कश्चिन्मन्मार्गेण विना नरः ॥११६॥ वेदवेत्स्यत मां यूयं पितरं मेऽप्यवेत्स्यत । अधुना स तु युष्माभिर्ज्ञातः संदृष्ट एव च ॥११७॥ गुरुरुवाच ॥ इति श्रुत्वा फिलिप्पस्तमूचेऽस्मान् पितरं प्रभो । दर्शयैतेन चालं नः स्यादित्युक्तोऽब्रवीत्स तु ॥११८॥ श्रीयेषूरुवाच ॥ इयत्कालमहं सर्वैर्युष्माभिः सह किं स्थितः । न त्विदानीमपि ज्ञातो हे फिलिप्प त्वया कथं ॥११९॥ मां ददर्श हि यः सोऽपि ददर्श पितरं ततः । कथं त्वं वक्षि पितरमस्मान् दर्शय खल्विति ॥१२०॥ अहं पितरि संस्थो हि पिता चापि तथा मयि । इत्थं किं हृदये शिष्य त्वं न विश्वसिषि स्वयं ॥१२१॥ यान्यहं वच्मि वाक्यानि नात्मतो वच्मि तान्यहं ।

मयि तिष्ठन् पिता मे तु स एव कुरुते क्रियाः ॥१२२॥ अहं पितरि मय्येवं पितेत्युक्तिं मम
स्वयं । प्रतीत ननु चेत् तर्हि क्रियाहेतोः प्रतीत मां ॥१२३॥ मां यः प्रत्येति सो ऽतो ऽपि कर्त्तैवं
मत्कृतक्रियाः । ताभ्यो महीयसीश्चापि पितरं गाम्यहं यतः ॥१२४॥ इत्यृतं वच्मि वो यद्यन्म
न्नाम्ना प्रार्थयेत च । तत्कर्त्तास्मि पिता चातः पुत्रे माहात्म्यमाप्स्यति ॥१२५॥ यद्यद्याचेत
मन्नाम्ना यूयं कर्त्तास्म्यहं हि तत् । चेन्मां स्निह्येत यूयं तु तदाज्ञा मम रक्षत ॥१२६॥ पितरं ८१
चार्थयिष्ये ऽहं स त्वादेष्टारमेव वः । दातान्यं सह युष्माभिः स्थायिनं शाश्वतीः समाः ॥
१२७॥ स सत्यात्मैव यं लब्धुमशक्ता किल संसृतिः । यतस्तं नेक्षते नूनं न वा जानाति ता
मसौ ॥१२८॥ तं यूयं तु सुजानीथ स यतो युष्मदन्तिके । स्थितः संप्रति पश्चात्तु तिष्ठेद्वो
ऽभ्यन्तरे सदा ॥१२९॥ न विहास्यामि वो ऽनाथानहमेष्यामि वः प्रति । अल्पकालो

वशिष्टोऽथ मां न द्रक्ष्यति संसृतिः ॥१३०॥ यूयं तु द्रक्ष्यथ स्पष्टं यतश्च मयि जीवनं । ध्रुवं
तिष्ठत्यतो यूयमपि जीविष्यथ ध्रुवं ॥१३१॥ अहं स्वपितरि स्थाता यूयं चापि तथा मयि ।
अहं युष्मासु चेत्येव तत्काले ज्ञास्यथ स्फुटं ॥१३२॥ यो दधाति मदाज्ञास्तु रक्षत्यपि च
कर्म्मभिः । स एव स्नेहकारी मे ज्ञेयो नरगणे स्थितः ॥१३३॥ यस्तु स्निह्यति मां तं मे पिता
स्नेहिष्यति ध्रुवं । तं स्नेहिष्याम्यहं चैवात्मानं दर्शयितास्मि च ॥१३४॥ गुरुरुवाच ॥ तदा ८२
नाम यहूदो यो द्वादशानां गणे स्मृतः । नेष्कार्य्योत्यभिधः किंतु थद्दायः प्रभुबान्धवः ॥१३५॥
स इमां सत्प्रसादोक्तिं श्रुत्वान्यन्तार्थकां तदा । अतिजिज्ञासयावोचदिदं सर्व्वविदं गुरुं ॥१३६॥
अल्फायजयहूद उवाच ॥ प्रभो त्वं कथमात्मानं तथा संदर्शयिष्यसि । अस्मान् न तु सकृत्
सर्व्वां संसृतिं भूमिमण्डले ॥१३७॥ श्रीयेषूरुवाच ॥ स्निह्येन्नरो मां यदि मे तदा स वाक्यं सु

रक्षिष्यति मत्पिता च । स्निह्येदतस्तं नरमप्यथावामभ्येत्य तिष्ठेव तदन्तिके ऽपि ॥
॥१३८॥ स्निह्येन्न मां यस्तु स वै मदीयं वाक्यं न रक्षत्यपि यत्तु वाक्यं । युष्मच्छ्रुतं तन्न मदीय
मस्ति पितुस्तु मत्प्रेरयितुस्तदेवं ॥१३९॥ एतान्यवोचं व उपस्थितः सन् किंत्वन्य आदेशक
एव यो वः । पित्रा प्रणोद्यो मम नामशक्तौ भूमौ सदात्माखिलवस्तुविज्ञः ॥१४०॥ स एव
सर्वाण्युपदेक्ष्यते वो यद्यत्पुराण्यत्तसदर्थकं च । युष्मान्मयोक्तं तदपि स्फुटं स संस्मारयिष्य ८२
त्यतिविद्यया वः ॥१४१॥ सन्धिं नु युष्मासु जहामि नूनमात्मीयसन्धिं प्रददाम्यहं वः ॥
न संसृतिप्रत इवास्ति सो ऽतो मा क्षुभ्यतां मा च बिभेतु हृद्वः ॥१४२॥ अहं हि गामी पुनरा
गमिष्यन् युष्मान् प्रतीत्थं स्मरथोदितं मे । स्निह्येत यूयं दृढमेव चेन्मां पित्रन्तिके ऽप्यात्म
गतिं ब्रुवन्तं ॥१४३॥ तदातिहृष्येत तदुक्तितो ऽपि मत्तः पिता ह्येव महत्तरो ऽस्ति । युष्मान्

पुरेतान्यधुना तु वच्मि ततः प्रतीयात यदा तथा स्यात् ॥१४४॥ नेतस्तु युष्माभिरहं स
हैव बहु प्रवक्ष्ये समुपस्थितो हि । एतज्जगत्संसृतिनाथ ऊयो नाप्नोति किंचितु मयि स्वकीयं ॥
१४५॥ स्निह्याम्यहं सत्पितरं तदाज्ञानुसारतश्चाप्यखिलं करोमि । इत्थं जगज्ज्ञापयितुं स
मोहे ऽथोत्तिष्ठतेतो वयमेव याम ॥१४६॥ गुरूरुवाच ॥ इत्यैशवचसः पश्चाद्धन्यवादं प्रगाय
ते । सर्वे त्राणान्नशालातो रात्रौ रथ्यासु निर्गताः ॥ १४७॥ प्रात्नत्राणमहोत्सवान्नघ ८४
सनात्पश्चात्तथा सत्प्रभुर्नूत्नत्राणसदन्नमेव परमं स्वासृक्तनूरूपकं । संस्थाप्यात्मगणाय सर्वभुवने
प्रेमात्मने धर्म्मिणे श्रेयः सान्त्वनवाक्यमप्युदितवान् श्रेष्ठद्रुशैलं गतः ॥१४८॥ इति श्रीखृष्टसं
गीतायां मोक्षमाहात्म्यपर्व्वणि ( मोसिरचितपंचशास्त्राद्द्वाविज्ञोतानामेकचत्वारिंशान्मत्थायस्य
षड्विंशसर्गान्मार्कस्य चतुर्द्दशसर्गाल्लूकस्य द्वाविंशसर्गाद्योहन्नेस्त्रयोदशचतुर्द्दशसर्गाभ्यां पौलस्य

कुरिन्थीयमण्डलीं प्रति प्रथमलिपेरेकादशसर्गाद्वोद्धृतः) पुण्यसप्ताहवृहस्पतिवारपूर्वचरित्र
सूचकः सद्भोजनाशीर्वादो नाम सप्तमो ऽध्यायः ॥

गुरुरुवाच ॥ तथा रीत्यनुसारेण वरशिष्यान्वितः प्रभुः । यिरूषलेमतः श्रेष्ठवृक्षाद्र्यध्वनि नि
र्ययौ ॥१॥ निर्याने चरमे ऽस्मिंस्तु स एकादश तान् निशि । स्वदुष्टसखहीनान् वै चलतो ऽभ्य
ब्रवीदिदं ॥२॥ श्रीयेषूरुवाच ॥ मद्धेतोर्निखिला यूयं स्यातास्यां पातिना निशि । प्रवक्तृ ८५
जकरीयस्य प्रत्नवाक्यानुसारतः ॥३॥ अयि खड्ग निहन्तुमाशु मत्सखमुत्तिष्ठ ममावि
पालकं । निहते त्ववि पालके मया भवितारो ऽप्यवयः पृथक् पृथक् ॥४॥ इत्थं सेनेश
विभुना यथोक्तं पुण्यपुस्तके । हते मय्यखिला यूयं छिन्नभिन्ना भविष्यथ ॥५॥ किंत्वहं
मरणस्थानाद्यदा स्यां पुनरुत्थितः । तदा वो ऽग्रे गमिष्यामि गलीलां पालको ह्यहं ॥६॥

गुरूरुवाच ॥ एवं भव्यवचः श्रुत्वा स्ववृन्दविषयं स्फुटं । प्रस्तराभिधसीमोनो ऽवादीदति कुतूहलात् ॥७॥ प्रस्तर उवाच ॥ त्वद्धेतोर्निखिला एव यद्यपि स्युर्निपातिताः । न तथैव भविष्यामि पातितो ऽहं कदाचन ॥८॥ श्रीयेषूरुवाच ॥ यावन्नास्वीकृतिं त्रिर्मे कुर्य्यास्तावद्धि रद्य न । निशि स्यात्ताम्रचूडस्य वागिति त्वां ब्रवीम्यृतं ॥९॥ प्रस्तर उवाच ॥ यद्यप्यावश्यकं मे स्यान्मर्तुमेव त्वया सह । तदाप्यस्वीकृतिं ते ऽहं न करिष्ये कदाचन ॥१०॥ ८६

गुरूरुवाच ॥ इत्युवादात्मदौर्बल्याज्ज्ञानादतिकुतूहली । सीमोनस्तद्वदपि च शेषाः शिष्या दशाब्रुवन् ॥ ११ ॥ अचिरात्पूरणीयं तु त्यजन् भव्यवचो ऽखिलं । प्रभुर्नूत्नोपदेशं तान स्थिरानिममब्रवीत् ॥ १२ ॥ श्रीयेषूरुवाच ॥ द्राक्षाद्रुमो ऽहं किल सत्यरूपः पिता तु मे तत्कृषको ऽस्ति नूनं । मयि स्थिता यापि च निष्फला स्याच्छाखा छिनत्त्येव स तां समन्तात् ॥

१३॥ मत्स्था तु शाखा फलदा भवेद्या पुनाति तां सोऽधिकशस्यदत्यै । यूयं तु मत्प्रोदित
वाक्यतो वो भूता इदानीमपि पूतरूपाः ॥१४॥ मयि ध्रुवं तिष्ठत खल्वहं च तिष्ठानि युष्मासु
यथा हि शाखा । स्वयं द्रुहीना फलदैव न स्यात् तथैव यूयं न मयि स्थिताश्चेत् ॥१५॥ द्राक्षा
द्रुमोऽहं हि शिफाश्च यूयं यो मत्स्थितः स्याद्पि यत्स्थितोऽहं । फलं स दाता बहु मां विना
हि यूयं न कर्तुं किमपि क्षमाः स्थ ॥१६॥ यो यो न तिष्ठेन्मयि सोऽपहीनश्छिन्ना शिफेवाप्यव ८७
शुष्क इव । संचित्य ताश्चापि नराः किलाग्नौ प्रणिःक्षिपन्ति प्रदहन्ति चापि ॥१७॥ तिष्ठत
यूयं मयि चेन्मदीयंवाक्यं च चेद्वोऽन्तर इव तिष्ठेत् । यद्यत्तदा कांक्षथ यूयमेतत्संप्रार्थ्य
खल्वाप्स्यथ तुष्टचित्ताः ॥१८॥ भवेत भूयिष्ठफलप्रदा यत्तेनैव तेजो लभते पिता मे । तथैव
चापि स्थिरसत्यताया यूयं मदीया हि भवेत शिष्याः ॥१९॥ अस्निह्यदार्य्यस्तु पिता यथा मां

तथैव वो ऽस्निह्यमपीशजो ऽहं । अतो ऽपि सर्वाधिकयत्नतो ऽपि यूयं मम प्रेम्ण्यवतिष्ठतैवं ॥
२०॥ रक्षेत यूयं यदि मामकाज्ञा मत्प्रेम्ण्यवस्थास्यथ तर्हि सम्यक् । यथाहमात्मीयपितुः
किलाज्ञाः सुरक्ष्य तत्प्रेम्ण्यवतिष्ठ एवं ॥२१॥ मदीयहर्षस्य तु सद्गुणस्य युष्मद्धृदन्तःस्थितये
सदैव । युष्मत्सदानन्दसुपूर्तये चाप्येतानि वाक्यान्यहमब्रुवं वः ॥२२॥ यथा हि वो ऽस्निह्य
महं तथान्यो ऽन्यं स्निह्यतेत्थं मम संस्थिताज्ञा । न्यस्येत्प्रियार्थे निजजीवनं चेन्नरो ऽधिकं प्रेम ८८
न विद्यते ऽस्मात् ॥२३॥ यूयं प्रिया मे यदि यन्मया व आज्ञातमेवाखिलमाचरेत । नाख्यामि
दासांस्त्वित एव वो ऽहं स्वनाथकार्य्यं न हि वेत्ति दासः ॥२४॥ प्रियांस्तु युष्मानित एव
सम्यगाख्यामि यस्मादहमात्मपित्रा । यच्छ्रावितं तत्सकलं समन्तादज्ञापयं वो ऽतिरहस्य
वादी ॥२५॥ यूयं तु मां नावृणुतैव किंतु युष्मान् कृपातो ऽवृणवं किलाहं । समार्पयं चैव यतः

प्रगत्य फलं प्रदध्यात बहु स्थिरं च ॥२६॥ ततोऽपि यद्यत्पितरं मदीयनाम्नार्थयेतैव स
तत्प्रदद्यात् । समर्प्य वस्तत्कृत एव यत्नात्परस्परं स्नेहितुमादिशामि ॥२७॥ चेत्संसृति
र्द्रुह्यति वस्तथा साद्रुह्यत्पुरा मामिति वित्थ सम्यक् । यूयं तु चेत्संसृतिजा भवेतास्नेहि
ष्यदेव स्वजनांस्तदा सा ॥२८॥ यस्मात्तु नो संसृतिजाः स्थ किंतु मया वृताः संसृतिमध्यतो
ऽतः । सा वः सदा द्रुह्यति मद्वचस्तु स्मार्य्यं न दासोऽर्य्यतरोऽस्ति नाथात् ॥२९॥ इत्यु ८९
क्तितो मां समताडयंश्चेत्तथैव ते वः किल ताडयेयुः । चेन्मे त्वरक्षन्नुपदेशमार्य्यं रक्षेयुरेवं किल
युष्मदीयं ॥३०॥ युष्मांस्त्विदं कुर्य्युरमी समस्तं मन्नामहेतोर्यत एव मां यः । संसार
मध्येऽनुददीश्वरस्तं सम्यङ्न जानन्ति तमोविमग्नाः ॥३१॥ चेन्नाहमभ्येत्य समब्रवं तान् न
स्यादघं तेष्वधुना तु नास्ति । तद्वारणोपाय इतो यतो यो द्रोह्यस्ति मे द्रोह्यपि मत्पितुः सः ॥

३२॥ क्रियाः किलान्येन न केनचित्प्राक्कृता अहं तेषु न चेदकार्षं । न स्यादघं तेष्वधुना तु
दृष्ट्वाद्रुह्यन्नमी मां पितरं च मेऽपि ॥३३॥ द्रुह्यन्ति ते मां तु मृषेति तेषां सद्ग्रन्थमध्ये
लिखितोक्तिपूर्त्यै । तत्सर्वमासीदत एव यं व आदेशकं स्वीयपितुः प्रणीतस्ये ॥३४॥ स वै
सदात्मा पितृनिःसृतोऽतः सत्यः प्रसाक्षी विषये मम स्यात् । यूयं तथा साक्षिण एव भव्या
मया सहाद्यावधि संस्थिता हि ॥३५॥ अनपेक्षितदुःखौघाद्यूयं यन्नाप्नुयात तु । पातहेतुं १०
तदर्थेऽहमेतानि प्रवदामि वः ॥३६॥ युष्मान् हतमठीकुर्य्युरागामी समयोऽपि च । यदा
हन्तैव वो यः सोऽस्मिन् मन्येतेशसेवनं ॥३७॥ एवं कुर्य्युरमी यस्मान्न मां मत्पितरं न
वा । विदुः कालागतौ त्वेतत्स्मृत्यै वो वच्मि सांप्रतं ॥३८॥ न त्वेतान्यवदं पूर्वं युष्मा
भिर्हि सहस्थितः । किंतु प्रेरयितारं स्वमिदानीं गाम्यहं ध्रुवं ॥३९॥ न च युष्मासु मां

को ऽपि त्वं क्व गामीति पृच्छति । किंत्वेतत्कथनान्मे ऽतो दुःखव्याप्तहृदः स्थ नु ॥४०॥
सत्यं वच्मि तु वो ऽर्थे मद्गमनं सफलं भवेत् । यतो ऽहं चेन्न गच्छेयं नागाम्यादेशकः परः ॥
४१॥ गत्वाहं प्रेरयिष्ये तु तं वः स त्वेत्य संसृतिं । पापधर्म्मविचाराणां विषये विवदिष्यते ॥
४२॥ संसृतेः पापविषयो विवादस्तेन खल्वतः । करणीयो यतो मां ते न प्रत्यायन् कदा
चन ॥४३॥ सद्धर्म्मविषयः कार्य्यस्तद्विवादो ऽपि तेन तु । यतो ऽहं पितरं गामीतश्च मां न ९१
प्रपश्यथ ॥४४॥ विचारविषयः कार्य्यस्तद्विवादो ऽपि तेन च । यतः संसृतिनाथो ऽपि
विचारमधुनाप्नुते ॥४५॥ युष्मान्प्रत्यधिकं वाच्यं भूर्य्यपि त्ववशिष्यते । किंत्वियत्तां
प्रतं यूयं दृढं सोढुं न शक्नुथ ॥४६॥ सत्यात्मा तु यदागामी स सत्ये ऽप्यखिले तदा । युष्मा
न्नेष्यति न ह्यात्मवस्तूनि स वदिष्यति ॥४७॥ यद्यत्तु शृणुयात्तत्स ब्रूयाद्भव्यानि चापि वः ।

ज्ञापयिष्यति मे चापि माहात्म्यं दर्शयिष्यति । यस्मान्मदीयवस्तूनि लब्ध्वा ज्ञापयिता स
वः ॥४८॥ पितुर्यद्यदस्ति तन्मे ऽपि स्थितं सर्वमतो ऽब्रवं । स मदीयानि वस्तूनि लब्ध्वा वो
ज्ञापयेदिति ॥४९॥ अल्पे काले गते मां न पश्येताल्पे पुनर्गते । ईक्षिष्यध्वे तु यस्मात्स्वं
पितरं प्रति गाम्यहं ॥५०॥ गुरूरुवाच ॥ इत्थं संश्रुत्य शिष्याणां के ऽप्यवोचन् परस्परं ।
अल्पे काले गते मां न पश्येताल्पे पुनस्त्वितः ॥५१॥ ईक्षिष्यध्व इति प्रोक्तवचसो ऽर्थो ऽस्ति ९२
कीदृशः । यस्मात्स्वं पितरं वाहं गामीत्युक्त्यर्थ एव कः ॥५२॥ एवमुक्त्वा मिथो ऽवोचन्नल्प
इत्यादिकं वचः । न संबुध्यामहे सम्यगव्यक्तमिति विस्मिताः ॥५३॥ एतज्ज्ञानंस्तु सन्मोक्ता
तांश्च तत्प्रष्टुमिच्छुकान् । नोरवानपि संदृश्य तथा समवदत्पुनः ॥५४॥ श्रीयेषूरुवाच ॥
किं याचध्वे ऽर्थमुक्तेर्मे ऽल्पे काले मां न पश्यथ । पुनरल्पे गते चैवेक्षिष्यध्वे तर्हि मामिति ॥

५५॥ सत्यं वः प्रवदाम्येतदचिरात्साश्रुलोचनाः । विलपिष्यथ यूयं हि हर्षिष्यति तु सं
सृतिः ॥५६॥ अल्पकाले तदा दुःखमग्नाः स्थास्यथ मत्कृते । किंतु तस्मात्परे युष्मद्दुःखं
हर्षीभविष्यति ॥५७॥ प्रसूतिकाले समुपस्थिते हि स्त्री दुःखमाप्नोति शिशौ तु जाते । पूर्वा
र्त्तिनं विस्मरति प्रहर्षात्संसारमध्ये नरजन्महेतोः ॥५८॥ तथैव यूयं ह्यधुनाप्नुथार्त्तिं द्रक्ष्यामि
भूयस्त्वहमत्र युष्मान् । तदा प्रहर्षिष्यति हृद्व एव हर्षं न तं वोऽपहरेतु कोऽपि ॥५९॥ मां ९३
खल्वमुष्मिन् समये न किंचिद्याचेत यूयं पितरं तु यद्यत् । याचेत नाम्ना मम हीनशङ्का
स्तदेव युष्मभ्यमितः स दाता ॥६०॥ पूर्वं किलैतत्समयान्न किंचिन्नाम्ना ममायाचत विश्व
नाथं । इतस्तथा याचत तु प्रगाढं नित्यं च संप्राप्स्यथ हर्षपूर्त्यै ॥६१॥ इयन्ति गूढोक्तिभि
रेव युष्मान् समब्रवं काल उपस्थितस्तु । ब्रूयां न गूढैः किल वो यदाहं स्पष्टं वदेयं विषये

पितुस्तु ॥६२॥ तदार्थयेध्वं हि मदीयनाम्नाभीष्टं समस्तं पितरं त्वहं स्वं । युष्मत्कृते
प्रार्थयितास्मि तर्हीत्येतद्वचो नास्त्यधुना मदीयं ॥६३॥ पिता स्वयं स्निह्यति वो हि सम्यग्
यूयं यतोऽस्निह्यत मामिदानीं । तथापि च व्यश्वसताहमीशाद्विनिःसृतोऽवातरमत्र चेति ॥
६४॥ विनिःसृतोऽहं पितृतो हि पूर्व्वं संसारमध्येऽपि ततोऽवतीर्णः । पुनश्च संसारमहं
विवर्ज्जन् गच्छामि नूनं पितृसंनिधाने ॥६५॥ गुरुरुवाच ॥ एवमाकर्ण्य सन्देहहरमी ९४
शात्मजेन तत् । अभ्युक्तमवतीर्णेन वचः प्रत्यूचुरेव ते ॥६६॥ श्रीयेषुशिष्या ऊचुः ॥ व्यक्तं
त्वयाहो अधुना न गूढमुक्तं ततः सर्व्वविदं वयं त्वां । विघ्नो न चावश्यकमन्यदेव प्रष्टुं त्वमी
शोत्थ इति प्रसिद्धं ॥६७॥ श्रीयेषुरुवाच ॥ प्रतीथ किं मामधुना किलाहो कालः समीपः स
मुपस्थितश्च । यस्मिन् विशङ्कापरिपूर्णचित्ताः स्वस्वालयेऽभ्येत्य पृथक् पृथग्वै ॥६८॥ मामात्म

कोयं प्रभुमेव यूयमेकाकिनं त्यक्ष्यथ शत्रुहस्ते । नैकाक्यतोऽहं तु भवेयमत्र यतः पिता मेऽपि मयास्ति सार्द्धं ॥६९॥ एतन्मयोक्तं मयि सन्धिलब्ध्यै युष्माकमर्त्तिस्त्विह संसृतौ स्यात् । यूयं त्वहो निर्भयमानसाः स्त मया जिता संसृतिरेव यस्मात् ॥७०॥ गुरुरुवाच ॥ इत्थमुक्त्वा निजावीन् स घात्य ईशसखो महान् । पाङ्को ऽथोत्थिताक्षः स्वःस्थितं पितरमार्थयत् ॥७१॥ श्रीयेषूरुवाच ॥ कालोऽधुना पितरुपस्थित आत्मपुत्रमाहात्म्य ९५ मोक्षय स चेक्षयतु त्वदीयं । न्यास्यो यतोऽखिलजनोपरि शक्तिमस्मिंस्त्वद्दत्तनृभ्य इह दातुमनन्तजीवं ॥७२॥ त्वामद्वितीयमृतमीश्वरमूर्द्धवासं त्वत्प्रेरितं च भुवने किल ख्रीष्टयेषूं । यद्विद्युरेव मनुजा अविभिन्नबुद्ध्या तन्मात्रसंस्थमिह जीवनमस्त्यनन्तं ॥७३॥ माहात्म्यदर्शनमहं तव भुव्यकार्ष त्वन्न्यस्तमेव मयि कर्म्म समाप्नवं च । यन्मे त्वया सह

जगत्स्थितितोऽप्यभूत्प्राक् तेजः पितस्तदधुना नय मे त्वदग्रे ॥७४॥ दत्तांस्त्वया वरद
संसृतिमध्यतो नॄंस्त्वन्नाम खल्वहमदर्शयमत्र संस्थः । आसन् हि ते तव नरा अददाश्च तान्मे
वाक्यं त्वदीयमपि ते शरला ररक्षुः ॥७५॥ यन्मे त्वयाखिलमदायि तदुत्थितं त्वदित्थं प्र
जज्ञुरपि ते ददिथैव यन्मे । तेभ्यो वचस्तददुदां मम चोदयं त्वज्जज्ञुस्त्वयाहमपि नुन्न इति
प्रतीयुः ॥७६॥ नाहं हि संसृतिकृते किल ये त्वया मेऽदीयन्त तद्गणकृते त्वधुनार्थयामि । ९६
ते तावका हि सकला मम येऽपि ते ते ये ते तु तेऽपि मम तेषु च तेज आप्स्ये ॥७७॥ नेतो
ऽस्मि संसृतितलेऽहमिमे तु तत्स्थास्त्वत्संनिधौ मयि गतेऽप्यत आत्मदत्तान् । तान् मेऽव पुण्य
पितरेव निजार्य्यनाम्नाथावामिवैकमनसस्त इतो भवेयुः ॥७८॥ यावत्स्थितोऽहमिह तैः
सह संसृतौ तांस्तावत्सदावमपि ते पितरार्य्य नाम्ना । दत्तांस्त्वया हि समपालयमेषु चापि

नैको विनापचयपुत्रमिहापचिचे ॥७९॥ सद्ग्रन्थपूरक उतापचयस्त्वमुष्य शेषाखिलेष्विह तु
मामकहर्षपूर्त्यै । एतानि तद्विषय एव हि संसृतिस्थोऽहं संवदामि तव संनिकटे गमि
ष्यन् ॥८०॥ वाक्यं त्वदीयमददामहमेव तेभ्योऽद्रुह्यनतोऽपि च सदा किल संसृतिस्तान् ।
यस्माद्यथाहमिह संसृतिभूर्न विद्ये तेऽप्यत्र संसृतिभुवो न तथैव सन्ति ॥८१॥ सम्यक्कु
संसृतितलादपहर्तुमेतानेवं दृढं पितरहं किल नार्थयामि । किंत्वत्रसंस्थितसमस्तदुरात्म ९७
तायाः शक्तेरिमानवितुमेव विभोऽर्थये त्वां ॥८२॥ एते न संसृतिभुवः किल संस्थिता हि
यद्वत्कदाचन न संसृतिभूः स्थितोऽहं । शक्त्यैव तानत इहात्मकसत्यतायाः पुण्यीकुरुष्व
तव वाग्घ्यपि सत्यरूपा ॥८३॥ मामेव यद्वदनुदस्त्विह संसृतौ त्वं तद्वन्नुदाम्यहमि
मानधुनैव तस्यां । आत्मानमेव विमलीप्रकरोमि तेभ्योऽतस्ते यदप्यृततया विमली

०

क्रियेरन् ॥८४॥ एषां कृते तु न हि केवलमर्थये ऽहमेषां तु सर्व्वपृथिवीतलविस्तृतेन ।
वाक्येन ये मयि तथा किल विश्वसेयुस्तत्सर्व्वसंचयकृते ऽर्थय एवमीश ॥ ८५ ॥ यत्ते
ऽखिला अपि तदैकमनःस्थिताः स्युस्त्वं हे पितर्मयि यथा त्वयि चाहमेव । एकस्तथा तद
खिलव्रज आवयोः स्यात्त्वत्प्रेरितत्वमपि मे च जगत्प्रतीयात् ॥८६॥ तेजो यद्ददिथार्य्य मे
तद्ददां तेभ्यो ऽत आवां यथैकात्मानौ हि तथैककाः स्युरपि ते त्वं मय्यहं तेषु च । सर्व्वैकत्वमु ९८
सिद्धये ऽथ च जगत्त्वत्प्रेरितत्वं मम त्वत्स्निग्धत्वमतो ममेव तु तथा तेषां प्रविद्याद्ध्रुवं ॥८७॥ यान्
मह्यं पितरार्य्य नॄंस्त्वमददास्ते मत्स्थितेरालये तिष्ठेयुस्तु मया सहेति किल मे पूर्णक्रियस्य
स्पृहा । पश्येयुर्मम चैव तर्हि सकलास्त्वद्दत्ततेजो ऽयिमं त्वं सिस्नेहिथ मां यतो हि जगतः
प्राक् पूर्व्वसृष्टेरपि ॥८८॥ धर्म्मात्मन्पितरार्य्य नेह समवेत्त्वां संसृतिः क्वाप्युताहं तु त्वाम

विदं तथा विदुरिमे त्वत्प्रेरितत्वं च मे । तानज्ञापयमेव नाम तव सत्तज्ज्ञापयिष्यामि चा तस्त्वत्प्रेम यदस्ति मय्यपि तदेष्वेवास्त्वहं चैष्वपि ॥८९॥ इति श्रीखृष्टसंगीतायां मोक्तृ माहात्म्यपर्व्वणि (द्वाविंशीतानां पंचत्रिंशोनसप्ततितमाभ्यां जकरीयभव्यवाक्यानां त्रयोदशसर्गा न्मत्थायस्य षड्विंशसर्गान्मार्कस्य चतुर्द्दशसर्गाद्योहन्नेः पंचदशषोडशसप्तदशसर्गेभ्यश्चोद्धृतः) पुण्य सप्ताहवृहस्पतिवारोत्तरचरित्रसूचको महामध्यस्थचरमोपदेशो नामाष्टमो ऽध्यायः॥ ९९

गुरुरुवाच॥ एतदीशवचस्तावत् सोपदेशार्थनात्मकं । समाप्येशात्मजः स्वीयगणाग्र्यप्रेम कारकः ॥१॥ अद्र्युपत्यकसंस्थां तां किद्रोणसरितं तदा । उपस्थायातरदथ तैलवृक्षस्थले ऽविशत् ॥२॥ तद्यद्यूद्यैस्तु संज्ञातं गेत्सेमानं मुहुर्मुहुः । पूर्व्वं तेन सशिष्येण विरामार्थे ऽध्य गम्यत ॥३॥ पूर्णेन्दुभासितायां तु रात्रावस्यां वृहस्पतेः । तदुद्याने प्रविश्यैतत्स्वशिष्या

नभ्युवाच सः ॥४॥ श्रीयेषूरुवाच ॥ अत्र यूयं समासध्वमष्टौ यावदहं स्थले । शिष्यत्रया
न्वितः किंचिद्दूरे गाम्यर्थनाकृते ॥५॥ सकलास्तु तथा यूयं यत्नात्प्रार्थयतैव च । यन्नैतो दु
ष्परीक्षायां प्रविशेताघकृत्यपि ॥६॥ गुरुरुवाच ॥ इत्युक्त्वा स ससीमोनौ निर्ज्जने जिबिदीयजौ ।
नयन् भवितुमारेभे व्याकुलत्वातिखिन्नहृत् ॥७॥ तत्रयं चोच आमृत्यप्यतिदुःखेन मे मनः ।
व्याप्तं यूयमतः स्थित्वात्र जागृत मया सह ॥८॥ इत्युक्त्वा स तदग्रे ऽश्मक्षेपमित्यन्तरे गतः । १००
दण्डवत्प्रणिपत्योर्व्यां प्रार्थयन्निदमब्रवीत् ॥९॥ श्रीयेषूरुवाच ॥ त्वया शक्यानि तिष्ठन्ति
पितरार्य्याखिलान्यतः । कटुपानस्य पात्रं यदुग्रार्त्तिसहनात्मनः ॥१०॥ प्रस्तुतं तदपैत्वेव
शक्तं यदि मदन्तिकात् । किंत्विच्छानुक्रमान्मे न भूयात्तव तु हे पितः ॥११॥ गुरुरुवाच ॥
एवं प्रार्थयता तेनैक्ष्यत स्वर्गात्समागतः । ईशदूतो दृढीकर्तुं तमत्युग्रार्त्यपेक्षणे ॥१२॥ स तु

व्याप्तो व्यथोर्म्म्यैवार्थयद्दृढतरं तदा । तत्स्वेदो ऽभून्वसृक्स्थूलविन्दुवत्पतितो भुवि ॥१३॥
प्रार्थनात्तु समुत्थाय पुनः शिष्यत्रयं गतः । दुःखभारेण सुप्तांस्तान् प्राप्य प्रस्तरमब्रवीत् ॥१४॥
श्रीयेषूरुवाच ॥ त्वं किं स्वपिषि सीमोन ससखस्त्वं मया सह । किं तथैकमुहूर्त्तेऽपि प्र
जागरितुमक्षमः ॥१५॥ परीक्षावेशरोधार्थं जागृतार्थयतापि च । उद्यतो वः किलात्मास्ति
शरीरं त्वतिदुर्ब्बलं ॥१६॥ गुरुरुवाच ॥ मृदुनिन्दामिमां प्रोच्य पापहर्त्ता दयार्णवः । स १०१
ततोऽपैत्य भूयोऽपि प्रार्थयद् व्यथनावृतः ॥१७॥ श्रीयेषूरुवाच ॥ मत्पितश्चेदिदं पात्रं मत्तो
ऽपैतुं न शक्नुयात् । आवश्यं स्यात्तु तत्पानं भवत्विच्छा तदा तव ॥१८॥ गुरुरुवाच ॥ ततो
द्वितीयवारे तु शिष्यानभिगतः प्रभुः । सर्व्वान्सुप्तानवापैवं निद्रापीडितलोचनान् ॥१९॥
अतस्त्यक्त्वा स तान्भूयः पूर्व्ववद्वाग्भिरार्थयत् । पश्चात्तृतीयवारे स्वान् शिष्यानभ्येत्य सो

ऽवदत् ॥२०॥ श्रीयेषूरुवाच ॥ इतः स्वपित विश्रान्त्यै हितजागरणस्य हि । गतः कालो
ऽधुना चोग्रमुहूर्तः समुपस्थितः ॥२१॥ अधुना नरपुत्रो वै न्यस्यते पापिनां करे । उत्तिष्ठत
प्रयामैव मन्निधातान्तिके ऽस्ति हि ॥२२॥ गुरुरुवाच ॥ इदं ब्रुवति खृष्टे ऽहो इष्कार्य्योत्या
स्य आगतः । यहूदः खड्गदण्डोल्कादीपधार्य्योघसंवृतः ॥२३॥ तत्सो ऽपचयपुत्रो हि तैलोद्यानम
वेद्यतः । तत्र द्वादशमध्ये सो ऽन्वायाद्येषूं मुहुर्मुहुः ॥२४॥ अतः पत्निगणं प्राप्य फरीष्यश्रेष्ठ १०२
यज्वतः । प्रभुभोजनतः पश्चात्तं ग्रहीतुं तदा ययौ ॥२५॥ तदुद्यानं विशंश्चापि मध्यरात्रे ददौ
शठः । चिह्नं पत्निगणायैतत्स स्वनाथगृहीतये ॥२६॥ नरं यमहमभ्येत्य चुम्बेयं सो ऽस्ति
दुण्ढितः । तं गृह्णीत दृढं यूयं तदापनयतैव च ॥२७॥ अतः कैश्चित्प्रधानैरप्यन्वितो ऽपे
क्षिते स्थले । यदा नाथमपश्यत्स्वं जागृतैकादशान्तरे ॥२८॥ तदा पत्निगणस्याग्रे ऽभ्येत्या

चुम्बत्प्रभुं क्षणात् । गुरो गुरो नमस्तुभ्यमित्यादरवचो वदन् ॥२९॥ धूर्त्तं प्रत्यवदत्तं तु
येषूः कस्मा उपस्थितः । चुम्बेन नरपुत्रं त्वं यहूद निदधासि किं ॥३०॥ शिष्यास्तूत्था
पितास्तस्य वाग्भिः पत्तिरवेण च । भव्यं कर्म्मानुभूयोचुः किं हन्यामासिना प्रभो ॥३१॥
स त्वार्य्यः सर्व्वभव्यज्ञोऽग्ये गत्वोवाच पत्तिकान् । कं ढुण्ढथेत्यथोचुस्ते येषूं वै नशरेतकं ॥३२॥
ततः सोऽस्म्यहमेवेति तानार्य्यै वदति प्रभौ । सयहूदा ययुः पश्चात्ते पेतुश्चापि भूतले ॥ १०३
३३॥ ततः पुनरपृच्छत्तान् प्रभुः कं ढुण्ढथेत्यथ । नशरेतीययेषूमित्युत्तरं प्राप्य सोऽब्रवीत् ॥
३४॥ श्रीयेषूरुवाच ॥ सोऽहमस्मीति वः प्रोक्तमतश्चेद् ढुण्ढथैव मां । तदैतानननुमन्यध्वं गन्तु
मेकादश स्वयं ॥३५॥ गुरुरुवाच ॥ इत्थं स्वीयप्रियार्थं सोऽब्रवीदात्मोक्तिपूर्त्तये । मह्यं
त्वद्दत्तनृष्वेको नापचिच्ये कदाचन ॥३६॥ प्रस्तरस्त्वसिमुत्तुल्य मल्काख्यं श्रेष्ठयज्वनः ।

भृत्यमाक्रम्य वेगात्तत्कर्णं चिच्छेद दक्षिणं ॥३७॥ तत्कुतूहलतस्त्वार्य्यो ऽविपालो नरमोचकः ।
असन्तुष्ट इदं वाक्यं प्रावदद्भर्त्सनात्मकं ॥३८॥ श्रीयेषूरुवाच ॥ सहध्वं यूयमेतावत् कोषे न्य
स्यो ह्यसिर्निजे । ये ऽसिं दधति ते सर्वे ऽसिना नंक्ष्यन्त्यपि ध्रुवं ॥३९॥ पानपात्रं पिता
यन्मे ददौ कद्वपि तत् स्वयं । कथं नाहं प्रपास्यामि ह्यागतौयमुहूर्त्तकः ॥४०॥ अहं प्रार्थ
यितुं शक्तो ऽधुनापि पितरं निजं । तस्माल्लब्धुं च दूतानां द्वादशाधिचमूरपि ॥४१॥ इत्थं १०४
न बुध्यसे त्वं किं चेत्त्वियद्रक्षणं मया । प्राप्येत कथमेषां स्याच्छास्त्रोक्तानां प्रपूरणं ॥४२॥
गुरूरूवाच ॥ इत्युक्त्वा सन्नृपः कर्णं स्पृष्ट्वा मल्कस्य तत्क्षणे । सुस्थीचक्रे ऽथ तद्वृन्दप्रधानानेत
दब्रवीत् ॥४३॥ श्रीयेषूरुवाव ॥ किं दस्युमिव मां यूयं खड्गदण्डादिधारिणः । आक्रमध्वे
गृहीत्यर्थं यज्वाध्यक्षादयो ऽप्युत ॥४४॥ प्रत्यहं सह युष्माभिर्यदाहं मन्दिरे स्थितः ।

उपदेष्टा तदा हस्तान्नार्पयध्वं ममोपरि ॥४५॥ किंत्वयं वो मुहूर्त्तो ऽस्ति तमोविक्रम एव च ।
सद्ग्रन्थभव्यवाक्यानां पूरणायेदमस्ति हि ॥४६॥ गुरूरुवाच ॥ ततस्ते तं गृहीत्वार्य्यमबध्नन्न
नयन्त च । शिष्याः सर्व्वे तु तद्दृष्ट्वा भयाक्रान्ताः पलायिताः ॥४७॥ रात्रि वस्त्रं युवा
कश्चित्केवलं परिधाय तु । तमन्वायाद्यठाज्ज्ञातएवहेतुबुभुत्सया ॥४८॥ पत्तिभिश्च धृतो
यस्मात्स येभ्यो ऽनुमितो ऽनुगः । वस्त्रं संत्यज्य तद्धस्तेष्वद्रवन्नग्न आकुलः ॥४९॥ तद्व १०५
त्खल्वविपालकं विभुसखं हन्तुं बलेनोत्थिते तत्खड्गे परिपूर्त्तये ऽग्रलिखितग्रन्थोदितानां
गिरां । भूता एव पृथक् पृथक् तदवयः सर्व्वे जहुः स्वप्रभुं बद्धं शत्रुगणैर्न्निजे च नगरे
नीतं नगोपत्यकात् ॥ ५० ॥ इति श्रीखृष्टसंगीतायां मोक्तृमाहात्म्यपर्व्वणि (जकरीयादि
भव्यवाक्येभ्यो मत्थायस्य षड्विंशसर्गान्मार्कस्य चतुर्द्दशसर्गाल्लूकस्य द्वाविंशसर्गाद्योहन्नेरष्टा

दशसर्गाद्वोद्धृतः) पुण्यसप्ताहवृहस्पतिशुक्रवारमध्यरात्रिचरित्रसूचक उद्यानीयव्यथनं नाम नवमोऽध्यायः

शिष्य उवाच ॥ तमोविक्रम एवासौ निधानं पापिनां करे । ईशसूनोर्व्यथासोढुर्हीनस्याप्य नुगैर्निजैः ॥१॥ घोररात्रिचरित्रं तत् पश्चादेशोपदेशनात् । गुरो मानुषदौरात्म्यकम्पिते
न मया श्रुतं ॥२॥ वरं सहनपात्रं यदपैतुं व्याकुलस्तदा । ऐच्छच्छान्तो महात्मापि प्रभु १०६
स्तज्ज्ञातुमिष्यते ॥३॥ गुरुरुवाच ॥ शिष्य यत्सहनार्थेऽपीशपुत्रोऽवातरद्भुवि । यत्पूर्त्ति विषये ऽद्रौ मोस्थलीयाभ्यां सहावदत् ॥४॥ यन्मुदा प्रावदच्छिष्यानार्य्याचार्य्यो मुहुर्मुहुः । रुन्धन्तं चापि तच्छ्रेष्ठमनिन्दत्कठिनोक्तिभिः ॥५॥ यन्मुहूर्त्तागतेः पूर्वं प्रियान् खिन्नान सान्त्वयत् । तद्दुःखं कदापि क्वापि निराकर्त्तुं स नैहत ॥६॥ तद्यदि स्यात् पिता तस्मै द्राद

शाधिचमूरपि । स्वर्दूतानामनोत्स्यनन्द्वारणार्थे तदारितः ॥७॥ तच्छ्रुत्वोऽपि स पात्रं तु
पितृदत्तं तदाददौ । स्वयं पातुं द्विषां हस्तेष्ववविवत्स इवारवः ॥८॥ अस्वाद्यमपि केनापि पात्रं
मर्त्येन तं विना । भूमिमण्डलसर्व्वाघोऽतितिक्तफलमिश्रितं ॥९॥ यद्दृष्ट्यैव मनुष्यत्ववे
गोत्पन्नार्थिना ह्यसौ । पात्रं पितरपैत्वेतन्मत्तः शक्तं नु चेदिति ॥१०॥ तत्पित्रिच्छाविनीतः
स नृदयान्याप्तहृत्स्वयं । आददौ नः कृते बद्धोऽघबद्धानां विमुक्तिदः ॥११॥ शिष्य उवाच ॥ १०७
मन्यमानाय तन्मह्यं कथयाचार्य्य सांप्रतं । घोररात्रौ स बद्धोऽस्यां किं सेहेऽधिकमार्य्यराट् ॥
१२॥ गुरुरुवाच ॥ बद्धः सोऽसिधरैर्नीतः खृष्टो येन पथा पुरा । चतुर्पत्त्रेऽचलत्पुर्य्यां त्राहो
शेतिस्तवावृतः ॥१३॥ विष्ट्वा यिरूषलेमे तु तं निन्युः खड्गधारिणः । हन्नस्य भवने पूर्व्वं
तन्मतस्याग्र्ययज्वनः ॥१४॥ स तु तं स्वीयजामातुः कायफस्यालयेऽनुदत् । तद्वर्षे तिष्ठतः

श्रेष्ठयाजकस्यादृते पदे ॥१५॥ येनैवाखिलराष्ट्रार्थे मृत्युरेकस्य नो हितः। इत्युक्तः प्राक्
परामर्शी यज्वसंसदि न स्वयं ॥१६॥ प्रस्तरस्तु तदान्वायाद्दूरतः खड्गधृग्गणं। अन्येन सह
शिष्येणाकुलः कर्म्मान्तमीक्षितुं ॥१७॥ यदा हन्नेन नुन्नश्च बद्धः कायफसद्मनि। खृष्टो ऽनायि
परे तौ द्वौ तत्सद्मद्वार्य्युपस्थितौ ॥१८॥ कायफेन तु शिष्यो ऽसौ ज्ञातो ऽतः पत्निकाननु।
शालायां प्राविशत् किंतु प्रस्तरस्तद्बहिःस्थितः ॥१९॥ ततो ऽप्यभ्यन्तरे येष्वा सह शिष्यः प्रवि १०८
श्य सः। महायज्वगृहे तस्य ज्ञातिर्द्वारं ययौ पुनः ॥२०॥ अथ दौवारिकाज्ञातः प्रस्तरं सो
ऽप्यवेशयत्। वेशयन्ती तु सा कन्यालोक्यामुमिदमब्रवीत् ॥२१॥ किं नरस्य त्वमेतस्य शिष्यो
* नासीत्यथो भयात्। तां प्रत्युवाच सीमोनस्तच्छिष्यो नास्मि खल्विति ॥२२॥ श्रेष्ठयाजक
भृत्यास्तु परिचाराश्च ते ऽनलं। अङ्गारैर्ज्वालयामासुर्निशाशीतत्वनुत्तये ॥२३॥ तन्मध्ये प्र

स्तरश्चापि स्थितो द्वारि प्रवेशितः । उदतापयदात्मानं कर्म्मशेषदिदृक्षया ॥२४॥ अभ्यन्तरे
तु गेहस्य कायफस्यैव संनिधौ । स्थिते येष्वि निशामध्ये दुर्विचारसमाप्तये ॥२५॥ तन्महा
यज्वनाहूतास्तत्रान्ये श्रेष्ठयाजकाः । ज्येष्ठा अध्यापकाश्चापि प्रधानाश्च सभां प्रति ॥२६॥
तेषां संचयतः पूर्व्वं स्वगृहे मध्यनिश्यपि । निदानं कायफो येषूदण्डस्यावाप्तुमिच्छुकः ॥२७॥
शिष्याणां विषये तस्य शिक्षायाश्चापि तं बहु । पृष्ट्वोत्तरमिदं प्राप्नोन्महायज्वा दुरात्मकः ॥ १०९
२८॥ श्रीयेषूरुवाच ॥ अहं व्यक्तं सदावोचं संसारं प्रति मन्दिरे । मठान्तर्वाखिला यत्र
समायान्ति यहूदिनः ॥२९॥ न किंचिदवदं गुप्तं कथं मां पृच्छसीह यैः । मद्वचो ऽश्रावि तानेव
पृच्छाहो ते विदन्ति तत् ॥३०॥ गुरुरुवाच ॥ इत्थं सद्गुरुणा प्रोक्ते ऽथ को ऽपि परिचारकः ।
तद्गण्डं स्वचपेटेनाघातयत्प्रवदन्निदं ॥३१॥ त्वं महायज्वने ऽप्येवं ददासि कथमुत्तर ।

इत्युक्तः कुजनं मोक्तार्य्यस्तं प्रत्यवदद्वचः ॥३२॥ अवदं चेदहं मन्दं तन्मन्दत्वस्य साक्षितां ।
देहि चेत्त्ववदं भद्रं कथमाहंसि मामिति ॥३३॥ ततस्तद्दण्डनीयत्वप्रमाणायैव संचिताः ।
यज्वानः साक्ष्यमन्वैच्छन् न तु प्राप्तुमशक्नुवन् ॥३४॥ तद्विपक्षेऽपि संस्थेषु भूरिष्वनृतसाक्षि
षु । समं नाभूद्वचस्तेषां मृत्यर्हांघप्रसिद्धये ॥३५॥ शेषे द्वावुत्थितौ मिथ्यासाक्षिणौ तु स
मूचतुः । येष्व एतस्य दुर्वाक्यं विभुमन्दिरमप्यहं ॥३६॥ भंक्त्वा भूयस्त्र्यहे नूनं रचयिष्यामि ११०
सर्वशः । इत्यावां शुश्रुव प्रोक्तं बहून्यनरगोचरे ॥३७॥ इत्युक्तेऽन्येऽब्रुवन्मिथ्यासाक्षिणः कर
निर्म्मितं । भंक्त्वेदं मन्दिरमहं पश्चादकरनिर्म्मितं ॥ ३८ ॥ तत्परं रचयिष्यामीत्युक्तमे
तेन शुश्रुम । एवं साक्ष्येऽपि तु प्राप्ते समत्वाभाव आबभौ ॥३९॥ तदोत्थाय महायज्वा
वदत् त्वं नोत्तरं कथं । ददास्येतान्यपि श्रुत्वा त्वयि प्रोक्तानि साक्षिभिः ॥४०॥ इत्युक्तो

ऽपि तु किंचिन्न प्रत्यवादीत्प्रभुस्ततः । साक्षित्रयसमत्वं यन्मृत्युदण्डाघसिद्धये ॥४१॥
मोसिशास्त्रत आवश्यं तन्नाप्स्वेच्छानुसारतः । किं कर्तव्यं परामर्शमारभन्त परस्परं ॥
४२॥ परामर्शान्तरे ते तु येषूं बद्धं समादिशन् । परिचारेषु शालायां वहिःस्थातुं सरक्षिकं ॥
४३॥ एतानि सहमाने तु प्रभौ वह्न्यन्तिके स्थितं । प्रस्तरं परिचारेषु कन्यालोक्याब्रवी
द्दृढं ॥४४॥ सह गालील्ययेष्वासीरित्युक्तः सर्वगोचरे ।सोऽवदत् त्वद्वचोऽहं न बुध्ये हे नारि ११।
खल्विति ॥४५॥ ततोऽस्मिन् प्रघणं भीतया गतेऽहो चरणायुधः । सस्वानान्या तु तं तत्रे
क्षित्वा दौवारिका किल ॥४६॥ सर्वानुपस्थितान् वक्तुमारेभे मानुषोऽप्यसौ ।नशरेतीययेष्वेव
सह नूनमभूदिति ॥४७॥ एवमाकर्ण्य सीमोनोऽस्वीकारं शपथान्वितं ।ऐरयत् तमहं येषूं न
जानामीत्यपि ब्रुवन् ॥४८॥ तत एकमुहूर्ते तु गतेऽन्यो दृढमब्रवीत् । तद्गणाश्रित एवैष

गालील्यो ह्यस्त्यसंशयं ॥४९॥ इत्यनुक्रमतश्चान्ये प्रस्तरं ये परिस्थिताः । ऊचुर्गालील्य एवा सीति भाषातो ऽपि ते स्फुटं ॥५०॥ अथ तच्छिन्नकर्णस्य मल्कस्यापि च बान्धवः । को ऽपि तत्र महायज्वभृत्यवर्गान्तरे स्थितः ॥५१॥ तं निरीक्ष्यावदत् किं न त्वां येष्वो ऽप्यनुगेष्वहं । उद्याने स्थितमेतस्यां निश्चयपश्यमिति स्फुटं ॥५२॥ एतत्सर्व्ववचोभिस्तु त्रासितः प्रस्तरस्तदा । येष्वज्ञानं दृढैर्वाक्यैः शपथैश्चाप्यवेदयत् ॥५३॥ वाङ्मध्ये त्वस्वनताम्रचूढो येषू ११२
स्वपि स्थितः। तदाभ्यर्णे परावृत्तः स्वशिष्यं लोलमैक्षत ॥५४॥ प्रस्तरश्चास्मरत्तस्य वचो याव न्न मे त्वया । त्रिः कार्य्यास्वीकृतिर्न्न द्विर्भवेत्कुक्कुटवागिति ॥५५॥ सद्यो निर्गत्य तु स्मृत्या तथा रोदीत्स निर्भरं । स्वनाथास्वीकृतेः पश्चात्तापखिन्नो ऽतिदुःखितः ॥५६॥ एतत्काले तु सम्रान्तः संचिताः कायफादयः । प्रधानाः स्वपरामर्शं समाप्यैव रहःकृतं ॥५७॥ वहिः

स्थानात्पुनर्येषूं संसदोऽन्ये समाह्वयन् । तन्मुखाच्च महायज्वा निदानं प्राप्तुमब्रवीत् ॥५८॥
कायफ उवाच ॥ जीवदीश्वरनाम्ना त्वां शपथेनादिशाम्यहं । वक्तुं नो यदि खृष्टः स्याः श्री
मद्विश्वेश्वरात्मजः ॥५९॥ गुरुरुवाच ॥ हिंस्रेणाप्यहरोणस्य पदस्थेनोदितं गुरुं । प्रश्नं
श्रुत्वेनमन्यैश्च प्रधानैः प्रभुरब्रवीत् ॥६०॥ श्रीयेषूरुवाच ॥ एतद्यद्यपि वो ब्रूयां न प्रत्येष्यथ
चेन्नूहं । पृच्छेयं नोत्तरं प्राप्स्ये युष्मभ्यो न च मोचनं ॥६१॥ इतो नृपुत्रस्तु महेशशक्तेर्दक्षे स ११२
मासीन इहापि तस्मात् । स्वर्लोकमेघेष्ववतीर्ण ईक्ष्यो युष्माभिरित्थं प्रवदाम्यहं वः ॥६२॥
गुरुरुवाच ॥ इदं श्रुत्वाखिला ऊचुरतस्त्वं किं विभोः सुतः । एवं पृष्टश्च सोऽवादीत् सत्यं
युष्माभिरुच्यते ॥६३॥ इत्याकर्ण्य महायज्वा सद्यः स्वीयांशुकान्यतः । विदीर्य्याखिल
यज्वादीन् प्रोवाचेदमुपस्थितान् ॥६४॥ कायफ उवाच ॥ अहो ईशमपावादीदसौ किं

साक्षिणां फलं । इतः श्रुतो ऽपवादो हि सर्वैः किं भवतां मतं ॥६५॥ गुरूवाच ॥ इति पृष्टाः समस्तास्ते मृत्युदण्डो ऽस्त्ययसाविति । प्रत्यूचुर्याजका ज्येष्ठाः प्रधानाश्चैस्त्रयेलिनां ॥६६॥ ततो ऽप्युपस्थिताः केचित्थुत्कर्तुं तन्मुखोपरि । समाच्छाद्य च तद्गण्ड माहन्तुं मुष्टिभिर्बलात् ॥ ६७॥ आरभन्ताथ वक्तुं च हे खृष्टेश्वरमन्त्रणं । देहि नो विज्ञ को ऽस्ति त्वां मुष्टिनाहतवानिति ॥६८॥ तद्वन्नानापवादोक्त्याभ्यक्रामन्कुक्कुरा इव । तं कायफगृहे बद्धं चपेटैश्चा ११४ हनन् शठाः ॥६९॥ तथा स मृतिदण्डार्हस्तदा प्रोक्तो ऽक्षदर्शिभिः । ईश्वरैकसुतः श्रेष्ठः स्वोद्यानकृषकैरपि ॥७०॥ तत्परे चोषसि स्वीयविचारविहितस्य ते । दण्डस्य पूर्तये बद्धं तं पीलातालये ऽनयन् ॥७१॥ तद्वद्दुष्टकृतघ्नशिष्यनिहितः क्रूरारिहस्ते प्रभुः शेषैस्तैश्च विहीन इव परितस्तेषां त्वपि श्रेयसा । अन्ते ऽस्वीकृत उग्रदुःखनिचयं लज्जापवादान्वितं

सेहे स्वीयगणप्रदत्तमथ तैरन्योद्भवेष्वर्पितः ॥७२॥ इति श्रीखृष्टसंगीतायां मोक्षमाहात्म्य
पर्व्वणि (मत्थायस्य षड्विंशसप्तविंशसर्गाभ्यां मार्कस्य चतुर्द्दशपंचदशसर्गाभ्यां लूकस्य द्वाविंश
त्रयोविंशसर्गाभ्यां योहन्नेरेकादशसर्गाच्चोद्धृतः) सच्छुक्रवारपूर्व्वचरित्रसूचको वरोपलनिरा
कृतिर्नाम दशमोऽध्यायः ॥

शिष्य उवाच ॥ विस्मृतैशक्रिया दुष्टा यं प्रधाना यहूदिनां । निदधुः सोढघोरार्त्तिं रौम्या ११५
ध्यक्षकरे तथा ॥१॥ मृत्यर्हत्वं सतस्तस्य सत्येशाज्ञोऽप्यसौ कथं । शक्तः साधयितुं यज्वाद्यु
त्तितोऽन्यान्वयोद्भवः ॥२॥ गुरुरुवाच ॥ तत्कथां शिष्य वक्ष्यामि किंतु प्राक् श्रूयतां त्वया ।
अन्तोऽपचयपुत्रस्य तन्निधातुः पुरारिषु ॥३॥ मृत्यर्हं हि यदा नाथं कृतं दुष्टाक्षदर्शिभिः ।
कायफाकस्यतोऽध्यक्षाग्रे नीतं मृतये ऽप्यवेत् ॥४॥ इष्कार्य्योतियहूदः स तदा स्वोग्राघ

कर्म्मणः । अनुतापकशादीर्णोऽद्रवत्तत्संसदः स्थले ॥५॥ तत्समासीनसभ्यांश्चाग्रयज्वादीनु
पेत्य सः । दुष्टमूल्यं धरंस्त्रिंशद्रौप्यकर्षकमब्रवीत् ॥६॥ निहितानघरक्तोऽहं महाघं कृतवा
निति । सभ्यास्तूचुः किमस्माकं तत् त्वमीक्षस्व खल्विति ॥७॥ ततो मन्दिरमध्ये स तन्मू
ल्यमसृजः प्रभोः । प्रणिक्षिप्य गतः शीघ्रमात्मघाती बभूव ह ॥८॥ गलं ह्युद्बध्य रज्ज्वा स
उद्वृतो नद्ध्याक्षिपत् । आत्मानं किंतु तच्छेदान्निम्नेऽतोऽधोमुखोऽपतत् ॥९॥ पतनस्य ११६
तु वेगेन भग्नमध्याङ्गको ऽभवत् । तस्यान्त्राणि च निर्जग्मुर्नरकाधिगतात्मनः ॥१०॥ एतत्सु
च्छुक्रवारेऽपि घोरमृत्युर्बभूव सः । निहितस्वप्रभोस्तस्यार्थलोभहतचेतसः ॥११॥ सभ्या
स्तूचुरिमान्रौप्यकर्षान् नोचितमस्ति नः । न्यस्तुं मन्दिरकोषान्तर्यतोऽसृङ्मूल्यमेव तत् ॥
१२॥ अतः पश्चात्परामृश्य तैः क्षेत्रं नगरान्तिकं । अक्रीणन् शवखातार्थे मृतानां परदेशि

ना ॥१३॥ असृक्क्षेत्रमितः प्रोक्तं सर्वैर्यिरूषलेमिभिः । तन्निखातस्थलं दुष्टैतन्मूल्यस्मृतये
ध्रुवं ॥१४॥ किंत्विष्कार्य्योतिरेवं स तन्मूल्यं बुधवासरे । प्राप्य तेनाप्यदः क्षेत्रं पेणे त
त्स्वामितः पुरा ॥१५॥ पुनर्दत्ते त्वधर्म्मस्य मूल्ये तेनाप्यसद्गुणैः । इस्त्रयेलप्रधानैस्तत्कृतं स
ग्रन्थपूर्त्तये ॥१६॥ जकरीय उवाच ॥ अहो मेऽपि दासीकृतस्यैस्त्रयेल्यैः प्रदत्तः पणत्त्रिं
शद् श्वेतकर्षाः । तदर्घ्यार्घ आदाय्यथाभूत्कुलालक्रियाक्षेत्रमूल्यं यथेशार्पितं मे ॥१७॥ ११७
गुरूरुवाच ॥ एवं सदात्मपूर्णेन भव्यवक्त्रोदितं पुरा । मूल्यमार्य्यप्रभोर्मन्दं देयं भ्रान्तैस्त्रये
ल्कैः ॥१८॥ विक्रीतस्यात्मवृन्दैस्तु तस्य क्षुद्रार्घदासवत् । प्रभोरन्यजहस्ते च न्यस्तस्यात्तो
ब्रवीम्यहं ॥१९॥ भूरयः श्रेष्ठयज्वाद्याः प्रातस्तं कायफालयात् । अनयन् पन्त्यपीला
ताख्यविचारालयान्तिके ॥२०॥ रोम्योऽध्यक्षो हि दूरेऽपि पुरेऽस्मात्सत्पुराद्वसन् । कैशरो

घे फलैस्तीन्ये पश्चाद्विश्यन्धिरोधसि ॥ २१ ॥ भूसोमास्थगृहात् सैन्यावृतो ऽभ्यायान्महा
पुरं । त्राणपर्व्वणि यात्र्योघकलहानां निरूद्धये ॥ २२ ॥ यिरूषलेमसंस्थस्तु स सदोवास
भास्वति । प्राङ्महाराजहेरोदिनिर्म्मिते सद्मसंचये ॥ २३॥ तत्रोपस्थाय यङ्वाद्यास्तद्वारे
नाविशन् यतः । खाद्यं तैस्तत्परे सद्यो ऽपि त्राणोत्सवभोजनं ॥२४॥ अतस्तद्रोधकमलात्
स्फोतिकाररसोत्थितात् । बिभ्यतस्ते वहिस्तस्थुरन्यजाध्यक्षसद्मनः ॥२५॥ अतः प्रार्थन ११८
या तेषां समाहूतो ऽक्षदृष्टये । आगतो द्वारि पोलातो रक्षिवर्गसमावृतः ॥२६॥ पोलात
उवाच ॥ एतन्नृविषयं यूयं किं धरन्तो ऽभिशापनं । इदानीं हे यहूदीया मां समाहूय
श्रोषसि ॥२७॥ यहूदीयप्रधाना ऊचुः ॥ कुकारी किल चेन्नासीदेष शास्त्रविलङ्घकः । तदा
नानीयतास्माभिरध्यक्ष तत्र संनिधौ ॥२८॥ पोलात उवाच । यूयं तमपनीयैव निज

शास्त्रानुसारतः । विचारयत मा मह्यमेतत्कर्म्म प्रदत्त तु ॥२९॥ यहूदीयप्रधाना ऊचुः ॥
मृत्युकर्म्मेदमध्यक्ष कंचिन्मारयितुं त्विह । भवद्भिर्नो यहूद्येभ्यो नह्यस्त्यनुमतं क्वचित् ॥
३०॥ अतोऽस्मासनघात्योऽपि नरोऽयं नियमेन नः । न तथा दण्डितोऽस्माभिर्न्यस्तस्त्वयि
तु तत्कृते ॥३१॥ तद्भवद्विधिनाप्यर्ह्यो यतोऽयं नोऽखिलं गणं । ख्रीष्टनामाभिषिक्तोऽहं
राजेति वदति ध्रुवं ॥३२॥ एतदुक्त्यास्य वर्गस्यापनयत्येव हृन्दि सः । सम्राजे कैशरे चापि ११९
करं दातुं निषेधति ॥३३॥ गुरुरुवाच ॥ इत्यवोचन्त ते हिंस्राः प्रभुवाक्यस्य पूर्त्तये । स्व
मृत्युविषये पूर्व्वमुदितस्याप्यनेकधा ॥३४॥ ऊर्द्ध्वे स हि समुत्तोल्यः सर्व्वाकृष्ट्यै स्वसंनिधौ ।
प्रत्येतॄणां चिकित्सायै मोस्युत्तोलितसर्पवत् ॥३५॥ तथोचे प्राग्द्यहे तान् हि नोकदेमं पुरा
पि च । घात्योऽतो नास्मभिः किंतूर्द्ध्वशूले रौम्यरीतितः ॥३६॥ एतत्त्वाकर्ण्य पीलातः स्व

विचारालयान्तरे । पुनर्विष्टाह्वयतत्र येषूमेकाकिनं तदा ॥३७॥ अपृच्छदपि च त्वं किं
यहूद्यानां नृपः स्थितः । इत्युक्तः सत्प्रभुस्त्वेतदध्यक्षं प्रत्युवाच तं ॥३८॥ श्रीयेषूरुवाच ॥
स्वयं त्वं किमिमं प्रश्नं वक्षि तज्ज्ञातुमिच्छुकः । किं वा सूचित एवान्यैरेतन्मद्विषये नरैः ॥
॥३९॥ पोलात उवाच ॥ यहूद्यः किमहं ह्यस्मि त्वद्गणश्रेष्ठयाजकाः । मयि त्वां निदधु
स्तस्माज्जिज्ञासे किं त्वया कृतं ॥४०॥ श्रीयेषूरुवाच ॥ राज्यं न मेऽस्माज्जगतोऽस्ति जातं १२०
चेत्स्यादयोत्स्यन् हि तदा प्रजा मे । यहूद्यनिघ्नीभवनावरुद्धै न त्वैहिकं मेऽस्त्यधुनैव राज्यं ॥
४१॥ गुरुरुवाच ॥ इत्थमाकर्ण्य पोलात उवाच किमतो ध्रुवं । त्वं राजासीत्यथैतत्तं बद्धः प्रत्य
वदत्प्रभुः ॥४२॥ श्रीयेषूरुवाच ॥ ऋतं त्वयोक्तं तदहं तु दातुं सत्याय साक्ष्यं दृढमेव जातः ।
भुव्यागतश्चाप्यत एव यो यः सत्योद्भवो मे स वचः शृणोति ॥४३॥ गुरुरुवाच ॥ इत्युक्त्वा

विस्मितो ऽध्यक्षो बभाषे सत्यमस्ति किं । इदं प्रत्युच्य सद्यस्तु पुनर्द्वारि जगाम सः ॥४४॥
यहूदीयप्रधानांश्चाभ्युवाचास्मिन्नहं नरे । कृतान्वेषणको दोषं नाप्नोमि कमपि ध्रुवं ॥४५॥
इति संश्रुत्य ते वेगादभिशापकदम्बकं । उच्चैस्तद्विषये प्रोचुर्नीरवस्तु स्थितः प्रभुः ॥४६॥
अतो ऽध्यक्षो ऽब्रवीत्तं त्वं न ददास्युत्तरं कथं । अहो त्वयि कियत्साक्ष्यं दृढं प्रख्यान्त्यमी इति ॥
४७॥ किंतु तत्रापि किंचिन्नावदद्येषूरतो ऽपि च । पीलाते विस्मयन्व्याप्ते ऽधिकं प्रोचुर्द्वि १२१
षस्तदा ॥४८॥ यहूदीयप्रधाना ऊचुः ॥ अयं क्षोभयति व्यूहं यहूद्याखिलनीवृति । स्वयैतत्पुर
पर्य्यन्तं गलीलावधि शिक्षया ॥४९॥ गुरुरुवाच ॥ गलीलावधिसंभूतां येषूशिक्षां निशम्य तु ।
पीलातस्तांस्तदापृच्छत् किं गालील्यो ऽस्त्यसाविति ॥५०॥ हैरोद्याधीनभूमेश्च तस्या येषूं समा
गतं । ज्ञात्वा सो ऽकल्पयन्नेतुं तं हैरोद्यान्तिपान्तिके ॥५१॥ स गलीलाप्रदेशस्य भूपो हि

त्राणपर्व्वणे । मन्दिरे ऽर्च्चयितुं शास्त्ररीत्यायातो महापुरं ॥५२॥ यिरूषलेमसंस्थस्तु पितृनि

र्म्मितसद्मनः । बृहतों ऽशे सदोवास पोलातालयसंनिधौ ॥५३॥ तं प्रति प्रेरिते ऽतो येष्व्य

भिशापिगणान्विते । अत्यहृष्यत्स हैरोद्यश्चिरात्तद्द्रष्टुकामकः ॥५४॥ बहुधा हि गलीलायां

तत्कीर्त्तिं श्रुतवान् पुरा । कांचिद्द्रष्टुं तदाप्यैच्छत्तत्कार्य्यामद्भुतक्रियां ॥५५॥ बहु पृच्छति

हैरोद्ये तं तु सैन्यसमावृते । अभिशप्यत्सु वेगाच्च याजकाध्यापकादिषु ॥५६॥ नोत्तरं १२२

प्रददौ किंचित्प्रभुस्तं वंचकं प्रति । अतस्तेन ससैन्येन जडवत्सो ऽवहेलितः ॥५७॥ हैरोद्याद्यै

श्च वसनं शुभ्रं स परिधापितः । ख्रीष्टवादावहेलाङ्कं नुन्नः पीलातसंनिधौ ॥५८॥ तत्काला

वधि पीलातान्तिपौ भूतौ रिपू मिथः । यदा होतॄन् गालील्यान् सो ऽवधीत् कलहहेतुतः ॥५९॥

मित्रत्वं जग्मतुरितो नुन्ने तेनान्तिपान्तिके । गालील्यत्वत एवाय्र्ये येष्वि तस्याक्षदृष्टये ॥

६०॥ यथोक्तं तु पुनर्लब्ध्वा हेलामात्राङ्कसंयुतं । येषूं पीलात आहूयाग्र्ययहूद्यांस्तदाब्रवीत् ॥
६१॥ पीलात उवाच ॥ मदग्रे यूयमेनं वै श्रेष्ठयज्ञवादयो नरं । निन्य युष्मद्गणक्षोभकर्त्तारं
किल वादिनः ॥६२॥ अहं त्वन्वेषणं कृत्वा युष्माकमपि गोचरे । न किंचित्प्राप्नवं सत्य
मभिशापेषु तेषु वः ॥६३॥ नान्तिपा वापि स ह्येनं तदग्रे प्रेरितं मया । युष्मत्समन्वितं
प्राणदण्डार्हं नावदन्नरं ॥६४॥ अहो कथमयं तेनात्र नुन्नोऽतोऽल्पशास्तये । तमाहत्य नृप १२३
त्वोक्तिहेतोर्मोचयितास्म्यहं ॥६५॥ गुरुरुवाच॥ रौम्योऽध्यक्ष इदं प्रोच ईर्ष्यामात्राद्यतः स तान् ।
अवेद्येषूरिपूभूतांस्ततो व्यूहं तथावदन् ॥६६॥ पीलात उवाच॥ युष्मद्रीत्या यहूदीयाः प्रत्यब्दं
त्राणपर्व्वणि । मोचनीयो मया कश्चिद्बद्धानां यं यमिच्छथ ॥६७॥ कतरं मोचयिष्येऽतो येषूं
खृष्टाभिधं किमु । बाराब्बं वा नृहन्तारं दस्युं कलहनायकं ॥६८॥ गुरुरुवाच ॥ इत्युक्तौघान्

वहिःस्थान् स रौम्यो ऽध्यक्षो ऽन्तरे गतः । चित्रोपलास्तृतस्थाने ऽध्यास्त सिंहासनोपरि ॥६९॥
तस्मिंस्तत्र समासीने यावद् व्यूहा हि कर्म्म तत् । परामृश्यंस्तदा तस्मै पत्नीदं प्रैरयद्वचः ॥७०॥
पीलातभार्य्योवाच ॥ विषये धार्म्मिकस्यास्य किंचिन्मा क्रियतां त्वया । तद्धेतोर्ह्यीप्नवं स्वप्ने बहु
नीरघ खल्वहं ॥७१॥ गुरूरुवाच ॥ एवं तद्रौम्यया वार्त्तेरिता सत्प्रभुसाक्ष्यदा । एतदभ्यन्तरे
भूरियत्नं चक्रुस्तु तद्द्विषः ॥७२॥ नानावाक्यैर्हि ते दुष्टाः प्रधानाध्यापकादयः । बाराब्बो १२४
न्मोचनाहूत्यै मन्दव्यूहमचोदयन् ॥७३॥ असौ वीरो हि रौम्यारिर्येषूस्त्वेष गलीलकः ।
खृष्टाख्यो ऽप्यैस्त्रयेलार्थं योद्धुं हतमना इति ॥ ७४ ॥ अतस्त्राहोश्वरेत्थं ये पंचाहे प्राग्जय
ध्वनौ । यिरूषलेममायान्तं खृष्टराजं तमाह्वयन् ॥७५॥ ये परे ऽपि मुहुः स्वीयमन्दिरे ऽद्भुत
कारिणं । तन्मुदैक्षन्त खृष्टत्वाचभासापेक्षिणः किल ॥७६॥ ते ऽधुना म्लानवक्त्रं तमात्ममुत्य

समर्थिनं । दुःखव्याप्तं समीक्ष्यातो हताशीभूय लोभिनः ॥७७॥ तदा प्रधानयज्वोक्त्या रो
षिता वधितुं प्रभुं । वधान्मोचयितुं त्वेव बाराब्बं समकल्पयन् ॥७८॥ अतः पृच्छति पीलाते
युष्मभ्यं कतरं तयोः । मोचयिष्ये ऽहमित्थं ते बाराब्बं नेदुरुच्चकैः ॥ ७९ ॥ अतः खृष्टा
भिधं येषूं प्रति कर्त्तास्मि किं न्विति । पीलातोक्ता ननर्दुस्ते स शूले विध्यतामिति ॥ ८० ॥
पीलाते चापवदति प्रोचुर्दृढतरं तदा । बाराब्बं देहि नो ऽमुं तु शूलविद्धं नयाश्विति ॥८१॥ १२५
भूयस्तांस्त्वब्रवीत् किं सो ऽकरोत्पापं मया न हि । मृत्यर्हः प्राप्त आघात्यः शास्त्यै मोक्तव्य
एव च ॥८२॥ इदं श्रुत्वा तु ते सर्व्वे भीमघोषैर्वृका इव । शूले विध्येति संनेदुर्मुहुस्तद्द्वार
संनिधौ ॥८३॥ यात्रिव्यूहस्य नर्द्दो ऽतो वर्द्धितस्य क्रमात्क्रमात् । यज्वनां च प्रधानानां
जिगायाध्यक्षमानसं ॥८४॥ सो ऽतस्तत्कलहाद्भीतो नेच्छन् रोद्धुं च सेनया । तेषां संकल्प

यामास दुष्टं तोषयितुं मनः ॥८५॥ प्रभोस्त्वनघतां जानन् बहुप्रमितिनिश्चितां । व्यूहाग्रे
जलमादाय करौ प्रक्षाल्य चाब्रवीत् ॥८६॥ पीलात उवाच ॥ नास्त्येतद्धर्म्म्यसृक्पातमलं
मत्करसंस्थितं । तन्मुमुक्षुर्न्निर्द्दोषोऽहमीक्षध्वं यूयमेव तत् ॥८७॥ गुरुरुवाच ॥ इत्युवाचे
हमानः स मृषा वारयितुं स्वतः । तत्सद्रक्तमलं पत्नीवाण्यान्याङ्कैश्च भीतहृत् ॥८८॥ ततः
प्रत्यनदत्सर्व्वव्यूहोऽस्मास्वेव तिष्ठतु । अस्मत्पुत्रादिषु च तद्रक्तपातफलं ध्रुवं ॥८९॥ १२६
इत्युग्रशपथं स्वीयवंशेऽद्यावधि संस्थितं । स्थेयं चाप्यधिकं स्वीयराजासृक्पातसंयुतं ॥
९०॥ प्रोक्तवत्स्वतिदुष्टेषु यहूद्येषु विधर्म्मकः । रौम्योऽप्यध्यक्ष आदेक्षीत्तत्क्रूरत्वानुसारतः ॥
९१॥ कलहाच्च वधाच्चामुं कारावद्धं गणैर्वृतं । बाराब्बं मोचयित्वा स येषूं दण्डे तदार्प
यत् ॥९२॥ आद्यं तु रौम्यरीत्या तं कशाहतमपि प्रभुं । आत्मीयसैन्यवाहिन्यां न्यस्य

द्राजालयान्तरे ॥९३॥ ते त्वन्योन्यं समाहूय हेलितुं तं नृपाभिधं । धूम्रमाप्रपदीनांशुं
सहासाः पर्य्यधापयन् ॥९४॥ मुकुटं कण्टकैश्चापि ग्रन्थित्वा प्रणिविध्य च । तन्मूर्द्ध्नि
दक्षहस्ते च न्यस्य राड्दण्डवन्नलं ॥९५॥ तदग्रे हेलया सर्व्वे प्रोचुः पतितजानवः । महा
राज यहूद्यानां नमस्तुभ्यं नमोऽस्त्विति ॥९६॥ तदुपर्य्यथ निष्ठीव्य नलं हृत्वा च तत्करात् ।
तेन तच्छिर आजघ्नुः सेह एतत्तु सोऽरवः ॥९७॥ अध्यक्षः स्पृहयंस्त्वेतत्कशादीर्णत्वदर्श १२७
नात् । उत्पद्यां व्यूहकरुणां पुनर्गत्वावदद्बहिः ॥९८॥ पीलात उवाच ॥ अहो वोऽग्रे
नयाम्येतमलं दुःखेन दण्डितं । युष्मान् ज्ञापयितुं नाप्तार्हता तस्मिन् मृतेरिति ॥९९॥
गुरुरुवाच ॥ एतद्वदति तस्मिंस्तु नीतो येषूर्व्वहिर्धरन् । मुकुटं कण्टकानां सरक्तं धूम्रांशुकं
च वै ॥१००॥ दर्शयंस्तं च पीलातो नरं पश्येत्युवाच तान् । किंतु रोम्याहतिम्लानं तं

दृष्ट्वा ते यहूदिकाः ॥१०१॥ श्रेष्ठयज्वादयो नास्मात् करुणां प्राप्य किंत्वितः । तज्जिघां
सुतरीभूता नेदुः शूले नु विध्य तं ॥१०२॥ इत्थमुक्तो मुहुः क्रूरैः पीलातो रोषितोऽवदत् ।
यूयं विध्यत तं शूले नाहं ह्याप्नोम्यहं मृतेः ॥१०३॥ एवं प्रत्युदितास्ते तु स्वसद्राजद्विषः
शठाः । श्रेष्ठयज्वादयोऽध्यक्षं रौम्यमभ्यवदन्निदं ॥१०४॥ यहूद्या ऊचुः ॥ चेन्नो मारण
शक्तिः स्यात्तदा नास्त्यत्र संशयः । अस्माकं हि व्यवस्थास्ति ययासौ मर्त्तुमर्हति । ईशपुत्रो १२८
ऽहमस्मीति यतोऽवादीत्स मानुषः ॥१०५॥ गुरुरुवाच ॥ इति श्रुत्वाधिकां भीतिं पीलातो
ऽधिगतः स्मरन् । अव्यक्ताः सत्प्रभोर्वाचः स्वपत्न्याः स्वप्नमेव च ॥१०६॥ अतः सद्मान्तरे
भूयो विष्ट्वा येषूं च तत्र सः । आहूय त्वं कुतोऽसीति पपृच्छे दैवचिन्तया ॥१०७॥ न तु
प्रतिवचोऽदासीद्रौम्यायैतद्विवित्सवे । प्रभुरन्यायसोढानस्तेन भूयोऽप्यपृच्छ्यत ॥१०८॥

पौलात उवाच ॥ मां किं न प्रतिवक्षि त्वं त्वच्छूलव्यधनस्य हि । त्वन्मुक्तेश्चापि शक्तिर्मे ऽस्ती
ति किं न विबुध्यसे ॥१०९॥ श्रीयेषूरुवाच ॥ चेदूर्द्ध्ववासेन न ते प्रदत्ता शक्तिर्न ते कापि
ममोपरि स्यात् । शत्रौ तवातो निदधौ तु यो मां तस्य स्थितः पापचयो महीयान् ॥११०॥
गुरुरुवाच ॥ इत्थमध्यक्ष आकर्ण्य प्रभुं मोचयितुं तदा । अत्यैहत यहूद्यास्ये नेदुर्दृढतमं तु ते ॥
१११॥ यहूद्या ऊचुः ॥ एतं चेन्मोचयेर्नासि तदा त्वं कैशरो हितः । यो वक्यात्मनृपत्वं सो १२९
ऽपवदत्येव कैशरं ॥११२॥ गुरुरुवाच ॥ इदं श्रुत्वातिभीतः सो ऽध्यक्षस्तदभिशापतः । कैश
रो ऽग्रे तिबर्य्यस्य शङ्काक्रूरीकृतात्मनः ॥११३॥ कुक्रियाश्च स्मरन् स्वीया अध्यक्षत्वे कृता
भुवि । तद्विज्ञातृयहूदीयातुष्टीकरणतो ऽत्रसत् ॥११४॥ अतो ऽधर्म्मविचारायातुष्टश्चित्रोप
लास्तृतं । स्थानं गत्वा तदा भूते काले सूर्य्योदयाङ्किते ॥११५॥ तत्र सिंहासनासीनो ऽब्रवी

नान् पश्य वो नृपं । इत्युक्तास्ते ऽनदन् शूले नय तं नय खल्विति ॥११६॥ पीलाते तु ब्रुवति किं शूले व्यत्स्यामि वो नृपं । प्रधाना अब्रुवन्नास्ति नृपो नः कैशरं विना ॥११७॥ इत्युक्तवत्सु हिंस्रेषु तेषु खृष्टापवादिषु । तच्छूलव्यधनस्याज्ञां पीलातः प्रददौ तदा ॥११८॥ हृतधूम्रांशुकं तं च स्ववस्त्रपरिधापितं । निदधौ द्विट्सु हन्तव्यं सैन्यगुल्माभिरक्षितं ॥११९॥ मृत्युस्थाने ऽचिरान्नेयं सशूलं पूरयेद्यदा । सहघात्यकुकर्तॄणां पीलातः सो ऽक्षदर्शनं ॥१२०॥ १३० इत्येव द्विमुहूर्तमात्रसमयाभ्यन्तर्यहूदीयभूम्यध्यक्षेण मुमुक्षितो ऽपि निरघो ज्ञातः किलोक्तो ऽपि च । शेषे हिंस्रकृतघ्नवृन्दनदनाकृष्टेन दुर्न्यायिना लज्जाताडनयुक्तमृत्युनिहितः सद्राजईशात्मजः ॥१२१॥ इति श्रीखृष्टसंगीतायां मोक्षमाहात्म्यपर्वणि (जकरीयभव्यवाक्याना मेकादशसर्गान्मत्थायस्य सप्तविंशसर्गान्मार्कस्य पंचदशसर्गाद्योहन्नेरष्टादशोनविंशसर्गाभ्यां लूक

स्य त्रयोविंशसर्गात् तद्रचितप्रेरितगणक्रियाणां प्रथमसर्गाच्चोद्धृतः) सच्छुक्रवारमध्यमचरित्रसू

चकः पापिहस्तेप्रभुसमर्पणं नामैकादशो ऽध्यायः ॥

शिष्य उवाच ॥ विस्मयव्याप्त आचार्य्य सर्व्वमेतच्छृणोम्यहं । कृतघ्नत्वं यहूद्यानां रोम्यस्य

च विधर्म्मितां ॥ १ ॥ तत्क्रूरत्वान्वियल्लज्जाद्दुःखौघसहने प्रभोः । पूर्त्तिं वेद्मि त्वदुक्ताया इषायस्य

गिरः पुरा ॥ २ ॥ किंतु नो ऽधर्म्मतस्तस्य वर्णितस्यार्त्तिपूरणं । यदासीत्सद्वचःपूर्त्त्यै ह्युर्द्धमुन्नो १३१

लनं किल ॥ ३ ॥ तदेव व्यधनं शूले विहितं रोम्यरीतितः । कीदृगासीत्तदङ्गं मां ज्ञापया

तिविवित्सुकं ॥ ४ ॥ गुरुरुवाच ॥ एष रोम्येषु दण्डो ऽभूद्दासानां कुकृतां किल । दस्यूनां

नरहन्तॄणां नीतौ कलहकारिणां ॥ ५ ॥ एष शूल ऋजुभ्यां तु दारुभ्यां परिनिर्म्मितः ।

विज्ञेयः स्तम्भवत्त्वेकं तयोरन्यच्च दिङ्मुखं ॥ ६ ॥ सप्तहस्तमितं पूर्व्वं स्तम्भवत् स्थापितं

भुवि । तत्रूडान्तिकलग्नं तु मध्यमन्यस्य दारुणः ॥७॥ इदं व्याममितं त्वस्ति दिङ्मुखं
किल संस्थितं । नद्धं तदग्रयोर्हस्तौ तत्रोत्तोलितदोषिणः ॥ ८ ॥ तस्य दण्डायमानस्य देहं
तु स्तम्भदारुणि । लग्नं नद्धौ पदौ चास्मिंस्तलाद्धस्तत्रयान्तरे ॥ ९ ॥ रज्जुभिस्तु तमु
त्तुल्य पूर्व्वं कीलैस्ततः पदौ । स्तम्भदारुण्यविध्वंस्ते तथा हस्तौ च दिङ्मुखे ॥१०॥ चतुरङ्गेषु
विद्धं तु तथोर्द्ध्वमुत्तोलितं नरं । नान्यत्कृत्वात्यजन्नुग्रमृतिप्राप्त्यै शनैः शनैः ॥११॥ तन्मू १३२
र्द्धोपरि तु प्रोक्तदारुणोर्मेलनोपरि । दोषः शूलप्रविद्धस्य सर्व्वैः पाठ्यो व्यलिख्यत ॥१२॥
घोरा मृतिरियं शिष्य कशादीर्णो ह्यसौ पुरा । रौम्यरीत्या कुकर्म्मास्मिन् शूलेऽतिवित
त्ताङ्गकः ॥ १३ ॥ विद्धाङ्घ्रिकरकः सर्व्ववपुर्गुरुतया तते । क्षते चाप्यनिलस्पृष्ट्यारुन्तुदेर्म्म
चतुष्टये ॥१४॥ पीडनादुत्थितायां च हृदि रुद्धासृगूर्म्मिके । व्यथायामप्यसह्यायां वर्द्धितायां

क्रमात् क्रमात् ॥१५॥ शूलविद्धः स भीमार्त्तिंव्याप्य आगमनं मृतेः । अत्यैच्छत्सकलेऽह्येव
ह्यहे वापि कदाचन ॥१६॥ तस्मिन् दारुद्वये लग्नोऽत्यज्यतापि परे शवः । दाक्षाय्याद्यै
र्विदार्य्यो हि भयकृत्यै प्रदर्शिनां ॥१७॥ अयं दण्डोऽधमानां तु पारशीकादिषु स्थितः ।
रौम्येष्वेतत्परेऽतिष्ठत्त्रिशताब्देऽपि केवलं ॥१८॥ कैशराख्या हि सम्राजः कौंस्तान्तीनादय
स्तदा । खृष्टीयमतमालंब्य प्रतिरुद्धं पुरा भुवि ॥१९॥ द्विदारुं शूलमालिंग्य मुक्त्युपायं १३३
प्रियं ध्वजं । चक्रुः स्वीयं न्यषेधंश्च शूलदण्डममुं ततः ॥२०॥ शिष्य उवाच ॥ भैरवो
ऽयं त्वया दण्डो वर्णितो मे स्फुटं गुरो । येन त्वेषापि घोरार्त्तिः स्वयं सोढा नृमुक्तये ॥२१॥
स दयालुः कथं खृष्टः पोलातादेशनात्परे । स्वलज्जार्द्दुःखशृङ्गं तमुपेतः क्रूरशत्रुतः ॥२२॥
गुरुरुवाच ॥ पोलातेन तदा पूर्णे विचारे स्तेनयोर्द्वयोः । समं संहार्य्ययोः सार्द्धमुहूर्त्तेऽकौद

याहते ॥२३॥ तदा न्यस्तोऽनघो येषूर्गुल्माधीशकरे पुरात् । वहिर्नेतुं मृतिस्थाने तद्वायु
दिशि संस्थिते ॥२४॥ नहि पुण्यपुरान्तः सा कर्त्तव्या मलिना क्रिया । मोसिशास्त्रेऽभि
शप्तो हि दारूद्वद्धः किलोच्यते ॥२५॥ स त्वस्मिन् गमने स्वीयदण्डशूलं द्विदारुकं । स्वस्कन्धो
परि वोढुं तैः क्रूरैराज्ञापितोऽरिभिः ॥२६॥ क्लान्तः सप्ततिदण्डीयदीर्घजागरणेन यः ।
परे सद्भोजनान्नित्यं दुःखाब्ध्यूर्म्मिपरिप्लुतः ॥२७॥ यो ऽसृक्स्वेदव्यथापन्न उद्याने विष्व 134
घतिस्वह । शिष्येष्वथ च तैर्हीनः सत्पुरेऽपहृतो निशि ॥२८॥ आहतः कायफस्याथ
शालायां योऽथ चोषसि । अध्यक्षालय एवोग्रकशाकण्टकताडितः ॥२९॥ स तथा व्रणितः
सम्यग्दुष्टभारप्रपीडितः । यिरूषलेमतो वाह्ये स्तोकशः प्राचलत्पथि ॥३०॥ इयत्सोढु
मशक्ते तु भूतेऽर्य्ये शूलवाहने । अन्यं तद्वहनार्थं ते विष्टीचक्रुर्नरं ततः ॥३१॥ क्षेत्रतो यस्तदा

दैवाच्चलन् हि नगरं प्रति । कुरेणीवास्यपि त्राणपर्व्वणे समुपस्थितः ॥३२॥ तस्य सीमोन
संज्ञस्य स्कन्धोपर्य्यार्पयन् बलात् । नच्छूलं स्वगणाग्रे ते वोढुं ख्रृष्टजिघांसवः ॥३३॥ तत्प
रे त्वेष सीमोनः पितालेक्षन्द्ररूफयोः । सस्वपुत्रद्वयः शिष्य ख्रृष्टीयं धर्म्ममाश्रयत् ॥३४॥
तस्य मुक्तिदशूलं च हृदये ऽप्यवहत्स्वयं । यस्य तद्व्यवहद्दारुशूलं विष्टीकृतो बलात् ॥३५॥
येषूं त्वनुगता बह्वी जनता स्त्रिय एव च । आघ्नत्यः स्वीयवक्षःसु विलपन्त्यो ऽपि चोच्चकैः ॥ १३५
३६॥ एतासां करुणां दृष्ट्वा दुर्मृत्यर्थे चलन् प्रभुः । प्रत्यावर्त्तितवक्त्रस्ता इदं स्मार्य्यं वचो
ऽब्रवीत् ॥३७॥ श्रीयेषूरुवाच ॥ मा वो मदर्थे ऽस्तु यिरूषलेमकन्या विलापः किल रोदनं
च । किंत्वात्मनामर्थ इहात्मपुत्रवृन्दस्य चार्थे रुदितास्तुयुक्ताः ॥३८॥ अहो समायान्ति
हि वासराणि नरा यदेमां प्रवदयुरुक्तिं । धन्या नु बन्ध्या अनवाप्तगर्भास्तोकैरपोतस्तनका

स्तथेति ॥३९॥ अद्रींस्तदाह्वातुमुपक्रमेरन् प्रगुप्तये नः पततोपरीति । आर्द्रद्रुमे चेद्धि कृतं
तथैव शुष्के तदाहो प्रकरिष्यते किं ॥४०॥ गुरुरुवाच ॥ इत्युवाच दयालुः सो ऽर्त्तीः स्वप्रोक्ताः
स्मरन् किल । भव्या यिरूषलेमे ऽस्मिन् सप्ताब्दे षड्गुणे त्वितः ॥४१॥ यदा दण्डपुरे ऽपू
ताक्षौहिणोपरिवेष्टिते । पीडा स्याद्यावती नोर्व्यां सृष्ट्यवध्यालयं क्वचित् ॥४२॥ तस्मिन्
जीवद्द्रुमूले च ज्वालितो ऽर्त्यनलो ऽधुना । परे शुष्कात्मकांस्तत्र स्वराजघ्नान् दहेद्भृशं ॥ १३६
४३॥ हन्तॄणां त्वधुनैषां सो ऽङ्घोमानपरिपूर्त्तये । नीतो वृन्देन शेषे तां समाप्नोत् स्तोक
कां गतिं ॥४४॥ घात्याभ्यामितराभ्यां च सहोपस्थाय दुःस्थले । गुल्गुथे देशभाषोक्ते कपाल
स्थानसंज्ञके ॥४५॥ तस्मिन् क्षुद्रगिरौ नातिदूरे गोपुरतः स्थिते । तत्रमारितदुष्कारि
कपालाद्यस्थिविस्तृते ॥४६॥ गुल्मसैन्यास्तदा शूलांस्त्रीन्निष्ठापयितुं भुवि । सर्व्वं प्रस्तो

त्वमप्युग्रदण्डायारेभिरे दृढं ॥४७॥ तदाप्यार्य्यप्रभोरग्रे रौम्यरीत्यनुसारतः । कटुना रस
गन्धेन मिश्रितामानयन् सुरां ॥४८॥ बोधहत्यै तु दत्तां तां व्यथाभोगशमाय च । न लेभे
ऽतिसहिष्णुः स मुमूर्षुर्नरमुक्तये ॥४९॥ सिद्धज्ञानेन्द्रियः सोऽन्त ऊर्द्ध्वमुत्तोलितो भुवः । कौलै
र्दारुद्वये विद्धाङ्घ्रिकरः सर्व्वगोचरे ॥५०॥ मध्ये दस्य्वोर्द्वयोः संस्थस्तद्वच्छूलप्रविद्धयोः । न
किञ्चिद्वदत्क्रूरपीडाव्याप्त इदं विना ॥५१॥ श्रीयेषूरुवाच ॥ हे पितर्दययैतेषां क्षमस्व वध १३७
पातकं । नहि ते स्वकृतं कर्म्म जानन्ति भ्रान्तमानसाः ॥५२॥ गुरुरुवाच ॥ इत्यूचे नह्यमानः स
कौलैः शूले दयानिधिः । यदाद्यः प्रहरो यातो द्वितीयश्चोपचक्रमे ॥५३॥ तदा तदभिशप्तेश्च प्राक्
पीलातेन या लिपिः । लेखिता सार्पिता सैन्यैः शूले तन्मस्तकोपरि ॥५४॥ त्रिभाषा सैत्र
येलीयभाषया लिखिताथ च । यावन्याथ च तच्छेषे लटीनाभिधराम्यया ॥५५॥ नशरेतीय

एषो ऽस्ति येषू राजा यहूदिनां । इत्यलेख्यखिलैः पाठ्यं वड्डैर्भाषात्रयाक्षरैः ॥५६॥ ततो ऽग्या
याजका यस्मात्पाठ्यमेतद्वचो ऽखिलैः । यहूद्यैरन्ययजैश्चैवातुष्टाः पीलातमब्रुवन् ॥५७॥ असौ
राजा यहूद्यानामिति मा लिख किंत्वसौ । आत्मोक्तो राड् यहूद्यानामित्येवाध्यक्ष लिख्यतां ॥
५८॥ एवं श्रुत्वा तु पीलातस्तद्वाक्यैः कुपितो ऽवदत् । यन्मयालेखि तन्मात्रं लिखितं ताव
दस्त्विति ॥५९॥ गुल्मसैन्यास्तु चत्वारः शूले विद्धैस्त्रयेलिनां । सद्राजं वस्त्ररहितं तत्र बद्धा १३८
च तां लिपिं ॥६०॥ तदा तस्याम्बरं सर्व्वं चतुर्धा व्यभजन् समं । आत्मार्थे रीतितस्ते ऽशं
नयन्तः पृथगेकशः ॥६१॥ तत्र श्रेष्ठांशुकं त्वाप्त्वा न सूत्रयुतखण्डकं । किंत्वग्रावध्यभिन्नं वै
व्यूतमूचुः परस्परं ॥६२॥ वयं मा खण्डयामेदं गुटिकापातनेन तु । विजानीम तदस्माकं
कतमस्य भवेदिति ॥६३॥ एवं चक्रुः पुराणायाः ख्रिष्टार्त्तिविषये गिरः । दृढसंपूर्त्तये सैन्या

रौम्यास्तदविदोऽपि ते ॥६४॥ यहूद्या याजकाद्यास्तु पीलातलिखितात् प्रभोः । दोषपत्रा
दसंतुष्टा हेलनायेदमब्रुवन् ॥६५॥ यहूद्यप्रधाना ऊचुः ॥ अन्यमोक्तायमात्मानं किं न मोच
यितुं क्षमः* । शूलतोऽवतरत्वेव खृष्टः स ह्यैस्रयेलराट् ॥६६॥ तद्दृष्ट्वा तं प्रतीयाम खृष्ट
मीशवृतं किल । ईशे स व्यश्वसत् तेनाव्यतां तद्दयितोऽस्ति चेत् ॥६७॥ गुरुरुवाच ॥ तथा
प्रत्नवचःपूर्त्यै ज्येष्ठाध्यापकयाजकैः । सत्खृष्टो दाविदः पुत्रः सहासैरवधीरितः ॥६८॥ १३९
तद्वत्सर्वगणाश्चोग्रशूलसंनिधिगामिनां । येषूं संपीडितं तत्राहेलयन् धुतमस्तकाः ॥६९॥ यहूद्या
ऊचुः ॥ अहो भनक्षीश्वरमन्दिरं यस्त्र्यहे च निर्म्मासि पुनर्महात्मन् । विमोचयात्मानमपीश
पुत्रश्चेत्स्यास्त्वमत्रावतरैव शूलात् ॥७०॥ गुरुरुवाच ॥ इत्युक्ते रौम्यसैन्यास्तु तद्दयालुतरा अपि ।
शूलरक्षकेरा भूते पादोनप्रहरद्वये ॥७१॥ तदग्रे स्वाम्लपानीयमुद्धरन्तो न तेन तु । गृहीतं दुःख

साहना सहासा अवदस्तथा ॥७२॥ चेत्त्वं राजा यहूद्यानां मोचयात्मानमप्यहो । इत्येतास्तु
गिरः शूलविद्धदस्युद्वयश्रुताः ॥ ७३ ॥ अथैको ऽपि तयोर्व्यूहावहेलानुक्रमात् प्रभुं । अवद
यदि ख्रीष्टः स्या आत्मानं नौ च मोचय ॥७४॥ इत्युक्तं म्रियमाणेन दस्युनाकर्ण्य तत्सखः ।
श्रीयेष्वितरपार्श्वस्थो गर्हंस्तत्कुमनो ऽब्रवीत् ॥७५॥ परदस्युरुवाच ॥ अरे कथमिदानीं
त्वं न बिभेषि महेश्वरात् । आपन्नो ऽपि समं दण्डं त्वन्निन्दितमुमूर्षुणा ॥७६॥ न्यायतस्तु १४०
तदापन्नावावामर्हं क्रियाफलं । प्राप्नुवन्तावयं त्वङ्गो नाचचार कदाचन ॥७७॥ गुरुरुवाच ॥
इत्युक्त्वात्मसखं शूले स्वकुकर्म्मानुतप्तहृत् । नम्रात्मा स तदा येषूं सद्विश्वासवचो ऽब्रवीत् ॥७८॥
परदस्युरुवाच ॥ हे प्रभो त्वं यदा स्वीयराज्यं प्राप्यैस्त्रयेलकं । आगतः स्यास्तदा नूनं
दयया संस्मरार्य्य मां ॥७९॥ गुरुरुवाच ॥ तथोक्तः शूलविद्धेन दस्युनाघानुतापिना । अनघः

पापिमोक्तोयव्यथाव्याप्ततरो ऽब्रवीत् ॥८०॥ श्रीयेषूरुवाच ॥ परलोकसदुद्याने त्वमद्यापि मया
सह । संस्थितः स्याः किलेति त्वां सत्यवाक्यं ब्रवीम्यहं ॥८१॥ गुरुरुवाच ॥ तथा स्वामृग
मूल्यं यो ऽघमुक्त्यै तदापातयत् । यथेषायोदितं चाघकृन्मध्ये गणितो ऽप्यतः ॥८२॥ स स्वयज्ञ
महाशक्तिं भुवनाकर्षिणीं तदा । प्रथमं तस्य मुक्त्यैव पापकर्तुरदर्शयत् ॥८३॥ तद्विश्वा
सानुतापौ च नृरोढान्तः प्रदर्शितौ । रक्तेनेवाप्तसंस्कारौ सदुद्याने ऽप्यवेशयत् ॥८४॥ शिष्य १४१
उवाच ॥ दुरात्मककरैः शूले हन्यमानस्य सत्प्रभोः । तदनन्तदयाचिह्नं संशृणोमि तदद्भुतंहं॥
८५॥ किंतु यत्प्रत्नवचसः पूर्त्यै दुष्टा यहूदिनः । व्यथाव्याप्तं सहासास्ते स्वमवाधीरयन्
नृपं ॥८६॥ सैन्याश्च व्यभजन् वस्त्रं गुटिकापातनैरपि । तान्यपि प्रत्नवाक्यानि श्रोतुमिच्छा
मि तेगुरो ॥८७॥ गुरुरुवाच ॥ तत्सर्वं दाविदा शिष्य स्वपुत्रस्य महीयसः । चिराद्भव्यस्य

नाम्नैव तथा व्यक्तमलिख्यत ॥८८॥ इस्रयेलराज उवाच ॥ अहहेश ममेश मे कथ व्यथन
मां विजहासि पीडितं । कथमप्यतिदूरसंस्थितो ऽसि मम त्वं सविलापघोषतः ॥८९॥ अह
मत्र महीलतेव हि स्थित ओघैर्घृणितो ऽवहेलितः । प्रहसन्त्यखिलाः समीक्ष्य मां वितताैष्ठा
धुतमस्तकाश्च ते ॥९०॥ प्रवदन्त्यपि चायमीश्वरे सततं व्यश्वसदात्ममुक्तये । अधुनात्र तु
तेन सो ऽव्यतामपि चेत्तद्दयितो भवेदिति ॥९१॥ जठराच्छुदपादयो ऽपि मां त्वयि च १४२
व्यश्वसमुद्भवावधि । अथ मा भव दूरसंस्थितो ऽप्यधुना हीनसहायकाद्धि मत् ॥९२॥ बहवो
वृषभा हि सांप्रतं बलवन्तः परिवेष्टयन्ति मां । अभिनर्द्दविदारिसिंहवत् स्वमुखं व्याद
दतो ममोपरि ॥९३॥ जलवच्चभवं निजस्थलादखिलास्थीनि वहिर्गतानि च । स्रुतसिक्थ
कवन्ममोदरे हृदयं सम्यगपि प्रलीयते ॥९४॥ बलमेव च शर्करेव मे ऽस्त्यवशुष्कं रसनाप्यतो

मम । चिबुकद्वयलग्नवत्यहं त्वपि मृत्योरजसि त्वयार्पितः ॥९५॥ परितः श्वनिभैः शठ
व्रजैरपि विघ्नाङ्किकरः स्थितो ह्यहं । सकलास्थ्यपि चैकशः क्षमे किल संख्यातुममीभिरी
क्षितः ॥ ९६ ॥ विभजन्ति च ते मदम्बरं गुटिकापातनतश्च मे ऽशुकं । विदधत्यपि
ते ऽतिलीलया त्वमतो रक्षितुमेहि मां विभो ॥९७॥ असितः प्रियजीवनं त्वव श्वबलात् सिंह
पराक्रमात्तथा । अथ नाम तवैस्त्रयेलके स्वजनौघे स्तवितास्म्यहं सदा ॥९८॥ अतिदीन १४३
गणोऽपि भोजनं सदिहात्वा परितृप्तिमाप्नुयात् । परिवृत्तहृदोऽखिलेतरान्वयजाश्चापि
भजेयुरीश्वरं ॥९९॥ गुरुरुवाच ॥ तथा दाविद्यवाक्यैः स सत्येशभजनं प्रति । सकलान्व
यजाकर्षी प्रोक्तः शूलो नृमुक्तिदः ॥१००॥ यल्लग्नोऽप्यैस्त्रयल्यानां राजा विघ्नकराङ्किकः ।
विततांङ्गो व्यथाव्याप्तहृदयान्नास्थिमांसकः ॥१०१॥ अवहेलां समस्तानां वृषसिंहश्वचेतसां ।

वस्त्रभागयुतां सेहे पितृविश्वासशङ्कितः ॥१०२॥ असोढमितरैः सर्व्वैर्हेलादुःखभुजां नृणां ।
भूमिमण्डलसर्व्वाङ्गोभारं किल समूढवान् ॥ १०३ ॥ तमीशेच्छाविनीतः स नृदयाव्याप्तहृत्
स्वयं । सेहे स्वक्रूरहन्तार्थे मृत्युदुःखान्तरेऽर्थयन् ॥१०४॥ शिष्य उवाच ॥ विस्मितो
ऽहं शृणोम्येतां पूरितां सर्व्वशो गिरं । अस्मृतामपि दुर्यज्वगणैस्तद्वागुदीरकैः ॥१०५॥ मुमू
र्षोस्तु कथां मोक्तुर्भद्रदस्य्वघमार्जनात् । परेऽहमधुनाचार्य्य संश्रोतुं स्पृहयामि ते ॥१०६॥ १४४
गुरुरुवाच ॥ दस्युमोचनसद्वाक्यात्किंचित्पर उपस्थितः । मध्याह्नः शुक्रवारस्य ज्ञेयस्तस्य सतः
खलु ॥१०७॥ ततः शूलव्यथार्द्धे तु समाप्ते सत्प्रभोस्तमः । अष्टदण्डेषु तन्मृत्युपर्य्यन्तं व्याप
तां क्षितिं ॥१०८॥ सूर्य्योऽपि हि निजस्त्रष्टुर्नरीभूतस्य भूतले । मृत्यतीरक्षमो द्रष्टुमन्धेनाच्छा
द्यतोरुणा ॥१०९॥ ततः परिस्थितव्यूहहेलनेऽपि न तिष्ठति । तदुग्रतरदुःखोर्म्मिमग्नमीश

सुतस्य हृत् ॥११०॥ तत्पितुश्चेश्वरस्यापि सुखं गुप्तं नृणां तु ये । प्रियाः सर्व्वे स्थिता दूराद्
विना तत्सच्चतुष्टयं ॥१११॥ शिष्य उवाच ॥ के त आचार्य्य चत्वारो ऽवतीर्णेशसुतप्रियाः ।
तदुग्रप्रहरे शूलसमीपे समुपस्थिताः ॥११२॥ गुरुरुवाच ॥ मध्याह्नात्प्राक् प्रभोः शिष्या योहन्ना
ख्याश्च याः स्त्रियः । गलीलातस्तमन्वायंस्तत्कर्म्मैक्षन्त दूरतः ॥११३॥ तन्माता तु मरी
यार्य्या समुपस्थातुमैहत । स्वपुत्रव्यथने शूलं वेष्टमानेष्ववरिष्ववपि ॥११४॥ स्वीयप्रेतपतेः १४५
स्नातो ऽन्विता स्वस्रा मरीयया । पत्न्याल्फायस्य मात्रा चाल्पयाकोबयहूद्योः ॥११५॥
अन्विता च तथा सत्या मग्दलीयमरीयया । सन्मोक्तृप्रेष्ठशिष्येण किल योहन्निनापि च ॥
११६॥ कपालस्थानमारुह्य शूलदारुतले स्थिता । तत्र प्रियतमस्यात्मसुतस्यार्त्तीर्निरैक्षत ॥
११७॥ तत्र यच्च शिशौ तस्मिंस्तामुवाचेशशिक्षितः । वृद्धस्त्रिंशत्समाभ्यः प्राक् सिम्योनो विभु

मन्दिरे ॥११८॥ तस्य वै सत्यतां प्राप धन्याम्बा शूलसंमुखे । निन्दालक्ष्मात्मपुत्रार्त्त्या
शूलवद्दुःखविद्धहृत् ॥११९॥ तां तु दृष्ट्वार्य्यपुत्रः स्वशूलविद्धहृदं प्रियां । तत्सहस्थितमप्यात्म
प्रियं तं जिबिदीयजं ॥१२०॥ स्नेहाविष्टोऽभ्यवादीत्तां नारि पश्य सुतं तव । इत्यथोवाच
योहन्निं पश्य त्वज्जननीमिति ॥१२१॥ एवं चरममादेशं प्राप्य स्वीयप्रभोरसौ । इतः स्व
गृहमानीय तां पुपोषात्ममातृवत् ॥१२२॥ मोक्तृशूलतले त्वेवान्धमुहूर्त्तचतुष्टये । सत्स्वल्पस १४६
त्सु तच्छेषे तृतीयप्रहरे किल ॥१२३॥ स्वपित्रा दत्तपात्रात्स्वं कटुपानं निपीय सः । नृ
मोक्ता सान्त्वनाभावाद् भूम्यद्दुःफलभुक् तदा ॥१२४॥ उच्चैर्दाविद्यगीतस्य तस्याद्योक्तीरुदै
रयत् । अहहेश ममेश त्वं कथं मां विजहासि नु ॥१२५॥ इत्युक्त्वा पितरं तर्हि सर्व्वपूर्त्ति
मुपस्थितां । जानन् सद्ग्रन्थवाक्पूर्त्त्यै तृष्यामीत्यर्थने ऽवदन् ॥१२६॥ दाविद्यवचसी त्वाद्ये

उक्ते सूरीयभाषया । एली एली इति श्रुत्वा यहूद्याः के ऽपि तत्स्थिताः ॥१२७॥ अलीयं
ह्वाह्वयत्येष खृष्टायंचरताकृते । इत्यूचुरविदस्तस्यार्थस्येशेश ममेति ते ॥ १२८ ॥ कश्चित्तु
भाजनात्तत्र स्थितादम्लीकृतेरया । पूरितात्तूलवत्पिण्डं विभृत्य द्रवशोषकं ॥१२९॥ वेत्राग्रे
स्थापयित्वा चाथोर्द्ध्वमुत्तुल्य तेन च । मुमूर्ष्वोष्ठद्वये न्यास्यत्तद्धुस्तृष्णानिवृत्तये ॥१३०॥ अन्ये
तु तिष्ठतालीयः किं तं मोचयितुं मृतेः । आगच्छेदिह पश्यामेत्यवोचन्नवहेलिनः ॥ १४७
१३१॥ प्रभुस्त्वम्लसुरां पोत्वा संपूर्णमिति चख्यिवान् । अनर्द्दत् त्वत्करे ऽहं स्वमात्मानं पित
रर्पये ॥१३२॥ इत्युदीर्य्य स दाविद्यवाक्यान्युच्चैर्विभोः सुतः । मूर्द्धानं नमयित्वाथो स्वीय
प्राणानवर्ज्जयत् ॥१३३॥ तदा पुण्यतमस्थाने महाजवनिका .स्थिता । अखिलैरप्रवेश्या या
रहस्याच्छादिनो विभोः ॥१३४॥ सोर्द्धतस्तलपर्य्यन्तं विदीर्णा तत्क्षणे द्विधा । प्रायश्चित्ते

ऽखिलाघानां समाप्ते प्रभुमृत्युना ॥१३५॥ भूमिकम्पोऽभवच्छैला विभिन्नाश्चापि तत्क्षणे ।
चिरादपि निखाताश्च व्यादीयन्त शवावटाः ॥१३६॥ बहूनां मृत्युनिद्रातो देहाश्चाप्युत्थिताः
सतां । प्रभूत्थानात्परे दृष्टा भूरिभिश्चैव सत्पुरे ॥१३७॥ किंतु ये ऽधिगता व्यूहास्तत्र
तद्दण्डदृष्टये । सर्वे खिन्नहृदः शेषे वक्षांस्याहत्य ते ययुः ॥१३८॥ गुल्मेशोऽपि तु यस्तदुग्र
मरणाध्यक्षः ससैन्यः स्थितो भूकम्पादिभिरन्वितं स सकलत्रासप्रदैर्लक्ष्मभिः । संदृश्यैव यहूद्य १४८
राजमरणं तद्वाचमप्यन्तिमां श्रुत्वेशादरवाद्युवाच नितरामीशात्मजो ऽसाविति ॥१३९॥
इति श्रीखृष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (दाविद्गीतानां द्वाविंशैकत्रिंशोनसप्ततितमेभ्यो
मत्थायस्य सप्तविंशसर्गान्मार्कस्य पंचदशसर्गाल्लूकस्य त्रयोविंशसर्गाद्योहन्नेरूनविंशसर्गान्नाना
रोम्यप्रबन्धेभ्यश्चोद्धृतः) सच्छुक्रवारोत्तरचरित्रसूचको महायज्ञसंपूरणं नाम द्वादशोऽध्यायः ॥

शिष्य उवाच ॥ एतत्सर्व्वविलोकात् को न गुल्माधीशवद्वदेत् । दयालुः स स्थिरः सोढे
श्चात्मजो नितरामिति ॥१॥ गुरुरुवाच ॥ यो मनुष्यीकृतेशे वै ख्रीष्टे सद्गुणसंचयः । उत्पत्त्य
वधि तत्सर्व्वचरित्रान्निर्म्मलाद्भवौ ॥२॥ तस्य भद्रतमं सारमतुल्यममलं परं । एतस्मिन्
पश्य हे शिष्य शूले सम्यक् प्रदर्शितं ॥३॥ अनघो दण्डितो येन विद्वश्च प्रियनानिधिः । मारित
श्च प्रभुर्मृत्युं विजिग्ये तेन सर्व्वशः ॥४॥ नृपापफलमत्यन्तं सर्व्वपापहरस्तु सः । लज्जाया १४९
अधमोऽङ्को ऽपि नित्यादरविधायकः ॥५॥ दौर्बल्यान्तिमलक्ष्मापि दयाशक्तेर्महाकरः ।
अतिदुःखोग्रवासो ऽपि परमानन्ददः सतां ॥६॥ मृत्यूपायो ऽप्यमरताप्रदस्तत्सहभागिनां ।
तमोविक्रममूर्द्धापि तमोनाथविनाशकः ॥७॥ तेन ह्याहत्य दुष्टात्मा स्त्रीसूनोः पार्ष्णिमेव सः ।
महानागो ऽथ तेनापि बभूवाहतमस्तकः ॥ ८ ॥ अतः पूर्व्वनराघघ्नं सन्मुक्तिफलधारकं ।

शूलसंज्ञमिदं दारु दृढभक्त्याद्रियामहे ॥९॥ तं शूलं पुण्यकवचं कामक्रोधादिनष्टये । दधामो हृदि वक्त्रे च गृहान्तःस्था वहिर्गताः ॥१०॥ तं मोक्तृस्मृतये हर्षे दुःखे सत्सान्त्वनाय च । आलिंगामो ऽङ्गमैशस्य प्रेम्णः स्वादुतमं सदा ॥११॥ तं सदैकमहायज्ञवेद्याख्यं ह्याश्रयामहे । तस्मिन्नेवैकविजयध्वजे गल्भामहे सदा ॥१२॥ शिष्य उवाच ॥ अस्याः खृष्टार्च्चिनां भक्तेर्लज्जादुःखाङ्कधारिणां । अद्भुतताया अपि स्पष्टं हेतुरुक्तस्त्वया गुरो ॥१३॥ किंतु तच्छूलविद्धान्ते किमार्य्यस्य प्रभोः शवः । दाक्षाय्याद्यैर्विदार्य्यो ऽस्मिंस्त्यक्तस्त्वत्प्रोक्तरीतितः ॥१४॥ गुरुरुवाच ॥ तथा न त्वभवच्छिष्य विभुपुत्रतनौ यतः । यहूद्याः पर्व्वकाले ऽस्मिन्नैशशास्त्रोक्तिमस्मरन् ॥१५॥ मोसिरुवाच ॥ मृत्यर्हपापकृदितो ऽभिहतो विचारादुद्बद्धमूर्त्तिरपि दारुणि वो गणश्चेत् । रात्रौ तदैव न शवस्तदुपर्यमुष्य त्याज्यो ऽस्ति किंतु तदहे ऽप्यवटे ऽर्पणीयः ॥

॥१६॥ यो यः कदापि हि नरेषु किलास्ति दारुद्धः स ईश्वरगिरोक्त उताभिशप्तः । तस्मात्तमेव परिगुप्य मृदीशदत्तां भूमिं न तेन मलिनीप्रकरिष्यथार्य्यां ॥१७॥ गुरूरुवाच ॥ ततो भीत्या हि शूलेषु शवस्थित्याः परे ऽह्यपि । त्राणीयोत्सवविश्रामशनौ श्रेष्ठे यहूदिनः ॥ १८॥ पीलातं प्रार्थयन् शूलाद् भग्नजङ्घं शवत्रयं । सूर्य्यास्तात्प्राक् समुद्धर्त्तुमवटन्यस्तये किल ॥१९॥ इत्यर्थनानुसारेण तृतीयप्रहरात्परे । शूलविद्धत्रयान्ताशुकृतिं पीलात आदिशत् ॥२०॥ ततो ऽभ्येत्यैकदस्योस्ते ऽभञ्जन् जङ्घे तु सैन्यकाः । परदस्योश्च तद्वत्तन्मृत्याशुकरणार्थकं ॥२१॥ किंतु येषू ततो ऽभ्येत्य गतासुं प्राप्य दीर्घया । दुर्ब्बलीकृतमर्त्यो ना भञ्जंस्तत्प्रसृते अतः ॥२२॥ तेषां त्वेको मृतं ज्ञात्वा स्वयं शल्येन सत्प्रभोः । तच्छूलाधःस्थितः कक्षं विव्याधातिबलात्तदा ॥२३॥ तद्व्रणाच्चोत्थिते सद्यो ऽसृक्पानीये अमिश्रिते । यस्तदैक्षत

साक्षी तु सत्यवाक् सत्यविच्च सः ॥२४॥ प्रेष्ठशिष्यो हि योऽहन्निः प्रभुशूलतले स्थितः । स्वसं
दृष्टमिदं पश्चाल्लिलेखास्मत्प्रतीतये ॥२५॥ प्रत्नवाचोरपि त्वेतदभवत्पूर्त्तये यतः । त्राण
पर्व्वीयमेध्याविवत्सस्य विषये तथा ॥२६॥ विद्धस्यैशेष्टिविम्बस्यादिष्टमीशेन मोसये । तस्या
स्थ्नां न कुत्रचिद्भङ्ज्यं मेध्यस्यैकमपि न्विति ॥२७॥ जकरीयेण चाप्युक्तं परे यैरुषलेमकाः । आत्म
विद्धं निरीक्षेरन् दुर्व्विलापयुता इति ॥२८॥ शिष्य उवाच ॥ किं ततो मृतयोर्दस्य्वोराभ्यंस्ता १५२
भ्यां सह प्रभुः । द्विट्प्रार्थनानुसारेण न्यस्तो मन्दशवावटे ॥२९॥ गुरुरुवाच ॥ स्मरणीया त्वया
शिष्य प्रवक्तुः प्रभुणाखिलं । लोकाघाद्व्यथनं सोढं प्रोचुषो वागियं श्रुता ॥३०॥ कुजनैः सह तस्य
च व्यसोर्विहितं गर्त्तनिखातमेकदा । धनिना तु सहस्थितो ध्रुवं मृदि सोऽभूत् समवाप्तमृत्यु
कः ॥३१॥ एतस्यैषाद्यवाक्यस्य त्वं शिष्य श्रुतवान् पुरा । पूर्व्वाद्भुतवचःपूर्त्तीः शृण्वर्थमधुना

स्फुटं ॥३२॥ धनी योसेफनामार्य्यो महासंसदि चाश्रितः । यहूद्यायां सदाचारो ऽरिमथाय
पुरोद्भवः ॥३३॥ यः प्रत्यैक्षत चाप्यैशराज्यं येषूं पुरापि च । प्रत्यायज्ञोपने स्वीयवर्ग
भीत्यैव संहृतः ॥३४॥ स तदा साहसीभूतः क्रोधहेलनतो न च । त्रस्यन्नप्यन्यसभ्यानां
तत्कुमन्त्रपराङ्मुखः ॥३५॥ रौम्यमध्यक्षमभ्येत्य येषूदेहमयाचत । स्वीये ऽर्पयितुमुद्याने शूल
वेधस्थलान्तिके ॥३६॥ तद्वाक्यं तु समाकर्ण्य पीलातः किल शीघ्रतां । मरणस्येयतीं येष्वो १५३
ऽत्याश्चर्य्यां समबुध्यत ॥३७॥ अल्पं प्राक्प्रेरितैर्जङ्घाभिन्नये ज्ञापितो नहि । सैन्यैः स
मरणं येष्वो भूतं तर्ह्यपि खल्विति ॥३८॥ किंतु तन्निश्चयीकृत्यै गुल्मेशं शूलरक्षिणं । आह्वयत्
स तदा पूर्वं योसेफवरदन्तितः ॥३९॥ तं च पृष्ट्वा कियद्दीर्घं मृतो येषूरिति स्फुटं । शुश्रा
वान्तं प्रभोर्यामे तृतीये ऽन्त्यवचो ऽपि च ॥४०॥ विस्मितो ऽतस्तु पीलातो ऽरिमथायनिवा

सिने । सभ्याय शवमार्य्यस्य समर्पयितुमादिशत् ॥४१॥ ततो गत्वा धनी धर्म्म्यो यत्नतो
वेदिरूपकात् । शूलात्पुण्यतमं देहं स्वभृत्यानुदधारयत् ॥४२॥ दारुबद्धतया सोढशास्त्रोन्ना
[illegible]भिशापनं । निराकृतविधिद्वेषं कीलविद्धतयापि च ॥४३॥ अनन्तार्घेष्टिशक्त्यैव जित
भूतेन्द्रविक्रमं । ईशत्वस्वस्तिकं पूज्यं सर्व्वसद्देहमुक्तिदं ॥४४॥ तथाभग्नास्थिमुद्धार्य्य योसेफ
स्तं दयानिधिं । पर्य्यधापयदात्मीयमतिशुभ्रं सुचेलकं ॥४५॥ नीकदेमश्च यः सभ्यो निश्य १५४
भ्यायात् प्रभुं पुरा । सोऽपीतः साहसोभूत्वादरितुं तद्वपुर्ययौ ॥४६॥ अगुरुं चानयत्तत्र
रसगन्धकमिश्रितं । सपादषट्तुलामानं निखातेऽङ्गनियुक्तये ॥४७॥ ततस्तौ धनिनौ मृत्यु
स्थलात् पटविवेष्टितं । कपालाद्यन्तिके देहं योसेफोद्यान उहतुः ॥४८॥ तदुद्यानान्तरे नूत्ना
मृतन्यस्तये गुहा स्थिता । स्वीयार्थे दृशदुत्खाता किंत्वन्यस्तशवा तदा ॥४९॥ तद्बहिःस्थेऽङ्गने

नीत्वा देहं मृद्यर्पणाय तौ । यथारीति यहूद्यानां धनिनां प्रास्तुतां द्रुतं ॥५०॥ सागुर्वादिं
हि तं यत्नात् प्रच्छदैः परिनह्य तौ । गुहायां न्यास्यतां शेषे ऽतिसायाह्ने स्थिते किल ॥५१॥
सूर्य्यास्तात्प्राग्घि तत्कर्म्म समापूर्व्यं यतस्तदा । सद्विश्राम समारम्भ इत्त्रयेल्यन्यवस्थया ॥
५२॥ अतस्तत्पूर्व्वमपि तौ धर्म्म्यौ सन्नह्वरस्य वै । द्वार्य्याघूर्ण्योपलं वड्रं तत्सुरक्षाकृते गतौ ॥
५३॥ किंतु नार्य्यो गलीलीया या निरैक्षन्त दूरतः । प्रभुमृत्युं मरीये च ये तच्छूलान्तिक १५५
स्थिते ॥५४॥ मग्दलीया किलाल्फायपत्नी चाप्यखिला हि ताः । तत्सद्देहापनयनं गह्वरे ददृ
शुर्दृढं ॥५५॥ किंतु सत्प्रभुमाता सा मरीया प्राक् ततः सती । योहन्निनान्विता शूलात् तद्गेहे
समुपागता ॥५६॥ प्रोक्ते त्वन्ये मरीये द्वे गह्वराङ्गनसंनिधौ । सन्ध्यापर्य्यन्तमासीने रक्षन्त्यौ
तत्प्रियस्थलं ॥५७॥ स्त्रियो ऽन्यास्तु गलीलीया योहन्ना तु विशेषतः । पत्नी खूजस्य हेरोद्या

न्तिपौकःसचिवस्य या ॥५८॥ तदाद्याश्वाशु सत्पुर्य्यां प्रययुः क्रेतुमिच्छुकाः । अर्कास्तात्प्राक् सुगन्धीनि प्रभुदेहानुलिप्तये ॥५९॥ एवं चक्रुरवौ त्वस्तगते खल्वित एव ताः । आशनैश्चर वारान्तं व्यश्राम्यन्नैश्वराज्ञया ॥६०॥ विश्रामं तु य ऐश एव षडहे संपूर्णविश्वक्रियः शब्दो धन्यमुदीरयन् समविशच्छ्स्तं ऽपुरेशार्च्चिभिः । श्रेष्ठं सो ऽप्यवतीर्णसूनुरविशद्विश्राममुद्यानके पुण्ये गह्वर एव पूर्णपरमाचारो विमोक्ता नृणां ॥६१॥ इति श्रीख्रिष्टसंगीतायां मोक्षमाहात्म्य १५६
पर्व्वणि (मोसिपंचशास्त्रे निःसृतिस्कन्धस्यद्वादशसर्गात्संख्यास्कन्धस्य नवमसर्गादनुवाक्यस्कन्धस्यैकविंशसर्गादिषायभव्यवाक्यानां त्रिपंचाशत्तमसर्गाञ्जकरीयभव्यवाक्यानां द्वादशसर्गान्मत्थायस्य सप्तविंशसर्गान्मार्कस्य पंचदशसर्गाल्लूकस्य त्रयोविंशसर्गाद्योहन्नेरूनविंशसर्गाच्चोद्धृतः) सच्छुक्रवारशेषचरित्रसूचक आर्य्यदेहनिखातार्पणं नाम त्रयोदशो ऽध्यायः ॥

गुरुरुवाच ॥ विलापः ख्रिष्टशिष्याणां तद्द्विषां तु जयध्वनिः । पुण्यसप्ताहशेषे ऽस्मिन्
शनौ विश्रामके श्रुतः ॥१॥ प्रभुमृत्यतिखिन्नैस्तैः स्थूलहृद्भिर्हि विस्मृतं । तन्मृत्यूत्थानविषयं
वचः प्रोक्तं मुहुर्मुहुः ॥२॥ दुर्म्मनोभिः फरीष्यैस्तु समन्तात्स न विस्मृतः । दुष्टसंजयसंपूर्त्ति
रोधकः सत्प्रतिश्रवः ॥३॥ अतस्तत्राणविश्राममहाघस्त्रे ऽपि याजकाः । अग्र्या अभ्येत्य पीलातं
सफरीष्या वचो ऽब्रुवन् ॥४॥ यहूदीयप्रधाना ऊचुः ॥ हे महाशय जीवन् स वञ्चको ऽहं १५१७
दिनत्रये । मृत्युतः पुनरुत्थास्ये नूनमित्यवदज्ञणान् ॥५॥ एवं संस्मृतमस्माभिरतो ऽध्यक्ष
सुयत्नतः । रक्षणीयं त्वया तस्य शवन्यर्पणगह्वरं ॥६॥ तन्न चेत्स्याद्धि तच्छिष्या निश्युपेत्य
छलात्तदा । गर्त्ततो ऽपहरेयुस्तं ततो ब्रूयुस्त्वविज्ञणान् ॥७॥ अहो मृत्यूत्थितः सो ऽस्ति
गुरुरित्यथ चोत्तरः । तदुत्पाद्यो भ्रमः पूर्व्वादपि मन्दतरो भवेत् ॥८॥ गुरुरुवाच ॥ इत्थ

मध्यक्ष आकर्ण्य सततावेदनस्य सः । तेषां विरतये रौम्यो दुर्ह्रदामिदमब्रवीत् ॥९॥ पीलात
उवाच ॥ युष्मभ्यं रक्षिणां वर्गो मया दत्तोऽस्ति तत्कृते । तान् यथावश्यकं नीत्वा दृढीकुरुत
रक्षणं ॥१०॥ गुरुरुवाच ॥ ततस्तेऽरिमथायीययोसेफोपवनं शठाः । गत्वा गूथाख्यनगर
वायुदिग्गोपुरान्तिकं ॥११॥ सङ्गह्वरमुखे न्यस्तं प्राग्वड्रोपलमाङ्कयन् । मुद्रया तेऽथ सैन्या
नां द्वाःस्थानस्थापयन्निह ॥१२॥ मृषा त्वेतानि सर्व्वाणि सान्यजैरैस्रयेलकैः । कायफान्तिप १५८
पीलातादिभिः संकल्पितानि ह ॥१३॥ नहि ते विभुपुत्रस्योत्थानं रोद्धुमशक्नुवन् । सर्व्व
राजोऽभिषेच्यस्य दाविदुक्तं यथा पुरा ॥१४॥ इस्रयेलराज उवाच ॥ वर्गाः किमर्थमति
वड्रतुमूलमायन्नन्योन्नवेष्वपि मृषा परिकल्पयत्सु । उत्थाय भूमिपतयो हि परामृशन्ति
रोद्धुं विभुं तदभिषिक्तनृपं च सेन्द्राः ॥१५॥ तच्छृङ्खलान् वयमहो परिभंज्य दूरेऽपास्याम

पाशचयमेव तयोर्निजाङ्गात् । इत्याहुरात्ममदतो ह्यधिपाः स तूर्द्ध्ववासी विभुः सहसनो
ऽप्यवधीरयेत्तान् ॥१६॥ क्रोधान्वितः स तत एव भयंकरोक्त्याप्यात्मस्पृहाप्रतिरूरुतसुनरान्
वदेत्तान् । राजानमात्मविहितं ह्यधुना सदद्रौ शीयोननाम्न्यहमहो न्यदधां तमित्थं ॥
१७॥ शंस्यैव तद्विषयदत्तविभुन्यवस्था त्वं मे सुतोऽसि जनितोऽपि मयाद्य नूनं । मामेव
तेऽर्थितवतेऽन्यजसर्व्ववर्गान् भृत्यान् किलाधरणिसीममहं प्रदास्ये ॥१८॥ दण्डेन तांस्त्वमपि १५९
भेत्स्यसि लौहकेन कुम्भादिकानिव करिष्यसि खण्डखण्डं । एवं नृपं प्रति गिरोदितयेश्व
रेण धीरीक्रियध्वमधिपा दृढशास्तिमाप्ताः ॥१९॥ भीत्येशमर्च्चत दरान्वितहर्षपूर्णाः पुत्रं
नमस्कुरुत शास्तिभृतं नचेद्धि । तत्क्रुञ्ज्वलेन लघुनापि हतत्तमार्गाः स्यात प्रतीतिकृत एव तु
तस्य धन्याः ॥२०॥ गुरुरुवाच ॥ इत्थमैश्वरवाक्यस्य यद्भूतं शिष्य पूरणं । खृष्टरोङ्गृनृपा

द्दीनां संकल्पौघातिखण्डनात् ॥२१॥ तस्य राज्यविधानाच्च जनितत्वाच्च सद्विभोः । तत्का
र्य्याच्च समस्तानां दिशां राज्ञां च संजयात् ॥२२॥ तत्सर्व्वं संस्थितं विद्धि तृतीये ऽह्नि परे
रवौ । न्यस्तमृत्यूत्थितौ दाविज्ञिरो ऽध्येत्यर्थधारके ॥२३॥ तद्देशमुतता ह्यस्य शक्त्या नि
ध्मायिता भुवि । नवजन्म च नित्ये ऽभूज्जीवने मुक्तिदायिनः ॥२४॥ तत्कृते स्थापितं भूमौ
पापहर्तृमृतेः परे । नित्यजीवनसद्बीजं सतां प्राप्तानुजन्मनां ॥२५॥ सर्व्वशाखादिमूलात्मा १६०
जीवद्धीशात्मजो ऽद्वयः । स त्वतः शिष्य मृत्वापि निखाते न्यर्पितो ऽपि च ॥२६॥ न शेषा
इव तत्रेतः पूयिताङ्गो ऽभवन्मृदि । एतद्धस्त्रत्रये दाविदुक्तं तद्विषये यथा ॥२७॥ इस्त्रयेल
राज उवाच ॥ विभुं सदास्थापयमात्मसंमुखे ऽहमक्षरो ऽस्मिन्मम दक्षिणस्थिते । ततः सजिह्वं
मम हृत् प्रहृष्यते वपुः प्रतीत्यापि शयीत चाभयं ॥२८॥ न मे त्वमात्मानमधःस्थले

त्यजेर्नचेक्षितुं पूयिततां स्वपुण्यकं । विहापयेर्जीवनमार्गदर्शकः स्वदक्षिणस्थाक्षयसौख्यको
ऽपि मे ॥२९॥ शिष्य उवाच ॥ स्वीयपुण्यसुतस्येशो न वपुर्मृतगह्वरे । त्यजेत्पूयिततावाप्त्यै
नचात्मानमधःस्थले ॥३०॥ इत्युक्तं दाविदा ख्रीष्टविषये संशृणोम्यहं । रक्षां तद्वपुषश्चामूं बुध्ये
त्वत्पूर्ववाक्यतः ॥३१॥ तदात्मा तु कथं पित्राधोलोके न विहापितः । तज्जिज्ञासे प्रभोस्त
त्रावताराज्ञो हि खल्वहं ॥३२॥ गुरुरुवाच ॥ स्मार्य्यं सत्यवचः शिष्य परदस्युं प्रतीरितं । १६।
परलोकसदुद्याने ऽद्य मया स्याः सजूरिति ॥३३॥ अतस्तच्छुक्रवारे ऽपि सह तेनानुतापिना ।
पापशृङ्खलमुक्तेनाधोलोके ऽवततार सः ॥३४॥ तत्र चास्मिन् शनेर्वार आमृत्युपुनरुत्थिति ।
तस्थौ तत्पुण्यमण्डल्या यथा विश्वसितं सदा ॥३५॥ अब्रहक्रोडसंस्थेभ्यस्तत्र सर्व्वेभ्य एव सः ।
विश्वासिभ्यः प्रतीच्छद्भ्यस्तत्सत्संवित्प्रपूरणं ॥३६॥ प्रददौ मङ्गलां वार्त्तां पूरितस्य निजा

मृजा । प्रायश्चित्तस्य स पुरारुद्धस्वर्द्वारमोचिनः ॥३७॥ पूर्व्वेभ्यश्चानुतापिभ्यो नोहकाले
ऽपि स प्रभुः । चिरापेक्षितसन्मुक्तिं स्वकृतां प्रावरत्स्फुटं ॥३८॥ तथा स मृतिपाशेन
वेष्टितो ऽपि तदा त्र्यहे । सुवार्त्तामानयन्मुक्तेः सर्व्वलोकप्रहर्षदः ॥३९॥ लेभे तु द्विविधं य
आत्मवपुषोः संस्थं नृभावं स्वयमीशस्यैकसुतो नवप्रकृतये ऽङ्गोमारितानां नृणां । मृत्यावाप्य
स भेदमात्मवपुषोः स्थाने इतो ऽनूभयोर्गर्त्ताधोभुवने वरैरपि पुरानिष्टे प्रियोप्राकरोत् ॥४०॥ १६२

इति श्रीखृष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (दाविद्गीतानां द्वितीयषोडशाभ्यां मत्थायस्य सप्तविंशसर्गाल्लूकरचितप्रेरितगणक्रियाणां द्वितीयचतुर्थसर्गाभ्यां सीमोनप्रस्तरलिखितप्रथम साधारणलिपेस्तृतीयसर्गाच्चोद्धृतः) पुण्यशनैश्चरवारचरित्रसूचकः परमविश्रामो नाम चतुर्द्दशो ऽध्यायः ॥

गुरूरुवाच ॥ तमोबलविमर्द्दिनं मरणदंशसंहारिणं नृणां सदनुजन्मदं सततजीवनोद्भवा
लकं । विमोक्तृजयपूरकं सकलवासराधीश्वरं प्रणम्य कथयामि ते तदतिचित्रकर्म्माण्यहं ॥
१॥ त्राणीयरविवारे ऽस्मिन्नरुणात्प्राक् समुत्थिते । मरीये द्वे सलोमी च जिबिदीयस्य
पत्न्यपि ॥२॥ ये हि शुक्रे यथाप्रोक्तमासूर्य्यास्तगति स्थिते । मरीये सद्वपुर्धारिगह्वराङ्गन
संनिधौ ॥३॥ या सलोमी च तद्व्रातमपुत्रयोहन्निना सह । बाध्या खृष्टार्य्यजननीं सान्त्वय १६३
न्ती स्ववेश्मनि ॥४॥ तत्सन्नारीत्रयं पूर्णे विश्रामे ऽर्के ऽस्तगे शनौ । सुगन्धीनि सम
क्रीणात् पूर्व्वोक्तस्त्रीगणा इव ॥५॥ प्राक् तत्सर्व्वगणाच्चार्कीहे सलोमीगृहाद्गतं । अचलद्
गह्वरं द्रष्टुं प्राक् सद्देहानुलिप्सितः ॥६॥ सृतौ तिस्रस्तु ताः को ऽस्मत्कृते वड़ोपलं मुखात् । गह्व
रस्य विघूर्ण्यापनयेदित्यवदन् मिथः ॥७॥ योसेफनीकदेमाभ्यां दृष्टवन्त्यौ तमर्पितं । स्मरतः

स्म मरीये हि पररक्षाविदावपि ॥८॥ किंत्वभ्यर्णे उपस्थाय तिस्रो ऽर्कोदय इव ताः ।
गतं तं ददृशुर्वद्धं न कस्मिन्नप्युपस्थिते ॥९॥ शिष्य उवाच ॥ सैन्यास्तु कु गताःस्त्रीभिर
ज्ञाता अपि ये ऽर्पिताः । शनौ गह्वररक्षार्थं सपीलाताग्र्ययाजकैः ॥१०॥ को नार्य्यागमनात्
पूर्वं हेतुस्तद्विकृतेरभूत् । मुद्रितस्यापि च ग्राव्णो ऽपनीतेर्वद मे गुरो ॥११॥ गुरुरुवाच ॥
तत्ते ऽहं कथये शिष्य जिबिदीयगृहाद्यदा । सन्मातृन्युषितास्तिस्त्रस्ताः कपालाद्रये ऽचलन् ॥ १६४
१२॥ तदैवोषसि भूकम्पो रम्यगुल्माभिरक्षिते । बृहंस्तद्गह्वरस्थाने धूतमृत्यालयो ऽभवत् ॥
१३॥ स्वर्गाज्जहो अवततार तडिद्वदास्यो दूतो विभोर्हिमवदर्जुनवस्त्रशुभ्रः । उद्यान इव
धनिनो ऽरिमथायवासिसभ्यस्य तत्र शयितप्रभुसेवनार्थे ॥१४॥ भीमो ऽथ रक्षकगणस्य स
गोचरे ऽपि तद्भीतिकम्पिततनोर्मृतवत्स्थितस्य । सद्गह्वराद्गनमतीवबलात्प्रविश्य वद्धं न्य

चालयद्दिहोपलम्भयस्तस्थं ॥ १५ ॥ शक्त्या विभोर्विगतविघ्न इतो निरायान्मृत्युंजयः स्वयम
पीश्वरपुत्र आर्य्यः । मृत्युर्न्यथाद्दिदृढबन्धमितो न गामी नित्याव्ययत्वपरिधापितमर्त्य
देहः ॥१६॥ शिष्य उवाच ॥ ये मृत्युगह्वरस्यैतां चित्रां शून्यीकृतिं तदा । ददृशुः किमकुर्व्वं
स्ते मोक्षैश्वर्य्याङ्कदर्शिनः ॥१७॥ गुरुरुवाच ॥ भीत्या पलायितेष्वेव सैन्येषु त्रिस्त्रियो यदा ।
तत्परेऽल्पतमे कालेऽर्कोदये तद्गुहास्थिताः ॥१८॥ मरीया मग्दलीयैव तदा वाक्ष्याङ्गना 165
न्तरे । व्यादत्तं गह्वरमुखं स्मृतवड्डोपले गते ॥१९॥ तद्धेतुविषये शङ्काविप्लुता व्यद्रवत्
पुनः । नगरेऽङ्कुतवार्त्तां तां शिष्यान् ज्ञापयितुं प्रभोः ॥२०॥ इतरा तु मरीयाम्बाल्पया
कोबयहृदयोः । महायाकोबयोर्हन्न्योर्माता तद्वत्सलोम्यपि ॥२१॥ ते स्त्रियौ गह्वराभ्यर्णे
तत्काले समतिष्ठतां । मग्दलीयागतिं भूयोऽपेक्षमाणे हि शङ्कया ॥२२॥ किंचित्कालं तु

भीत्या ते विलम्ब्य द्रष्टुमिच्छुके । किमासीदित्यविशतां हतत्रासे तदङ्गनं ॥२३॥ दक्षिणे
ऽहो समासीनः प्रोक्तवङ्गोपलोपरि । अर्जुनाप्रपदीनो ऽसौ युववद्दूत ऐक्ष्यत ॥२४॥
तस्मादतिभयं नार्य्योर्गतयोरङ्गनस्थितः । स्वर्गीयः स इदं वाक्यं पुण्यसान्त्वदमब्रवीत् ॥
२५॥ दूत उवाच ॥ मा भैष्ट यूयं नश्वरेत्ययेषूर्यः शूलविद्धो हि तमेव यत्नात् । अन्विच्छथेत्थं
खलु वेद्मि किंतु न संस्थितः सो ऽत्र समुत्थितस्तु ॥२६॥ अहो यदात्मीयमृतिस्थलादप्युत्थान १६६
वाक्यं तदतीवपूर्णं । यत्रार्पितो ऽद्यावधि खल्वशेत प्रभुः स्थलं पश्यत हीनशङ्काः ॥२७॥ गत्वा
शु शिष्यांस्तु युवां प्रवक्तं विशेषतः प्रस्तरमुत्थितः सः । मृत्योर्गलीलां पुरतो व ऐष्यंस्तत्रेक्ष्य
इत्युक्तमहो मया वां ॥२८॥ गुरुरुवाच ॥ एवं श्रुत्वाङ्गनादाशु निर्गम्य द्वे पलायिते । स्त्रियौ
भीतियुतानन्दव्यक्त्याकम्पितवर्ष्मणी ॥२९॥ त्रासहेतोश्च शिष्येभ्यो ऽप्यागच्छद्भ्यः सृतौ तदा ।

दातुं नाशक्नुतां धन्यवार्त्तां दूतसमीरितां ॥३०॥ शिष्य उवाच ॥ किं ते तत्र समागच्छन्
मग्दलीयमरीयया । व्यादत्तं गह्वरस्यार्य्यांगधर्त्तुर्ज्ञापिता मुखं ॥३१॥ गुरुरुवाच ॥ एवं प्र
स्तरयोहन्नी ज्ञापितौ तनया प्रभुं । हृत्वा ते गह्वरान्न्यासन् क्वेति वेद्मि न खल्वहं ॥३२॥
इत्थं नार्य्योदितं साध्व्या श्रुत्वा तौ गह्वरं प्रति । पुरतो ऽद्रवतां सद्यो ऽद्भुतकर्म्मविवित्सया ॥
३३॥ योहन्निः प्रस्तरात्तत्र द्रवंस्त्वाशुतरं ततः । तमतीत्य द्वयोराद्यः सद्गह्वर उपस्थितः ॥ १६७
३४॥ न दृष्ट्वा चापि तत्स्थानात्पालयन्त्यौ त्वियावमू । सो ऽङ्गने ऽभ्येत्य कुंचित्वात्माङ्गं व्यैक्षत
गह्वरे ॥३५॥ केवलान् प्रच्छदांस्तत्र स्थितान् दृष्ट्वा तु यत्नतः । नाविशत् किंतु तत्पश्चात्
प्रस्तरस्तर्ह्युपस्थितः ॥३६॥ तन्निर्भयतरो द्रुत्वा गह्वरान्तरपि स्वयं । प्राविशन्न च तत्संस्थं
प्राप्नोदार्य्यप्रभोर्वपुः ॥३७॥ किंतु तत्परिनद्धान् प्राक् सागुरून् प्रच्छदान् स्थितान् ।

तत्पृथक्स्थां च तन्मूर्द्धबद्धां प्राग् गात्रमार्ज्जनीं ॥३८॥ सीमोनो विस्मितोऽपश्यत्तत्राथापि प्रभोः
प्रियः । योऽहन्निर्गह्वरे विष्टा सर्व्वमेतन्निरैक्षत ॥ ३९ ॥ अतस्तद्धृदि विश्वासो जातो
मृत्यूत्थितेः प्रभोः । सद्ग्रन्थोक्तीस्त्ववबुध्येतां न तौ तद्विषयास्तदा ॥४०॥ मरीया मग्दलीया
तु तावनुद्रुतवत्यपि । यथाशक्याशु नगरात् तत्र पश्चादुपस्थिता ॥४१॥ गतयोश्च तयो
र्भूयो गृहे सा गोपुरान्तिके । अतिष्ठद्रुदती शङ्काव्याप्ता गह्वरतो वहिः ॥४२॥ नतांगी १६८
त्वन्तरेऽपश्यदासीनौ सद्वपुःस्थले । दूतौ शुक्लाम्बरावकं मूर्द्ध्नोऽन्यं च पदोः स्थले ॥४३॥ तौ तु
यत्र पुरा देहः प्रभोस्तत्र स्थितौ किल । स्वर्गदूतौ तदाब्रूतां नारि रोदिषि किंकृते ॥
४४॥ इत्युक्ता साब्रवीद् यस्मादहरन्नेव मत्प्रभुं । कुत्र न्यास्यंश्च तमिति नूनं न ज्ञायते
मया ॥४५॥ एवमुक्त्वा सितांशुभ्यां ताभ्यां भूत्वा पराङ्मुखी । वहिर्दण्डायमानं सा श्रीयेषू

मपि पश्यति ॥४६॥ स तया त्वनभिज्ञातो ऽवदत् त्वं नारि किंकृते । तथा रोदिषि कं वात्रा

न्विच्छसि व्याकुला न्विति ॥४७॥ सा तु स्वीयमनोभ्रान्त्या तमुद्यानाधिरक्षकं । तत्क्षणे ऽनुभव

न्त्येतत्प्रष्टारमवदद्वचः ॥४८॥ मग्दलीयमरीयोवाच ॥ हे महाशय चेत्तं त्वमेतद्गह्वरतो ऽग्रहीः ।

कून्यास्य इति मां ब्रूहि स मया चापनीयतां ॥४९॥ गुरुरुवाच ॥ ततस्तां श्रीप्रभुः सद्यो मरीय

इति चख्यिवान् । अतिष्ठत् तं त्वितः सैवाभ्यजानाद्विस्मयावृता ॥५०॥ आचार्य्येति च सं १६९

वद्य तस्याप्यालिङ्गितुं पदौ । उद्यताभ्यनमत्किंतु तां तदोवाच जीवराट् ॥५१॥ श्रीयेषू

खृष्ट उवाच ॥ मां मा गृहाण नहि खल्वधुनाहमूर्द्ध्वमारूढ आत्मपितरं प्रति किंतु मे त्वं ।

भ्रातॄन् प्रगत्य वद मे पितरं नु वश्चारोहाम्यहं मम तथैव च वो ऽपि चेशं ॥५२॥ गुरुरुवाच ॥

एवं मृतिस्थलत उत्थित ईशपुत्र आद्यां स्वदृष्टिमददात्तदुदारनार्य्यै । तस्याः पुरा हि विनि

रस्य स सप्तभूतान् धन्योचकार परमेण तदा वरेण ॥५३॥ सद्धर्षविप्लुतमना अथ मग्दलीया सोद्यानतस्त्वरितमद्रवदैशवार्त्तां । जीवत्परप्रभुसमीक्षणकां समस्ततच्छिष्यसंमुख उदीरयितुं समन्तात् ॥५४॥ आद्ये त्वन्यां मरीयां सा सलोमीं च सखीद्वयं । पुनः प्राप्यातिधन्यं तत्सद्वासनमवेदयत् ॥५५॥ स्त्रियौ ते हि यथाप्रोक्तं पुरोद्यानात्पलायिते । गुहान्यादातृदूतोक्त्या भीयुतानन्दकम्पिते ॥५६॥ तद्वन्यत्वस्मरेणाथ परे निर्भयतां गते । सखीमस्मरतां स्वीयां गह्वरे ऽपेक्षितां पुरा ॥५७॥ तां तु तत्र पुनर्यातां तदा ज्ञात्वा हिते अमू । गोपुरोद्यानयोर्मध्ये व्यलम्बेतां तदाप्तये ॥५८॥ द्रवन्तीं वीक्ष्य चोद्यानात् तामज्ञापयतां मुदा । दूतोक्तिं प्रापतुस्त्वस्याः श्रेयो दृष्टप्रभोर्वचः ॥५९॥ अतिहर्षात्तु तत्सर्ववार्त्तां दातुं सखीत्रये । शिष्येभ्यो गच्छति पुरमहो तत्संमुखे स्थितः ॥६०॥ प्रभुरार्य्यो ऽथ चोवाच शुभं युष्मभ्य

मस्त्विति । प्रणताास्तास्तु तस्याङ्घ्री गृहीत्वार्च्चन्त विस्मिताः ॥६१॥ श्रीयेशूरुवाच ॥
मा भैष्ट यूयमधुना त्वधिगम्य सद्यो भ्रातॄन् ममादिशत यत्नत एतदेव । गालील्यदेशमधियान्तु
यिरूषलेमात् ते तत्र मामपि दृढं च समीक्षितारः ॥६२॥ गुरुरुवाच ॥ तथा भाति प्रभौ नारीः
प्रति तासु यतीषु च । तत्सुवार्त्ताप्रदत्त्यर्थं शृणु यन्नगरेऽप्यभूत् ॥६३॥ गुल्मसैन्या यथाप्रोक्तं
रोम्या गह्वररक्षिणः । तद्भयादात्रीशदूताद् भीकम्पिता मृतवत्कृताः ॥६४॥ पुरे पलायितास्ता १७१
वत्कथामग्र्ययाजकान् । ज्ञापयामासुरुद्याने भूतानां विस्तरात्तथा ॥६५॥ सैन्या ऊचुः ॥
भीमो विद्युद्वदास्यो नः शुभ्रो देवोऽर्ज्जुनांशुकः । प्राक् सूर्य्योदयतोऽकस्माद्बभौ गह्वरसंनिधौ ॥
६६॥ तन्मुखाच्च भवन्मुद्राङ्कितवड्रोपलं स वै । विचाल्यातिबलेनास्मांस्ततो व्यद्रावयत्
क्षणे ॥६७॥ रोम्यसैन्या वयं मृत्युदण्ड्यं रक्षाविवर्ज्जिनं । विद्म किंतु सुरान् मर्त्त्याः प्रति

रोढुं क्षमाः कथं ॥६८॥ गुरूरुवाच॥ इत्यद्भुतवचः श्रुत्वा स्थातुमादिश्य तान् पृथक् ।
सैन्यांस्ते दुर्हृदो ऽतः किं कार्य्यमित्यत्यचिन्तयन् ॥६९॥ गह्वरान्तःशवाभावं निश्चित्य च
परामृशन् । सैन्यानभिशपेयुः किं पीलातं प्रति किं न वा ॥७०॥ तत्कथानृततां ते तु सं
स्थापयितुमक्षमाः । इच्छवो ऽप्यृतसापत्न्या लोभेर्षाभ्रान्तमानसाः ॥७१॥ तद्विश्वासं निरा
कर्तुमध्यक्षस्य गणस्य च । शेषे खल्वाह्वयन् सैन्यांस्तत्तूष्णींकृतये तथा ॥७२॥ प्रधानय १७२
ह्वधा उचुः॥ हे भद्रा दोषरहिता रक्षकाः स्थात एव वः । बहुरूप्यं ददामो ऽपि कुर्य्यीताज्ञा
न एव चेत् ॥७३॥ एतद्ब्रूत निशामध्ये स्वपत्स्वस्मासु गह्वरे । येषूशिष्या उपेत्याहो शवं
तस्याहरन्निति ॥७४॥ मा भैष्ट मृतिदण्डात्तु सुप्तानां किल रक्षिणां । चेच्छ्रूयेतैतदध्यक्ष
पीलातेन हि वो वचः ॥७५॥ मृदुवाक्यैस्तदा युष्मद्रक्षात्यत्यर्द्दिता वयं । तं संतोष्य विना

शङ्कामदण्ड्यान् स्थापयेम वः ॥७६॥ गुरुरुवाच ॥ इत्यादिष्टा अमी रौम्याः सैन्यास्तद्रूप्य
लिप्सया । अङ्गीचक्रुरिदं वक्तुं तथा चाभूज्जनश्रुतिः ॥७७॥ तद्व्यर्थकथया शिष्य श्रेष्ठय
ज्वादयः शठाः । रोद्धुमैहन्त सत्योक्तिं ख्रीष्टशिष्योदितां परे ॥७८॥ चेच्छक्याप्यभवत् सा
हि गालील्यैः क्षुद्रशक्तिभिः । अल्पै रौम्ययहूदीयदृढरक्षणतो हृतिः ॥७९॥ चेच्छक्यो ऽप्य
भवत्सैन्यैः स्वीयमृत्यर्हदुष्कृतेः । स्वयं स्वीकार एवैष सर्वपूर्वासिगोचरे ॥८०॥ तदापि १७३
कथमेतस्य निश्चयं प्राप्य ते ऽरयः । अतिक्रुद्धा अपि न वै चक्रिरे ऽन्वेषणं दृढं ॥८१॥
कथं नाल्पानमून् क्षुद्रान् ख्रीष्टोत्थापनवादिनः । सत्पुरे ऽप्यभयांस्तेषु समगृह्णन्नहःस्वपि ॥८२॥
रक्षिणो ऽध्यक्षदत्तांश्च किमर्थं कुसुसुप्सया । निराकृतस्वमुद्रादिफलकानभ्ययोजयन् ॥८३॥
चेन्नूसत्या कथैषासीत् ख्रीष्टोत्थानमृषावचः । रोद्धुमेव प्रधानैस्तैः कल्पिता व्यूहगोचरे ॥८४॥

तदा कथमिदं मिथ्यावचो ऽप्यत्यन्तलक्ष्मणा । निराचक्रुः शवस्यात्मवशसंस्थस्य दर्शनात् ॥
८५॥ पूर्व्वेंशव्यापि वाक्यं तु तत्पंचाशदहे ऽपि ते । सर्व्वदिग्गितपरे चापि भूतं संरोद्धुमक्षमाः ॥
८६॥ शिष्य उवाच ॥ प्रभूत्थानस्य सत्यत्वप्रमाणेन जितो ऽस्म्यहं । विस्मितो ऽपि प्रधा
नानां मिथ्योक्त्याज्ञतयापि च ॥८७॥ किंत्वस्मिन् धन्यसूर्य्याहे याभूत्खृष्टार्च्चिनामपि । स्त्री
र्विनाज्ञहृदां शङ्काहृतिः कथय मे गुरो ॥८८॥ गुरुरुवाच ॥ हैरोद्यसचिवस्यैव खूजस्यौकसि १७४
संचिताः । तद्वन्योषसि योहन्नाद्याः स्त्रियः खृष्टसेविकाः ॥८९॥ यथोक्तं तां हि विश्रामात्प्राक्
परश्वो गलीलकाः । सुगन्धीनि पुरे क्रीत्वा सन्मोक्त्रङ्गानुलिप्सये ॥९०॥ सूर्य्याहोषसि तद्गेहे
सकलानि समानयन् । ततो नेतुं सकृत्सर्व्वा गह्वरे न्यस्तसन्तनौ ॥९१॥ ततो येष्वनुगाः सर्व्वाः
सन्मरीयात्रयं विना । ससलोमि ययुः प्रातः सुक्रियां कर्त्तुमेव तां ॥९२॥ हैरोद्यसम्नतश्चापि

येनाग्रे प्राचरत् पथा । कपालाद्रौ प्रभुस्तेन ययुस्तद्गह्वरं प्रति ॥९३॥ ताभिः सार्द्धं तथा
चान्याः स्त्रियो यैरूषलेमकाः । येषूविश्वासिका जग्मुस्तत्सद्देहादराय हि ॥९४॥ तामह्रस्व
मृतिं तास्तु पुरभित्तिवहिःस्थितां । प्रचल्य तावतीं शेषे योसेफोपवनं ययुः ॥९५॥ यदा
तूपस्थितास्तत्र तत्प्रागल्पतमं द्रुता । मरीया मग्दलीयापि दृष्ट्वा दूतान्वितप्रभुं ॥९६॥
तदन्तिकतमे सा तु यथोक्तं गोपुरे द्रुता । गूथाख्ये नैक्षतान्याध्वागच्छदालीमहागणं ॥९७॥ १७५
तास्तु गह्वरमभ्येत्योपलहीनमुखं तदा । आप्त्वा तदन्तरे ऽत्रासाः प्राविशन् ससुगन्धिकाः ॥
९८॥ न तदा तु प्रभोर्देहमवलेप्यमवाप्य ताः । महाशङ्कां ययुः के तं पुरा विष्टाहर
न्निति ॥९९॥ किन्त्वेतद्विषये ऽन्योन्यं विवदत्स्वाङ्गणान्तिके । भास्वद्वस्त्रावहो स्वर्गदूतौ
द्वौ समुपस्थितौ ॥१००॥ अतिभीत्या तदग्रे च प्रणतास्वखिलास्वपि । सन्नारीषूचतु

र्वाक्यमिदं सत्सान्त्वनप्रदं ॥१०१॥ दूतावूचतुः ॥ मृतेषु यूयं कथमेव यत्नाज्जीवन्तमन्वि
च्छथ मुक्तिनाथं । न संस्थितः सोऽत्र समुत्थितस्तु किं न स्मृतं यच्छ्रुतमेव पूर्वं ॥१०२॥ नरा
त्मजः पापकृतां नराणां न्यास्योऽस्ति हस्तेष्वथ शूलवेध्यः । तृतीय उत्थास्यति स त्वतोऽह्नी
त्युक्तं गलीलाभुवि तेन युष्मान् ॥१०३॥ गुरुरुवाच ॥ इत्युक्ता अस्मरन्नार्य्यो गालील्यास्तां
प्रभोर्गिरं । तत्पूर्त्तिं च तृतीयाहेऽस्मिन् भूतां व्यश्वसन्मुदा ॥१०४॥ ततो गह्वरतो भूयः पुरे १७६
गत्वा यदीक्षितं । श्रुतं चैकादश श्रेष्ठशिष्यानज्ञापयन्त तत् ॥१०५॥ योहन्नाद्याभिरुक्तास्तु
पूर्वसत्स्त्रीत्रयेण च । तज्ज्ञोचरस्थितस्वर्गदूतवाचोऽतिसान्त्वदाः ॥१०६॥ मग्दलीयादिभि
श्चापि तिसृभिस्ताभिरीरिता । पुनर्जीवत्प्रभोर्दृष्टिस्तत्सत्सान्त्वनवादिनः ॥१०७॥ न तदैका
दशादीनां प्रभोर्विलपतां वधं । अपहर्त्तुं क्षमा शङ्कां पूर्वाधिस्तब्धचेतसां ॥१०८॥ उन्मत्ता

स्वाश्रया भूताः स्त्रिय इत्युपलभ्य ते । कथाः प्रहेलिका जग्मुर्विस्मृतार्य्यप्रभूक्तयः ॥१०९॥
शवाभावमपि ज्ञात्वा तद्द्वयं न समीक्ष्य तु । सत्प्रभुं स्वर्गदूतान् वा शङ्कां तद्विषये ययौ ॥११०॥
प्रस्तरोऽतः समुत्थाय तत्परीक्षाकृते पुनः । गह्वरेऽद्रवदात्माङ्गं कुञ्चित्वा च निरैक्षत ॥१११॥
प्रच्छदानेव तु प्राग्वत् पृथक्स्थान् वीक्ष्य निर्गतः । विस्मितः किं प्रभोर्देहो बभूवेत्यज्ञमानसः ॥
११२॥ किं मोसेर्देह इव स दूतैरह्रियत स्थले । मनुष्यानीक्षिते न्यास्यः किं वा प्राह्रियतारिभिः ॥११३॥ खृष्टीयानां प्रहर्षानवरतजनको धन्य एषोऽर्कवारस्त्राणाभिख्यस्तदैवादिम १७७
वरसमये पीडनाच्छादितोऽभूत् । शिष्याणां ह्युतमानामपि हृदि निजराट्प्रोदितोत्थानवाक्या
विश्वासोर्म्मिप्रमग्ने स्फुटतममपि तत्प्राप्त आर्य्याबलौघे ॥ ११४ ॥ इति श्रीखृष्टसंगीतायां
मोक्षमाहात्म्यपर्व्वणि (मत्थायस्याष्टाविंशसर्गान्मार्कस्य षोडशसर्गाल्लूकस्य चतुर्विंशसर्गाद्योह

न्नेर्विंशसर्गादन्यप्रेरितवचोभ्यश्चोद्धृतो ) महात्राणरविवारपूर्व्वचरित्रसूचकस्तमोबलपराजयो नाम पंचदशोऽध्यायः ॥

शिष्य उवाच ॥ कथं साङ्कुतशङ्का तु प्राप्तसङ्घसामपि । दिगुंतृणां च तेनापि पश्चादुन्मू
लिताभवत् ॥१॥ गुरुरुवाच ॥ तद्दिनेऽपि प्रभुः श्रेष्ठशिष्यसंसदि वै बभौ । यथा वक्ष्येऽखिले
भ्यस्तु पूर्वं प्रस्तरगोचरे ॥२॥ प्राक् तस्मादपि सन्मोक्तुः सीमोनाग्राधिभासनात् । यदा तत् १७८
केवलं ज्ञातं यदुक्तं विस्तरान्मया ॥३॥ तदा प्राचलतां शिष्यौ ख्रीष्टस्य द्वौ महापुरात् ।
अम्मावं प्रति पादोनचतुःक्रोशान्तरे स्थितं ॥४॥ अल्पायस्तु तयोरेको मरीयायाः पतिः
किल । एकस्या मङ्गलस्त्रीणां जीवत्ख्रीष्टदृशां तदा ॥५॥ तत्सर्व्वविषये त्वेव तयोः सं
वदतोः सृतौ । शङ्कामग्नहृदोर्वार्त्तां स्त्रीणां विचरतोर्भृशं ॥६॥ अहो कश्चित्पथो मध्ये ताभ्यां

सह चलन् बभौ । तदभिज्ञानतो रुद्धनेत्राभ्यामथ सोऽब्रवीत् ॥७॥ अनभिज्ञात उवाच ॥
कीदृशा युवयोरेताः संवादा व्रजतोस्तथा । मार्गे कुतूहलव्याप्तमनसोर्वै परस्परं ॥८॥
अल्फाय उवाच ॥ त्वमुदासीनमात्रोऽपि मध्ये यैरूषलेमिनां । किं न जानासि यत्तत्र भूतमेते
ष्वहःस्वपि ॥९॥ अनभिज्ञात उवाच ॥ एतद् यिरूषलेमे यद्भूतमल्पदिनान्तरे । किम
स्तीत्यधुना मह्यं कथयैतद्विवित्सवे ॥१०॥ अल्फाय उवाच ॥ नश्रेतीययेष्वस्तत्कर्म्म वाक्षु १७९
क्रियासु च । शक्तस्येशप्रवक्तुर्वै विभोः साक्षाद्गणस्य च ॥११॥ प्रधाना नस्तु सश्रेष्ठयाजका
मृत्युनैव तं । दण्ड्यं विचार्य्य शूलेऽपि परश्वोऽव्याधयन्निह ॥१२॥ इस्रयेलविमोक्ता तु स
भावीति वयं पुरा । प्रत्यैक्षाम तृतीयस्तु ततोऽयं दिवसोऽस्त्यपि ॥१३॥ स्त्रियस्त्वस्मद्गणे
काश्चितच्छ्वन्यासगह्वरे । अद्योषसि प्रचल्यास्मान् परे व्यस्मापयन् दृढं ॥१४॥ तद्देहं च न

तत्राप्त्वा गता उच्चुश्च वीक्षितः । स्वर्दूतानां गणो येषूजीवतावादिनामिति ॥१५॥ अतः
के ऽपि नरा अस्मद्व्रणे प्रस्थाय गह्वरं । देहहीनं यथा ह्युक्तं प्रापुर्न ददृशुस्तु तं ॥१६॥ गुरु
रुवाच ॥ एतत्कथयति स्पष्टमल्पाये ससखे तदा । अकस्मादिदमभ्यूचे पान्थो ऽसौ पृष्टवान्
पुरा ॥१७॥ अनभिज्ञात उवाच ॥ हे अबोधाः समस्तानां भव्यवाचकसङ्गिरां । विश्वा
सायाहिताः सम्यक् स्तोकगामिहृदो ऽपि च ॥१८॥ किं न सर्व्वमिदं खृष्टः सोढुमार्हत्ततो ऽपि १८०
च । प्रवेष्टुं गौरवे स्वीये युष्मत्सर्व्वप्रतीक्षिते ॥१९॥ गुरुरुवाच ॥ इत्युक्त्वा सो ऽनभिज्ञातो
मोसेराराभ्य शास्त्रतः । सर्व्वानीशप्रवक्तॄंश्चाधिगम्यातो ऽप्यनुक्रमात् ॥२०॥ यद्यत् तत्रस्थितं
खृष्टविषयं भव्यसद्वचः । दाविदाद्युदितं तत्तद्व्याचख्ये ऽतिस्फुटं खलु ॥२१॥ एतद्विस्तीर्ण
वाङ्मध्ये त्रयस्ते ऽम्माण्युपस्थिताः । शीघ्रं यत्रैव संस्थातुं ससखो ऽल्पाय ऐहत ॥२२॥ अज्ञातः स

त्वतिक्रान्तिसंकल्पं समदर्शयत् । किंतु ताभ्यां दृढं तत्र स्थातुं संप्रार्थितस्तथा ॥२३॥
अल्पायाद्यावूचतुः ॥ आवाभ्यां सह हे मित्र विभुशास्त्रज्ञ तिष्ठ नु । अन्तिके ह्यधुना सायं दिनं
प्रायोगतं च नः ॥२४॥ गुरुरुवाच ॥ एवं संप्रार्थितस्ताभ्यां सह शालां किलाविशत् । समासी
नश्च तत्रापि भोक्तुं तद्धितभोजनं ॥२५॥ ततः सोऽन्नं स्वहस्ताभ्यां गृहीत्वा च विभज्य च ।
आशीर्वाद्य च धन्योक्त्या परे संव्यदधात्तयोः ॥२६॥ तत्क्रियातस्तु तौ सद्यः प्रभुर्येषूः स इत्यहो । १८१
निःशङ्कमभ्यजानीतां स त्वितोऽन्तर्हितोऽभवत् ॥२७॥ व्यादत्ताक्षौ ततस्तौ तु जीवत्प्रभुसमीक्ष
णात् । विस्मयानन्दसंव्याप्तौ समवक्तां परस्परं ॥२८॥ अल्पायाद्यावूचतुः॥ किं न स्वर्गाग्निने
वासीद्दह्यमानं हृदावयोः । यदावां पथि सोऽभ्यूचे ग्रन्थान् व्याख्यान् सतः स्फुटं ॥२९॥ कथं
तं नाभ्यजानाव तदा किंत्वधुनेह न । तिष्ठावाशु तु सद्वार्तादन्यै याव पुरं पुनः ॥३०॥

इत्युक्त्वा सद्य एवोभौ पथि येरूषलेमके । प्रस्थाय द्रुतमभ्येतां श्रेष्ठशिष्यसभां प्रति ॥३१॥
तत्रैकादश तानेकं विना प्राप्य सहापि च । तैरन्यात् ससखस्तातो ऽल्पयाकोबयहूदयोः ॥३२॥
अल्फायः प्रथमं तेभ्य इदं समशृणोद्वचः । समुत्तस्थौ प्रभुः सत्यं सीमोनाय बभाविति ॥३३॥
तदा तावपि यद्वृत्तं मार्गे ऽकथयतां ततः । अम्माव्यन्नविभक्त्यापि तत्प्रादुर्भवनं प्रभोः ॥३४॥
यदाकथयतां त्वेतत् सर्वाग्रे ऽर्कास्ततः परे । गृहद्वारेषु बद्धेषु भीतया दुर्हृद्यहूदिनां ॥३५॥ १८२
अहो तेषां सभामध्ये ऽकस्माद्येषूः प्रभुः स्वयं । दृष्टो दण्डायमानो ऽथ सन्धिर्वो ऽस्त्वित्यमब्र
वीत् ॥३६॥ अतिमुग्धास्तु ते दृष्टो भूत इत्युपलब्धितः । त्रासव्याप्तास्ततो ऽभ्युक्ता इदं तेन
दयालुना ॥३७॥ श्रीयिषूख्रिष्ट उवाच॥ क्षुब्धाः किमर्थमधुना स्थ कथं च हृत्सूत्तस्थौ नु वो विफल
चिन्तनवृन्दमेवं । अङ्घ्री करौ च मम पश्यत संस्पृशन्तो भूतो ऽस्ति नास्थिपलवान् हि यथेक्षितो

ऽहं ॥३८॥ गुरूरुवाच ॥ जीवन्नाथ इदं प्रोच्य करौ साङ्घ्री अदर्शयत् । संकक्षौ पूर्व्वविद्धत्वपचे
र्म्माङ्कोपलक्षितौ ॥३९॥ तदापि तु यदानन्दात् ते नहि व्यश्वसन् खलु । विस्मयाप्नास्तदा
तान् सो ऽपृच्छत् किं वो ऽन्नमस्ति नु ॥४०॥ इत्यादिष्टा ददुस्तस्मै खण्डमुषणन्नषस्य ते । तथा
मधुक्रमस्यापि स चादत्सर्व्वगोचरे ॥४१॥ शिष्येषु त्वतिहृष्टेषु जीवत्प्रभुसमीक्षणात् । भूय
एतां सदुक्तिं स नित्यराज अवोचत ॥४२॥ श्रीयेषूख्रृष्ट उवाच ॥ सन्धिरस्तु नु युष्मभ्यं यथा १८३
मां प्रैरयत्पिता । तथा वो ऽहमपीदानीं प्रेरयामि भुवि स्वयं ॥४३॥ गुरूरुवाच ॥ इत्युक्त्वा
न्यश्वसत्तेषु जीवन्नाथः पृथक् पृथक् । इदं शक्तिदवाक्यं च सकृदभ्यब्रवीदपि ॥४४॥ श्रीयेषू
ख्रृष्ट उवाच ॥ आत्मानमप्यवलभध्वमिहैव सन्तं मद्वक्रतो हि परमार्थिकशक्तियोनिं ।
पापानि मोचयथ यस्य तदर्थमेवं मुक्तिर्भवेद् धरत यस्य धृतिस्तु तस्मै ॥४५॥ गुरूरुवाच ॥

एवं शीयेनसंज्ञे विभुविहितनृपः पुत्र आर्य्यः सदद्रौ तस्मिन् वारे प्रजातो विजितमृतिबलो विष्टशाश्वत्समायुः । स्वीयां शक्तिं विधातुं सकलनृपजितं पापमोक्षमिहैक्यामारेभे स्वीय वृन्दे ऽतिसरलमनसां प्रस्तरादोरितानां ॥४६॥ इति श्रीख्रीष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (मार्कलूकयोश्चरमसर्गाभ्यां योहन्नेर्विंशसर्गात् पौलस्य कुरिन्थ्यान् प्रति प्रथमलिपेः पंचदशसर्गाच्चोद्धृतो) महात्राणरविवारोत्तरचरित्रसूचको मृत्युंजयप्रदर्शनं नाम षोडशो ऽध्यायः ॥ १८४

शिष्य उवाच ॥ एतैर्धन्याहकार्य्यैः किं न शङ्कापहृताखिला । सन्मोक्षुत्थानविषया शिष्याणां चित्ततो ध्रुवं ॥१॥ गुरुरुवाच ॥ अल्पायः ससखः पश्चादन्यांस्तत्प्रभुदर्शनं । ज्ञापयन्नप्यविश्वासान् प्राप स्तब्धहृदो ऽपि च ॥२॥ तथा ये ऽपि सभायां चाग्र्यशिष्याणां स्थिता यदा । रवौ सायं प्रभुः स्वाङ्गं सव्रणं समदर्शयत् ॥३॥ ते ऽवशिष्टानविश्वासांस्तत्कर्म्म

विषये बहून् । स्वगणस्यापि चैकं यो न तदा तैः सहाभवत् ॥४॥ थोमाः स दिदुमाख्यो हि
दशशेषेभ्य एव तत् । श्रुत्वा भूतेक्षणं जानन् प्रत्युवाचाप्रतीतिकः ॥५॥ थोमा उवाच ॥
कीलाङ्कमीक्षेय न चेदहं तत्करद्वये ऽथाङ्गुलिमर्पयेयं । तत्राथ तस्यापि विभिन्नकक्षे करं नि
दध्यां न हि विश्वसेयं ॥६॥ गुरुरुवाच ॥ इत्यूचे स न भूयस्तु धन्यसप्तदिनान्तरे । महा
त्राणाभिधे ख्रीष्ट आत्मानं स्वानदर्शयत् ॥७॥ गते तस्मिंस्तु सूर्य्याह्नो यदा भूयो ऽध्यभासत । १८५
सन्मोक्तुत्थानतो धन्यो वत्सरे तावति स्थितः ॥८॥ तदा यः श्रेष्ठसूर्य्याह्ने प्रस्तरेण कृतां पुरा ।
त्रिरात्मास्वीकृतिं पूर्व्वाधिभासेनापि चक्षमे ॥९॥ सर्व्वेषां यो ऽपि तत्संसत्स्थितानां प्राक्
पलायनं । आत्मतो ऽतिव्यथारात्रौ तदाक्षाम्यत भद्रवाक् ॥१०॥ स थोमामधुना स्वीयप्रेम
भागिनमेव तं । शङ्काव्याप्तमपि क्षान्त्या दृढश्रद्धीचकार ह ॥११॥ न तद्द्वादशवृन्दाद्धि विभु

पुत्रावृताङ्गवि । विनापचयपुत्रं को ऽप्यपचिच्चे कदाचन ॥१२॥ अतो भास्करवारे ऽस्मिं
स्त्राणीयानन्तरे यदा । सर्वे ऽप्येकादश श्रेष्ठशिष्या आसन्त संसदि ॥१३॥ तदा द्वारेषु बद्धेषु
पूर्ववत् सत्प्रभुर्बभौ । तेषु दण्डायमानो ऽथ सन्धिर्वो ऽस्त्वित्थमब्रवीत् ॥१४॥ एवं सर्वान्
समभ्युच्य जितमृत्युर्विभोः सुतः । तदा थोमामिदं वाक्यमभ्यवादीद्विशेषतः ॥१५॥ श्रीयिषू
ख्रृष्ट उवाच ॥ स्वीयामहो त्वमधुनाङ्गुलिमत्र नीत्वा स्पृष्ट्वा परीक्षय करौ मम कीलविद्धौ । १८६
कक्षे तथैव च मम त्वमहो करं स्वं न्यस्य प्रतीतिरहितो न भवेस्तु तस्मात् ॥१६॥ गुरुरुवाच ॥
एतद्ददौ प्रमाणं स कीलविद्धकराङ्घ्रिकः । कक्षात्पातितवान् शल्यभिन्नाच्चासृगपो ऽपि च ।
स्वरहस्यप्रसादस्याङ्कं ततः स्रवतो ध्रुवं ॥१७॥ दयासिन्धोस्तु तस्मात्तां परीक्षां प्राप्तवां
स्तदा । थोमाः समवदद्धे मे प्रभो हे मे ऽपि चेश्वर ॥१८॥ इत्थं सत्प्रत्ययोक्तिं तु तस्य श्रुत्वे

श्वरात्मजः । सर्व्वप्रत्ययकर्त्तॄणामिदं सान्त्ववचोऽब्रवीत् ॥१९॥ श्रीयेषूख्रीष्ट उवाच ॥ यस्मा
द्ध्रुवं त्वमधुना समपश्य एव प्रत्यक्षमापिथ ततो मयि सत्प्रतीतिं । ये मानुषास्तु न समीक्ष्य
तदा प्रतीयुर्मां ते विशेषत इहैव भवन्ति धन्याः ॥२०॥ गुरुरुवाच ॥ तथा तदखिलानां सो
ऽविश्वासं हृत्कठोरतां । अप्यगर्हन्मृदूक्त्यैव तत्समीपस्थितः प्रभुः ॥२१॥ यतस्तं जीवितं पूर्व्वं
स्फुटं दृष्टवतीः सतीः । नारीर्न व्यश्वसन् शङ्काबद्धचित्ता अतीव ते ॥२२॥ ज्ञात्वा सर्व्वे त्विदा १८७
नीं विचलितहृदया मूढतामप्रतीत्याः स्वीयायाः पूर्व्विकायाः प्रभुमृतिविजयप्रत्ययं गाढमापुः ।
श्रेष्ठाः शिष्या इतश्चाप्यविरतमखिलेष्वेव वक्तुं समर्थीभूताः शब्दप्रमाणानुगसकलनृणां धन्यकर्त्रीं
सुवार्त्तां ॥२३॥ इति श्रीख्रीष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (मार्कस्य षोडशसर्गाद्योहन्नेर्विंश
सर्गाच्चोद्धृतो) महात्राणानन्तराष्टाहचरित्रसूचकः सत्प्रत्ययप्रशंसा नाम सप्तदशोऽध्यायः ॥

गुरूरुवाच ॥ स्थिरविश्वाससमापन्ना वरशिष्याः प्रभोस्तदा । गलीलायानविषयं तद्वचो दृढमस्मरन् ॥१॥ तत्र तद्दृष्टये ह्येव यथा सत्त्वीत्रयश्रुतं । प्रभुणा विहितोऽद्रिस्तत्सभायां काल एव च ॥२॥ तत्र चैकादश श्रेष्ठशिष्या बह्वितरैरपि । अन्विता विहिते घत्ते स्थिताः पंचशताधिकैः ॥३॥ तत्सदद्रौ प्रभुः सर्वैस्तदार्य्यस्तैः समीक्षितः । भूरिभिश्चार्च्चितः सद्योऽप्यभिज्ञाततदाननैः ॥४॥ केषुचिच्छङ्कमानेषु त्वनभिज्ञानहेतुतः । दूरात्पश्यत्सु सोऽभ्यर्णे १८८ऽभ्येत्यात्मानमदर्शयत् ॥५॥ स्वन्यस्तां चावदच्छक्तिं स्वर्भुवोरथ चोत्तमं । आदेशं श्रेष्ठशिष्येभ्यस्तत्प्रवक्तुं भुवि ध्रुवं ॥६॥ जीवत्खृष्टावभासानां सामान्यतम एष वै । बहुखृष्टीयवृन्दैश्च सततं संस्मृतस्ततः ॥७॥ शिष्य उवाच ॥ दूरे यिरूषलेमात्किं प्रदेशेऽस्मिंश्चिरं स्थिताः । श्रेष्ठशिष्याः प्रभुः किं वा तत्र तेभ्यो बभौ पुनः ॥८॥ गुरूरुवाच ॥ कंचित्कालं गतास्तेषां

भूरयः स्वालयान्तिके । गालील्यस्य ह्रदस्यैव तैबर्य्याख्यस्य रोधसि ॥९॥ प्रस्तरो नथनै
लश्च कनाख्यनगरोत्थितः । नाम्ना बार्थुलमायो ऽपि थोमाश्च दिदुमाभिधः ॥१०॥ तथा याकोब
योहन्नी जिबिदीयसुतावुभौ । अन्यौ द्वौ सद्गणस्यापि स्थितास्तत्र समं क्वचित् ॥११॥
सीमोनः प्रस्तरो ऽवादीद्धर्तुं यामि झषानिति । षडन्ये चाब्रुवन् याम त्वया सार्द्धं वयं
न्विति ॥१२॥ ततो नावं समारोहन् सद्यः स्थित्वा त्वपि ह्रदे । तावद्रात्रौ न मत्स्यांस्ते १८९
कांश्चिद्धर्तुमशक्नुवन् ॥१३॥ उषसि त्वागते ऽतिष्ठन्नावभ्यर्णरोधसि । प्रभुस्तदनभिज्ञात
स्ततस्तानब्रवीद्वचः ॥१४॥ किं बाला वो ऽन्तिके ऽस्त्यन्नमित्थं ते नेति चावदन् । सो ऽथ
नौदक्षपार्श्वे ऽस्त्वा जालं प्राप्स्यथ बहिर्विति ॥१५॥ तथैव जालमस्त्वा ते खल्वितो झष
भारतः । नाकर्ष्टुमपि सर्वे ते ऽशक्नुवन् नोस्थिता नराः ॥१६॥ तामाश्चर्य्यक्रियां दृष्ट्वा स्वा

ह्याने कृतया समां । योहन्निः प्रस्तरं प्रोचे प्रभुरेवास्त्यसाविति ॥१७॥ एतच्छ्रुत्वा प्रभु
प्रेक्षयिष्यान्निश्चित्य च स्वयं । क्रियातो दृष्टितश्चापि सीमोनः प्रस्तरो हठात् ॥१८॥ परि
धायांशुकं वाह्यं ह्रदे ऽप्यात्मानमक्षिपत् । अधिगन्तुं प्रभुं तीरे शतहस्तद्वयान्तरे ॥१९॥
षट् ते नावि तु तिष्ठन्त आकर्षन्तश्च यत्नतः । मत्स्यपूर्णं तटे जालं शेषे तह्यप्यवातरन् ॥
२०॥ तत्र प्रस्तुतमप्यापुरङ्गारज्वालितानलं । तदुपर्यर्पितान् मत्स्यान् गौधूम्यं पिष्टमेव १९०
च ॥२१॥ तान् प्रभुः स्माह चेदानीं धृतानानयतात्र वः । मीनानित्यथ सीमोनो जाल
मभ्येत्य तत्कृते ॥२२॥ पूर्णमाप्नोदृहन्मत्स्यैस्त्रिभिः सार्द्धशताधिकैः । न तु तद्गाढभारेण
विदीर्णं भग्नमेव वा ॥२३॥ ततः प्रभुरुवाचाहो भुंग्ध्वमित्थं न तेषु तु । को ऽपि कस्त्वमि
ति प्रष्टुं तदा तं साहसी स्थितः ॥२४॥ सादरैस्तैर्हि सर्वैः सो ऽभिज्ञातो ऽन्नं तदा करे ।

आदायाशास्य चैवाथो मीनांस्तेभ्यो व्यभञ्जत ॥२५॥ थोमै तृतीयवारे स प्रभुर्मृत्यूत्थित स्तथा । बभौ तूर्य्यें तदन्येभ्यः प्रस्तराय तु पंचमे ॥२६॥ समाप्ते भोजने मोक्ता प्रस्तराय वचो ऽब्रवीत् । किं मां योनज सीमोन स्निह्यस्येभ्यो ऽधिकं न्विति ॥२७॥ अहं त्वां हे प्रभो सत्यं स्निह्यामीति सुवेत्स्यपि । एवं प्रत्युक्त उचे स पुषाण मदवीनिति ॥२८॥ पुनस्तूवाच सीमोन किं मां स्निह्यसि योनज । इत्थं भूयश्च प्रत्युक्तस्त्वां स्निह्यामीति वेत्स्यपि । अथो १९१
वाचाविवत्सान्मे त्वं पुषाणेह खल्विति ॥२९॥ पुनस्तूवाच सीमोन मां किं स्निह्यसि योनज । इति त्रिरुदितत्वात्तु खिन्नहृत् प्रस्तरो ऽभवत् ॥३०॥ प्रभो त्वं सर्व्ववित् स्निह्याम्यहं त्वामिति वेत्स्यपि । एवं प्रत्युदितो मोक्ताभ्युवाचावीन् पुषाण मे ॥३१॥ सत्यमेतद्ब्रवीमि त्वां यदासीस्त्वं युवा तदा । मेखलां परिधायाया यत्र यत्राभ्यकांक्षथाः ॥३२॥ किंतु वृद्धो

यदा स्यास्त्वं तदा विततहस्तकः । अन्येन किल नेतव्यो ऽसि यत्रापि न कांक्षसे ॥ ३३ ॥
इत्युवाचेङ्गमानः स कीदृङ्मृत्योपलाभिधः । श्रेष्ठशिष्यो ऽचिरात् पूर्वं त्रिरस्वीकृतवानपि ॥
३४॥ परे सन्मण्डलीमूलनिर्म्मातृचरितं शुभं । संपूर्य्य विभुमाहात्म्यं दर्शयेच्छूल एव सः ॥
३५॥ एवमुक्त्वा तु तं मोक्तान्विहि मामित्थमब्रवीत् । तथादिष्टस्तु सीमोनः परावर्त्त्य मुखं
हठात् ॥३६॥ अन्वायन्तं प्रभुप्रेष्ठं योहन्निं वीक्ष्य तत्क्षणे । प्रभुवक्षो ऽन्तिकासीनं चरमे १९२
पुण्यभोजने ॥३७॥ तं तथा दर्शयन् येषूमभ्युवाच ततस्त्वयं । किं कुर्य्याद्धे प्रभो न्वित्थ
मतः प्रत्युदितस्तथा ॥३८॥ श्रीयेषूरुवाच ॥ मदागमनपर्य्यन्तमयं तिष्ठेदिति स्पृहा ।
चेन्मे स्यात् किं तवैतेन त्वमेवान्विहि मां खलु ॥ ३९ ॥ गुरुरुवाच ॥ शिष्येषु श्रुतवत्स्वे
तदितो वार्त्ता प्रकीर्त्तिता । न म्रियेत स योहन्निरित्याप्रभ्वागतिस्थितः ॥४०॥ न प्रभूक्तं

तु तत् किंतु मदागत्यन्तमेव सः । तिष्ठेदिति स्पृहा मे चेत्किमेतेन तवेत्यलं ॥४१॥ जिबिदीयसुतः शान्तोऽयमेतदलिखत्परे । याकोबाद्यखिलश्रेष्ठशिष्याणां तं विना वधात् ॥ ४२॥ अतिसत्यं च तस्यास्ति शेषाणां लेखिनां च वै । सतां साक्ष्यं प्रभोः सर्व्वसत्क्रियाविषयं तथा ॥४३॥ बहुषु तदितरेषु प्राप्तनृत्वेशसूनोर्कृतमगणितसंख्येष्वाश्चर्य्यकार्य्येषु सत्सु । अलमयमणुसारः केवलो नृप्रतीत्यै भुवि विलिखित आप्त्यै नित्यजीवस्य चास्मात् ॥४४॥ इति श्री १९३
खृष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (मत्थायस्याष्टाविंशसर्गाद्योहन्नेर्विंशैकविंशसर्गाभ्यां पोलस्य कुरिन्थ्यान् प्रति प्रथमलिपेः पंचदशसर्गाच्चोद्धृत) त्राणीयसप्ताहानन्तरानेकदिनचरित्रसूचको नित्यपालकावभासनं नामाष्टादशोऽध्यायः ॥

गुरुरुवाच ॥ भूयो यिरूषलेमे तु सर्व्वे मध्येऽव्ययपर्व्वणोः । संचिताः श्रेष्ठशिष्यास्ते विभु

मन्दिरसंनिधौ ॥१॥ पूर्व्वपर्व्वणि यद्वद्धि प्रत्नविम्बप्रपूर्त्तये । मिश्रनोऽध्यैत्त्रयेलोयात्राणाक्त्रियो

ऽभवन्नवं ॥२॥ यदा संपूर्णसत्याविनित्ययज्ञाग्र्यपालिना । त्राणनायकमोक्त्राब्धिस्तीर्णः शुष्क

पदा मृतेः ॥ ३ ॥ तद्वदेव द्वितीयेऽपि पंचाशत्संज्ञपर्व्वणि । पूरणीयस्तदादत्तशास्त्रविम्बः

सदर्च्चिषु ॥४॥ प्रदत्या न शिलापात्रलिखितस्य विधेः किल । सदात्मना तु हृत्स्वेवाग्नि

शक्योजोऽन्वितस्य वै ॥५॥ परे भव्यमदः किंतु तत्पंचाशद्दिनान्तरे । जितमृत्युर्यथा १९४

प्रोक्तः खृष्टः स्वेषु बभौ मुहुः ॥६॥ न यथा मर्त्यजीवे प्राक् तन्मध्ये विचलन् सदा ।क्वचित्त्वी

शालयाद्यद्वत्तैर्दृष्टोऽन्तर्हितोऽपि च ॥७॥ स्वमृत्यूत्थानतः पश्चाच्चत्वारिंशद्दिनान्तरे । एकदा

पृथगात्मानं याकोबायाप्यदर्शयत ॥८॥ बहुधा त्वग्र्यशिष्याणां तावद्वर्गे विशेषतः । वर

मायां नृसाक्षात्स्वभातौ सर्व्वसमाप्तये ॥९॥ शिष्य उवाच ॥ वरमा भातिराचार्य्य सा यस्या

हि परे प्रभुः । न कदापि बभौ भूमौ कीदृश्यासीत्करा च नु ॥१०॥ गुरूरुवाच ॥ चत्वा
रिंशत्तमो घत्वस्त्राणाग्यार्कदिनावधिः । गणनेन मितो नूनं यो वृहस्पतिवासरः ॥११॥ स
धन्यः सर्व्वखृष्टीयैः संमतः खलु सर्व्वदा । प्रभ्वभावसमारम्भो ऽप्योजोवेशनहेतुतः ॥१२॥
तत्क्रिया अधुना शिष्य कथयिष्ये वरेषु हि । तेष्वेकादशशिष्येषु प्रभुस्तर्हि हठाद् बभौ ॥
१३॥ ते नूचुर्हे प्रभो राज्यमैस्त्रयेलेभ्य एव किं । त्वं पूर्व्वमिव भूयो ऽपादानां संस्थापयेरिति ॥ १८५
१४॥ इदं पृष्टो विभोः पुत्रः पारमार्थिकशक्तिदः । विजिताखिलनृत्राणशत्रुः प्रत्यब्रवीदिदं ॥
१५॥ श्रीयेषूखृष्ट उवाच ॥ कालान् विशिष्टसमयांश्च पिता वशे यान् स्वीये ररक्ष नहि वो
ऽस्त्युत तद्विवेकः । शक्तिं त्ववाप्स्यथ यदोपरि वः सदात्मागच्छेद्वरं यदधुनाप्यमहं ददे वः ॥
१६॥ युष्माभिरेव सह यद्यवदं स्थितो ऽहं स्मर्त्तव्यमेतदपि मद्विषयं हि सर्व्वं । मोसेर्विधौ

लिखितमप्यथ भव्यवाक्षु गीतेषु दाविद इहापि च पूरणीय ॥१७॥ गुरुरुवाच ॥ अथ
तद्वोनिरोधान् सोऽहरत्सद्ग्रन्थबुद्धये । भव्योक्तीश्च स्वविषया व्याख्यायेदं ततोऽब्रवीत् ॥१८॥
श्रीयेषूखृष्ट उवाच ॥ एवं व्यलेख्यथ च खृष्ट इदं प्रसोढुमुत्थातुमह्न्यपि मृतेश्च तृतीय आर्हत् ।
नाम्नास्य चाप्यखिलदिक्षु यिरूषलेमाद्भाष्योऽनुताप इत एव सपापमुक्तिः ॥१९॥ यूयं तु
तत्सकलसाक्षिण एव संस्था आदौ प्रतिश्रुतमहो तु व ईरयामि । दानं पितुर्वसत चेह १९६
यिरूषलेमे यावन्न शक्तिमुत तस्य लभेध्वमूर्ध्वात् ॥२०॥ गुरुरुवाच ॥ इत्युक्त्वा स वहिर्नीत्वा
श्रेष्ठवृक्षाद्रिवर्त्मनि । पुरादाबेथनीयं तानाशास्तोच्छ्रितहस्तकः ॥२१॥ श्रीयेषूखृष्ट उवाच ॥
शक्तिं यदाप्स्यथ सदात्मन आगतेर्वो यूयं तदा किल भवेत नु साक्षिणो मे । एतत्पुरेऽखिल
यहूदकदेश एवं सामार्य्य एव च तथावसुधान्त्यसीमं ॥२२॥ गत्वातः सकलान्वयान् किल

पितुः सूनोः सतश्चात्मनो नाम्ना ह्येककरूपकेण सलिलैः संस्कारयन्तो दृढं । यूयं शिक्षयतैत
देशवचनं यो यः प्रतीत्याम्भसा स्नातः स्यात् स विमुक्तिमाप्स्यति वरं दण्ड्यो ऽखिलो ऽप्रत्ययः ॥
२३॥ सत्प्रत्येतृगणैः सहैष भविता विह्यौघ ऐशात्मना दत्तो भूतगणांस्त एव नरतो ऽसिष्यन्ति
नाम्ना मम । नानानूतनभाषयापि च वचो ब्रूयुर्ग्रहीष्यन्त्यहीनक्षय्या विषपानतो ऽपि गदिनः
सुस्थीप्रकुर्य्युः करैः ॥२४॥ प्रत्येतॄन् जलसंस्कृतांस्तु सकला युष्मभ्यमाज्ञा मया दत्ताः शिक्ष १०७
यत प्रकर्तुमनिशं सर्व्वत्र भूमण्डले । युष्माभिः सह शिक्षकैर्ह्यहमहो पित्रन्तिके गाम्यपि स्थेयो
ऽद्यावधि नूनमाखिलजगच्छेषं मदीयात्मना ॥२५॥ गुरुरुवाच ॥ इत्याशिषो ऽन्तर इह
स्थित ईशपुत्रः शिष्येषु तेषु स हठादुपरि प्रणीतः । मेघस्तदीक्षणत एव नमूर्द्धलोके ऽप्याच्छा
दयत्समधिगामिनमुक्तिपूर्त्यै ॥२६॥ आदत्तनृत्व इत ईशसुतो ऽङ्ग्जीवे आरोहयत्सकल

दिग्भुवनोपरिष्टात् । दूताव्यदूतज्जगतीः क्रमशोऽपि सोऽतिक्रम्येतरैरनभिगम्यरूचौ वि
वेश ॥२७॥ तद्वद्धि तस्य पितरं ससहोदरस्यारोहन्नथेशमपि तस्य ससोदरस्य । तद्दक्षपार्श्व
उत तत्समगौरवौजा आसीन एक उभयात्मन एकतायां ॥२८॥ शिष्यास्तु विस्मयवृता
उपरीक्षमाणा अन्तर्हितत्वदिशि हीनधरेशसूनोः । द्वावर्जुनाम्बरनरौ ददृशुस्तदाहो स्वाग्रे
स्थितौ समुदिताश्च तथैव ताभ्यां ॥२९॥ दूतावूचतुः ॥ गालील्यां नु किमर्थमूर्द्धनयनाः स्तब्धा १९८
स्मकास्तिष्ठथ यो येषूर्द्दिवमेव युष्मदधुना नीतो हि वो गोचरे । आरोहन् स यथा समैक्ष्यत
दृढं स्वर्गं प्रतीहाधुना भूमौ स्वर्गत एवमप्यवतरन् युष्माभिरीक्ष्यः परे ॥३०॥ गुरुरुवाच ॥
इदं श्रुत्वा प्रबोधं तेऽवाप्य भूनिर्गतं प्रभुं । पुनश्चेह विचारायागामिनं न्यार्च्चयन्मुदा ॥३१॥
सद्धर्षादरसंव्याप्तास्ततः श्रेष्ठद्रुपर्वतात् । सत्पुत्रारोहणेनार्य्यीकृताज्जग्मुः पुरे पुनः ॥३२॥

स्थित्वा यिरूषलेमे चाशान्तिदानं तदुक्तितः । तत्र सन्मन्दिरे नित्यं प्राशंसन्नीश्वरं स्तवैः ॥ ३३॥ अन्तरे तु समस्तैतत्क्रियासाक्ष्याय ते वराः । शिष्या आत्मीयसंख्यायाः पूर्त्त्यै द्वादशसाक्षिणां ॥३४॥ दुर्निधातृयहूदस्येष्कार्य्योतेर्व्वरः पदे । सार्थना गुटिकापत्या मत्तथीयाख्यधार्म्मिकं ॥३५॥ इतस्तेष्वचिरात्पूर्य्यं स्वर्ग्यशक्तिप्रतिश्रवं । सत्प्रभोः स्थिरविश्वासाः प्रत्यैक्षन्त पुरे मुदा ॥३६॥ तद्वत्ते शिष्य सम्यग्विभुसुतसकलाश्चर्य्यवार्त्ता १९९
यथोक्ता तत्सच्छिष्यैः सदात्मग्रसितहृदयकैरादितोऽप्यातदन्तं । भूमीलोकेऽवतारः किल परमगुणाचार एवाथ शूले मृत्युश्चोत्थानमेवापमृतगणपदात्स्वर्गयात्रापि चोक्ता ॥३७॥
इति श्रीख्रष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (मत्थायमार्कलूकरचितसुसमाचाराणां चरमसर्गेभ्यो लूकरचितप्रेरितक्रियाणां प्रथमसर्गात् पौलस्य कुरिन्थ्यान् प्रति प्रथमलिपेः

पंचदशसर्गाच्चोद्धृतः) सपूर्वापरनवाहधन्यवृहस्पतिवारचरित्रसूचकः स्वर्गारोहणं नामोनविं
शो ऽध्यायः ॥

शिष्य उवाच ॥ अवतीर्णेशपुत्रस्य ससञ्जन्मचरित्रकं । माहात्म्यं सम्यगाचार्य्य त्वदुक्तं मे
ऽतिविस्तरात् ॥१॥ उर्द्ध्वतस्तु महाशक्तिदानं तत् तत्प्रतिश्रुतं । तेन चापि कृतं भूमिविजयं
शूलवाहिना ॥२॥ तं यथा त्वच्छ्रुतं पूर्व्वं संक्षेपादपि सांप्रतं । सर्व्वाज्ञानापहृत्यर्थं श्रोतु २००
मिच्छामि ते मुखात् ॥३॥ गुरुरुवाच ॥ सप्तमो रविवारो यत्त्राणीयार्कदिनात्परे । आया
तदादिपत्त्राणां यः पंचाशत्तमः किल ॥४॥ स द्वितीयमहापर्व्ववासरो ऽभूद्यहूदिषु । त
त्कृते संचितेष्वेव सर्व्वदिग्भ्यो ऽपि च क्षितेः ॥५॥ तदा च प्रभुसत्योक्तिपूर्त्तये वरशक्तिदः ।
सदात्मा पितृनिर्यातो ऽवातरत्प्रस्तरादिषु ॥६॥ प्रचण्डानिलशब्दे हि श्रुते तेष्वेकशास्तदा ।

विभिन्नरसनाकारानले मूर्द्धोपरि स्थिते ॥ ७ ॥ सद्यः सदात्मसंव्याप्ता नानानूतनभाषया ।
सर्व्वेषां संमुखेऽवोचंस्ते विभोरद्भुतक्रियाः ॥ ८ ॥ पारदानां तुरष्कानां तथा बाह्लीकवासिनां ।
नद्योर्द्वीपेस्थितानां च शकानां चेन्द्रदिश्यपि ॥ ९ ॥ कप्पदुक्यास्यपम्फुल्यभ्रुग्यानां चाप्युद
ग्दिशि । मैश्रकौरेण्यरोम्याणां चापि प्रत्यग्दिशि ध्रुवं ॥ १० ॥ आरबानां किरातानां
तथावाग्दिशि चैकशः । भाषयोचुस्तत्तद्देशोदासीननरगोचरे ॥ ११ ॥ तस्माद्विद्यगालील्य २०१
प्रवक्तृत्वात्तु तेऽखिलाः । यहूद्याः समतालम्बिव्यूहा विस्मयविप्लुताः ॥ १२ ॥ ततस्तान् प्रस्तरः
सर्व्वान् सहोधीव्याप्तमानसः । वधं मृत्यूत्थितिं चापि सत्वृष्टस्यात्यपादिशत् ॥ १३ ॥ सदात्म
विजितास्ते च खिन्नात्मानः स्वराद्वधात् । मुक्त्यै तद्दुंदसंस्कारं लेभिरे त्रिसहस्रकाः ॥ १४ ॥
तथा तत्पुण्यसूर्य्याहे त्राणीयमनु सत्तमे । दृढं निर्म्मातुमारब्धा खृष्टस्याजेयमण्डली ॥ १५ ॥

तद्दिनावधि नित्यं च वर्द्धमाना क्रमात्क्रमात् । प्रस्तराद्युपदेशेन सद्ग्रन्थप्रोदितं यथा ॥
१६॥ इस्रयेलराज उवाच ॥ समारूढ उर्द्ध्वं त्वमेवारिजेता प्रबद्धोचकर्थापि बद्धत्वमार्य्यैः ।
नरेभ्यश्च दानान्ययच्छस्ततस्त्वद्द्रिपुभ्यो ऽपि तन्मध्य ईशो वसेच्च ॥१७॥ गुरुरुवाच ॥ समारूढ
स्तु यः को ऽस्ति सो ऽवतीर्णः पुरा किल । भूमौ गर्त्ते ऽप्यधोलोके ऽथारूढस्तत्परे दिवं ॥१८॥
ततो दशदिनात्पश्चान्नृभ्यो दानानि सो ऽददात् । स्वारिभ्यो ऽपि स्थितेभ्यः प्राक् स्वहन्तृ २०२
भ्यो ऽप्यविनितः ॥१९॥ अददात्प्रेरितास्तेभ्यः प्रवक्तृंश्च सदात्मना । व्याप्तान् सुवार्त्ताप्रच
रान् पालकान् शिक्षिणो ऽपि च ॥२०॥ सर्व्वख्रीष्टाङ्गसंनज्ञे तस्यैकात्मतनौ किल । सन्मण्डल्यां
प्रसिद्ध्यै च तेषु सद्वाक्यकर्म्मणां ॥२१॥ सा सद्विश्वासिनां तद्वत् ख्रीष्टाङ्गानां तु मण्डली ।
निर्म्मिता शासिता चापि प्रेरिताद्याग्र्यपालकैः ॥२२॥ प्रत्यहे ऽवर्द्धत प्रेमस्पृहाविश्वाससंयुता ।

भासिता शिक्षकानां च वाग्भिः साश्चर्य्यकर्म्मभिः ॥२३॥ कायफादिमहायज्वगणः शिक्षां
त्विमां मृषा । निरोद्धुं तर्ज्जनैः कारादिदण्डैश्चोद्यतो ध्रुवं ॥ २४ ॥ शेषे स्तिफननामानमाश्रमे
परिचारिणां । नवे पालकसाहाय्यार्थे ऽर्पिते ह्युपवेशितं ॥२५॥ अप्रत्येतृयहूदीया गृहीत्वा
श्मासनेन तं । जघ्नुरात्मीयहन्त्रर्थे प्रार्थयन्तं मृतावपि ॥२६॥ आद्यस्तेजस्विवृन्दे स वर्य्या
णां खृष्टसाक्षिणां । तदर्थे न्यस्तजीवानामगण्ये मण्डलीप्रिये ॥२७॥ तद्वधात्तु समारब्धे २०३
ताडने खृष्टसेविनां । विस्तृता बहवस्तेषां पुरा यैरूषलेमकाः ॥२८॥ मुक्तिवार्त्तां यहूद्ये
च सामार्य्ये देश एव च । सुर्य्ये फैनीक्यके चापि प्रोचुस्तत्रैस्त्रयेलकान् ॥२९॥ प्रस्तरस्त्वैश्व
रस्वप्नवाण्यादिष्टः परान्वयान् । रौम्यकान् जलसंस्कृत्यावेशयत्खृष्टमण्डलीं ॥३०॥ सौलो
नाम तदा चापि फरोष्यः पण्डितो निजे । शास्त्रे यावन्यके चापि खृष्टीयारिरवित्तितः ॥

३१॥ तत्ताडनान्तरे ऽप्यूर्द्ध्वादाहूतः प्रभुणा मतिं । विकार्य्य जलसंस्कृत्या पूर्व्वाङ्गोमुक्तिमाप्न
वान् ॥३२॥ इतः पौलाभिधः ख्रीष्टप्रतीत्याः शिक्षकः स्थिरः । प्रेरिताश्रमनीतश्चान्यान्वयेभ्यो
विशेषयतः ॥३३॥ सहितो बार्णबेनापि लैव्येन प्राक् प्रभोर्मतं । प्राप्तेन प्रेरितेष्वेवं
नीतेनाथापि चेतरैः ॥३४॥ फलेस्तीन्यावधि स्पष्टं सुर्य्यास्ययवनादिषु । देशेष्विस्पान्य
पर्य्यन्तं प्रत्यग्द्वीपेषु च क्रमात् ॥३५॥ पुराताडितयेषूक्तिं व्यस्तृणोत्प्रेमचण्डहृत् । नाना २०४
पीडनमाप्त्वापि यहूदिभ्यो ऽन्यतो ऽपि च ॥३६॥ यहूदीयस्ताडनं ह्यादौ कृतमप्रत्ययैर्हतः ।
प्रथमः प्रेरितानां यैर्याकोबो जिबिदीयजः ॥३७॥ कृतमन्योद्भवैः पश्चात्स्वदेवार्च्चनवर्जनात् ॥
ख्रीष्टशिक्षोत्थिताक्रुद्धैः सभ्रष्टोत्सवहेलनात् ॥३८॥ अतो यद्यपि पीलातवार्त्तया विस्मिता
त्मकः । तिबर्य्या ऽर्पयितुं रोम्यदेवेषु प्रभुमैहत ॥३९॥ संकल्पो ऽयं न संसिद्धः ख्रीष्टशिक्षा

विलग्नतां । देवार्च्चनस्य सर्व्वेषु पश्यत्सु मतविस्तृतौ ॥४०॥ तत्परे चापि षष्ठेन नेरुणा
नाम कैशरां । नानार्त्तियुतदुर्म्मृत्या खृष्टीया दण्डिता भृशं ॥४१॥ रोमायां शूलविद्धो ऽपि
प्रस्तरो द्वादशाग्नियः । तदा खड्गहतश्चेह पौलो ऽन्यो राष्ट्रशिक्षकः ॥४२॥ प्रेरितानां गणे
चान्ये तथेतरनृपाज्ञया । मुदा घोरमृतिं जग्मुर्भक्तिनामार्थमेव हि ॥४३॥ देशे बार्थुलु
मायस्तु भारतीये यथोदितं । खृष्टनाम प्रचार्य्याथ पारसीकैर्हतो ऽरिभिः ॥४४॥ केरल २०५
द्राविडाद्येषु थोमास्तु प्रभुमण्डलीं । संस्थाप्येतः सदा तत्र संस्थां ब्राह्मणमारितः ॥४५॥
तथैवैकं विना सर्व्वे मम्रुर्द्वादश ते मुदा । बहवो ऽन्ये नरा नार्य्यः खृष्टार्थे शिशवो ऽपि च ॥
४६॥ मण्डली वर्द्धिताप्येतत्ख्यातसाक्षिगणासृजा । न्यविशच्चार्य्यवाक् तेषां समस्तं क्षिति
मण्डलं ॥४७॥ अप्रत्येतृयहूद्याश्च मिथ्याखृष्टाशया यदा । मोहिता रोम्यसाम्राज्यं प्रति

रोद्धुं प्रचक्रमुः ॥४८॥ तीतेन कैशरातश्च ससैनेन प्रवेष्टिताः । दृष्टा यैरूषलेमीया द्विषो
भूता मिथो ऽपि च ॥४९॥ यावती न जगत्सृष्टेः पीडाभूद्भुवि तावतीं । यदा प्रापुः क्षुधा
शङ्कया कृता बालपचाः क्वचित् ॥५०॥ यदा शेषे च पुण्यं प्राक् पुरं सविभुमन्दिरं ।
दान्येलखृष्टयोर्वाक्यानुसारादपरिष्कृतं ॥५१॥ ततो ऽग्निवधसंव्याप्तं नोपले ऽप्युपलोपरि ।
सुन्दरस्यौकसस्त्यक्ते विभुक्रोधोग्रदर्शनं ॥५२॥ तदा खृष्टविशिष्टौघस्तद्वचःश्रद्धयाद्रिषु । विद्र २०६
वन् केवलः सैन्यादप्राप्तैतद्व्यथो ऽभवत् ॥५३॥ अहरोणपदस्थश्चाग्र्ययज्वा याजकैः सह । परि
चारकलैव्यैश्च यदा छिन्नयहूदिनां ॥५४॥ ईशसंविद्विहीनो ऽभूत्तद्घोरसमयावधि । असाध्ये
ऽप्यखिलैर्भूते पर्वेष्ट्यादिविधौ विभोः ॥५५॥ तदा नवविधिं प्राप्ता सर्वदेशीयमण्डली ।
तन्निराकृतखृष्टस्य धीसत्वार्द्धास्ववर्द्धत ॥५६॥ धर्म्मीश्रमत्रयेणैव प्रेरितैः स्थापितेन हि ।

ईश्वजाङ्गसदेकत्वे संन्नद्धा रक्षितापि च ॥५७॥ शिष्य उवाच ॥ अस्मिन् पूर्त्तिर्मया दृष्टा प्रभोः
प्राङ्मृत्युतस्त्रये । उदितस्या गिरो हन्तॄंस्तान् प्रत्युद्यानकर्षकान् ॥५८॥ श्रेष्ठयज्वादिकानां
हि स्वामिपुत्रघ्नकर्षिणां । हन्तव्यानां कराद्वीतो ऽपहार्य्यं राज्यमैश्वरं ॥५९॥ निधेयं च
ततो ऽन्येषु तद्योग्यफलदायिषु । कर्षकेषु किलार्य्यीया मण्डल्या रक्षिषु प्रभोः ॥६०॥ त्व
दुक्तं त्र्याश्रमं त्वेनं ज्ञातुमिच्छाम्यहं स्फुटं । एकस्य चाहतस्यापि प्रेरितस्य सतः कथां ॥६१॥ २०७
गुरूरुवाच ॥ प्रेरितैः शासितायां सन्मण्डल्यामितराश्रमौ । संस्थितौ ज्येष्ठसंज्ञानां ततश्च
परिचारिणां ॥६२॥ ज्येष्ठाः पुरोहितास्त्वासन्मण्डलीपालकाश्च ते । प्रेरिता इव ख्रीष्टीय
सद्रहस्यविधायकाः । प्रभुनाम्नाघमुक्तिं च वादिनो बन्धमेव च ॥६३॥ परिचार्याश्रमस्त्वे
तद्विना सन्मण्डलीक्रियाः । करोति प्रार्थनाशिक्षादौ तज्ज्येष्ठोपकारकः ॥६४॥ तयोस्त्वा

श्रमयोर्विंश्यै योग्यानां वरणं नृणां । तत्संस्कारश्च मूर्द्धोपर्य्यर्पणेनैव हस्तयोः ॥६५॥ खृष्टा
ज्ञोच्चरणेनापि तस्मै तत्समये कृतः । केवलप्रेरितानां स मण्डलीशासिनां स्थितः ॥६६॥
किंतु सर्व्वत्र मण्डल्यां विस्तृतायां क्षितौ तदा । क्रमात्प्रतिपुरं तंत्रस्थितज्येष्ठगणान्तरे ॥
६७॥ एकं संस्थापयामासुर्ज्येष्ठं सत्प्रेरिता वरं । तयोः स्वाश्रमशक्त्योरप्यंशभाजं विशिष्ट
योः ॥६८॥ ते विशिष्टोपनीत्या हि प्रेरितानां पदस्थिताः । संश्चक्रुर्वै शशासुश्च ज्येष्ठान् २०८
सपरिचारकान् ॥६९॥ तथा प्रेरितकाले सा संनद्धा सर्व्वमण्डली । तथैतत्कालपर्य्यन्तं चापि
सर्व्वक्षितौ स्थिता ॥७०॥ एतच्छक्त्यन्विते धर्म्माध्यक्षे संस्थेऽन्यपूर्षु हि । सामान्यपाल
कैस्तत्र वृते सपरिचारकैः ॥७१॥ ततो यः प्रेरितेष्वेको जीवद्येषूप्रियः परे । यिरूषलेम
संदाहाद्योहन्निर्जिबिदीयजः ॥७२॥ स तदा प्रभुणादिष्टो ऽस्यपुराणां किलैकशः । धर्म्मी

ध्यृक्षान् प्रत्यलिखत्तन्मण्डल्यधिशस्तये ॥७३॥ परे चेफिसपुर्य्यां सो ऽतिवृद्धः ख्रृष्टसेविनां ।
मध्ये शान्तो ममारैवान्योन्यप्रेमादिशन् ध्रुवं ॥७४॥ तत्कालावधि हे शिष्य तस्य भव्योक्ति
पूर्त्तये । बहुधा दुष्परीक्षौघं प्राप्नोत्सन्मण्डली प्रभोः ॥७५॥ ताडिता प्राचि हि क्रूरैः
पारसीकनृपैर्भृशं । अग्न्यर्च्चिभिः प्रतीच्यां च क्लेशर्भिरपि रौम्यकैः ॥७६॥ शेषे ख्रृष्टशका
दब्दशतानां तु त्रये गते । सपादे दृष्टशूलाङ्कः कोंस्तान्तीनो महान् दिवि ॥७७॥ सत्य २०९
मालिंग्य देवार्च्चां त्यक्त्वा ख्रृष्टमतं क्षितौ । आदिशद्द्वारितुं मृत्योः प्राक् चाप्नोज्जलसंस्कृतिं ॥
७८॥ इतस्तत्पुत्रकोंस्तान्त्यपदस्थो यद्यपि स्वयं । यूल्यानो नाम ख्रृष्टीयमतं तत्याज
दुर्म्मनाः ॥७९॥ देवार्च्चां च दृढीकर्त्तुं पुनरिच्छन् स मन्दिरं । भूयो येरूषलेमीयमपि नि
र्म्मातुमैहत ॥८०॥ ख्रृष्टवाक्यनिराकर्तृदुःसंकल्पं त्विमं विभुः । निरुरोधाग्निगोलैरुर्व्युत्थैं

निर्म्मातृघातुकैः ॥८१॥ युध्यंश्च पारसीकैः स सह शल्यहतो मृतिं । प्राप्नोत्स्वप्रतिरुद्धाय जयं भूप्रभवे त्यजन् ॥८२॥ तत्परे शिष्य रोमायां खृष्टीयाः सकला नृपाः । आनत्साम्राज्यसारं शकैरुत्तरवासिभिः ॥८३॥ ते तु रूक्षात्मकास्तूतगत्थवान्दलका गणाः । प्रत्ययाज्याखिलश्रेष्ठध्वंसिनः शलभा इव ॥८४॥ तथापि खृष्टधर्म्मेण जिताः क्रूरत्वमत्यजन् । तदुत्पन्नश्च राज्यौघः संप्रत्यूरोपवासिनां ॥८५॥ प्राच्यां तु षट्शताब्देऽपि पूर्णे खृष्टशकात्परे । आरब्योर्व्युत्थिते मिथ्यामताधीशे मुहम्मदे ॥८६॥ भीमास्तदनुगा युद्धैः सुर्य्यादिस्थितखार्ष्टकान् । विनाल्पान् हतविश्वासीचक्रिरे वृश्चिका इव ॥८७॥ तत्परेऽष्टशताब्दे च तन्मतालम्बिनोऽजयन् । तुरष्का रौम्यसाम्राज्यप्राच्यांशमपि यावनं ॥८८॥ कोंस्तान्तीनपुरं चास्य राजधानीं विजित्य ते । खृष्टार्च्चनमहास्थाने स्वानृतार्च्चां समार्पयन् ॥८९॥ तथा

या ताडनैः पूर्व्वं नानापद्भिश्च मण्डली । ख्रृष्टीया पुण्यताशक्त्योर्वर्द्धनाय परीक्षिता ॥९०॥
पश्चाच्च ताडनान्ते या संसारीयप्रवंचनैः । परीक्षामधिकां प्रापाध्यक्षादिष्वैहिकानि हि ।
इच्छत्सु भोगकृष्टेषु विस्मृतेश्वरकर्म्मसु ॥९१॥ सर्व्वदापि च पाषण्डैर्व्विविधैर्या परीक्षिता ।
स्थिरात्मगणविज्ञात्यै मूढगर्व्विविभित्तये ॥९२॥ ततश्चैशात्मनोता या चतुर्ष्वखिलक्षितेः ।
संचिताध्यक्षसंसत्सु सत्प्रतीतिं व्यवर्णयत् ॥ ९३ ॥ सा परे स्वाङ्गबद्धद्रोहेतुतः प्रेमसंव्य २११
यात् । भूतासु रोम्ययावन्यमण्डलीषु पृथक् पृथक् ॥९४॥ उभयोश्चान्तरे नानाभ्रष्टभावे
समुत्थिते । दण्डिताप्यभवत्स्वाङ्गापच्छेदेनाप्रतीतिभिः ॥९५॥ किंतु तद्विषयं प्रोचे सत्प्र
भुर्यं प्रतिश्रवं । पातालद्वार्बलाजेया मयाप्यो त्वयि मण्डली ॥९६॥ इति स प्रस्तरायोक्तः
सद्विश्वासोक्तिवादिने । दृढः संस्थो न चाप्युर्व्यां निराकार्य्यः कदाचन ॥९७॥ लूनेष्वपि

तदंशेषु केषुचिन्न पतेद्भवः । स्वृष्टदेहस्तदादेशदायभाक् प्रेरितव्रजात् ॥ ९८ ॥ धर्म्मा
ध्यक्षावलीदत्तं तदादेशं परम्परा । धरन् ह्येकत्वपुण्यत्वशक्तियोनिं निरन्तरं ॥ ९९ ॥
तन्मण्डल्यङ्गमीक्षेथां सुर्य्योत्थं केरले स्थितं । अन्यच्चेह शकोत्थं यत्पालकौघे ऽर्पितो ऽस्म्यहं ॥
१००॥ शिष्य उवाच ॥ तन्मण्डल्यामहं वेष्टुं जलसंस्कारतो गुरो । इच्छामि प्रस्तरोक्तं
सद्विश्वासं प्राप्नुवन् हृदि ॥१०१॥ नित्यजीवद्विभोस्त्वं हि पुत्रमेकं नरीकृत । अवतीर्णं २१२
नराघानां स्वीयमृत्यापनीतये ॥१०२॥ प्रत्ययन्नेव तद्विद्धकक्षस्त्वद्पामहं । भागी भवितु
मिच्छामि स्वपापमलमृष्टये ॥१०३॥ गुरुरुवाच ॥ त्वत्प्रार्थितं करिष्यामि ज्येष्ठाख्यो ऽहं पुरो
हितः । मुदा प्राक् तन्निजाध्यक्षं प्रोच्याज्ञां प्राप्य तस्य च ॥१०४॥ जलसंस्कृतये ऽलं त्वज्ज्ञा
नेन यदितस्तु ते । हृदा रक्ष्यं भवेद्यत्नादध्येयं चापि सर्वदा ॥१०५॥ तदेव ज्ञापयामि त्वां

ग्रन्थानां नवसंविदः । निकुरुम्बं सतां प्रत्नग्रन्थेषूक्तेषु ते पुरा ॥१०६॥ मण्डलीनित्यनीत्यै य
न्निःश्वासेन सदात्मनः । पृथक् स्वत्त्वानुगैः सम्भिर्लिखितं ह्याद्रियामहे ॥१०७॥ सर्वादौ सु
समाचारचतुष्टयमधीयते । मृत्युपर्य्यन्तसत्स्वृष्टयेषूचरितसूचकं ॥१०८॥ प्राक्स्याहिणाद्यस्तु
रचितः प्रेरितेन वै । मत्थायेनैत्त्रयेल्यर्थे ऽचिरात् तद्भाषयापि च ॥१०९॥ यावन्या त्व
धुना शेषग्रन्थानामिव तस्य हि । मूलमाप्तं प्रभूक्तीः सभव्यवाक्पूरणा वदत् ॥११०॥ तद्द्वि २१३
तीयस्तु सख्यैव प्रस्तरस्य व्यरचत । मार्केण रौम्यवर्गार्थं ह्रस्वो यावन्यभाषया ॥१११॥
तृतीयश्च तथा सुष्ठुरचितो भिषजा स्वयं । लूकेन यवनार्थं वै सख्या पौलस्य धीमता ॥
११२॥ चरमो ऽन्यास्मृतानां तु प्रभुवाचां सकर्म्मणां । स्मृत्यै सर्व्वत्र तासां च रहस्यार्थोप
दिष्टये ॥११३॥ तत्प्रेरितगणातीवप्रिययोहन्निना किल । यिरूषलेमसंदाहात्परे विर

चितः सता ॥११४॥ तच्चतुर्थसमाचारात्प्राक् तृतीयात्परे त्वपि । निजाद् ग्रन्थेन नूत्नेन
लूकोक्ताः प्रेरितक्रियाः ॥११५॥ ततः पौललिपीनां तु चयः सन्मण्डलीदृतः । ईरितानां
पृथङ्नानामण्डलीः प्रति दिष्टये ॥११६॥ तेदका लिखिता रोम्यान् खृष्टीयान् प्रति वर्ण
[illegible] । नृणां पापं विशुद्धिं च कृतां खृष्टप्रसादतः ॥११७॥ द्वे लिपी तु कुरिन्थाख्यया
[illegible]न्यपुरवासिनां । मण्डलीं प्रति नुन्ने तन्नानामलविमृष्टये ॥११८॥ अन्यैका लिखिता तद्व २१४
ङ्गालात्यां प्रति मण्डलीं । एफिसीयां च प्रत्येकोभे स्थिते अस्यनीवृति ॥११९॥ फिलिप्पीयां
प्रति त्वेका यावनीं मण्डलीं नवां । कुलुस्सीयान् प्रति त्वेका संस्थितामस्यनीवृति ॥१२०॥
द्वे तु थस्सालनीकीयां मण्डलीं प्रति यावनीं । तीमथ्यं च प्रति द्वे स्वार्पिताध्यक्ष्यं किलेफिसे ॥
१२१॥ तीतं प्रति तथा क्रेतद्वीपे ऽध्यक्षं किलात्मना । अर्पितं तत एका च फिलेमानं प्रती

रिता ॥१२२॥ तत एकैस्त्रयेलीयखृष्टीयान् प्रति सल्लिपिः । भूर्युक्ता किल पौलस्य बार्ण
बस्य तु कैरपि ॥१२३॥ तल्लिपिभ्यः परे ऽन्या चाल्पयाकोबस्य सल्लिपिः । यिरूषलेमा
ध्यक्षस्य सामान्याख्या स्थिता सतः ॥१२४॥ तत्परे प्रस्तरस्यापि सामान्याख्यं लिपिद्वयं ।
ततश्च प्रेष्ठयोहन्नेः कांश्चित् प्रति लिपित्रयं ॥१२५॥ यह्रूदस्याल्पयाकोबभ्रातुरेका ततो
लिपिः । सामान्याख्या परे चास्या ग्रन्थ एको ऽद्भुतः स्थितः ॥१२६॥ यं नूनः खृष्टनामार्थं २१५
दर्शित्यानेन कैशरा । पत्मद्वीपे लिलेखार्य्यो योहन्निर्जिबिदीयजः ॥१२७॥ तस्मिन्
हि खृष्टमण्डल्याः परीक्षा आपदो ऽपि च । दोषदण्डांश्च संभव्यानाजगच्छेषमेव सः ॥१२८॥
सदात्मज्ञापितो गुर्व्वाक्यैरपि सदर्शनैः । प्रवक्ति सर्व्ववंशानां साधूनामुपदिष्टये ॥१२९॥
एते शिष्यार्य्यमण्डल्या ग्रन्थाः सर्व्वत्र संस्थया । सर्व्वसत्यविवेकाय सदात्मरचिता मताः ॥

१३०॥ मण्डलीपितृभिर्ग्रन्थान् द्रियन्ते लिखितान् परान् । एतांस्तु केवलान् प्रोक्तान् मन्यन्ते दोषरूपकान् ॥१३१॥ अधुना शिष्य तत्पश्चाद्रचितं त्रिशतं समाः । प्रभोः शृणु महास्तोत्रं मण्डली पठितं सदा ॥१३२॥ इति श्रीख्रीष्टसंगीतायां मोक्षमाहात्म्यपर्व्वणि (द्वाविंशतीतानामष्टषष्टि [illegible]रचितप्रेरितक्रियाग्रन्थान्नानाप्रबन्धेभ्यश्चोद्धृतः) सदात्मशासितमण्डलीप्रबन्धो नाम विंशो ऽध्यायः ॥ २१६

गुरुरुवाच ॥ त्वामीशं संनुमो वै वयमखिलपतिं त्वां वयं प्रस्तुमश्च विश्वैवं शाश्वतं त्वां पितरमपि धरा पूजयत्यार्य्यभक्त्या । त्वां दूताः सर्व्व उच्चैः ससकलबलकाः स्वर्गलोकाश्च सम्यक् त्वां केरूब्यः सिराफ्यो ऽप्यविरतवचसा नादयन्त्यूर्द्ध्वलोके ॥१॥ पुण्य पुण्य किल पुण्य हे विभो स्वर्गलोकबलेश्वर ध्रुव । गौरवस्य तव तेजसा सदा पूरिते द्युवसुधे मही

थसा ॥२॥ त्वां प्रेरितानां गण ओजसान्वितस्त्वां भव्यवाचामतिशंस्यसंचयः । त्वां साक्षि
सेनैडयते ऽर्जुनाम्बरा त्वां मण्डली सर्व्वधरान्तरे सती ॥३॥ अमितमहिमयुक्तं त्वां किलैते
ह्यनन्तं पितरमिति समस्ता एकवाचेडयन्ते । सममपि तव पुत्रं सत्यमेकं प्रशंस्यं सममपि
च सदात्मानं वरादेशदं नः ॥४॥ त्वं तेजोनृप एव खृष्ट पितुरप्यार्य्यः सुतोऽनादिकस्त्वं नॄन्
मोचयितुं समिच्छुरनवज्ञातार्य्यकन्योदरः । त्वं संजित्य तु मृत्युदंशमखिलप्रत्येतृवृन्दार्थं २१७
[illegible]न्यादद्दिषे तदेव वरद स्वर्गीयराज्यस्य राट् ॥५॥ त्वमेवैनत्सर्व्वं मरणपुनरुत्थः
प्रकृतवान् विभोर्दक्षे हस्ते स्वपितृमहिमन्यासिष इतः । त्वमागन्ता तस्मात् पुनरपि
विचारार्थमिह न इति प्रत्येतारो वयमतिदृढं त्वद्भृतगणाः ॥६॥ अत आत्मभुजिष्यसंचयं
तव हि क्रीतममूल्यकासृजा । उपकुर्व्विति सर्व्वदा वयं नु दयालोऽर्थयितार ईशज ॥७॥

गतः स्वभृतकान्निजपुण्यव्यूह एव गणय स्वदयायाः । निजवृन्दमधिकारमवाशीर्वाद
राद्ध तमवरोहय नित्यं ॥८॥ त्वां संस्तुमः प्रत्यहमेव ते च सन्नाम शंसाम इहाप्यनन्तं ।
अस्मान् प्रभो सद्दयया ततो ऽद्य सर्वाघहीनान् परिरक्ष नित्यं ॥९॥ अस्मभ्यं त्वं निजसु
करुणां देहि देहि प्रभो नो ऽस्मास्वेवं ते पततु करुणास्मोकमाशा त्वयीव । त्वय्येवाहं निजमपि
दृढं सर्वविश्वासमार्य्यं न्यास्यं मा चाहमिह सततं संहताशोभवानि ॥१०॥ इति श्रीखृष्ट २१८
गीतायां मोक्तृमाहात्म्यपर्व्वणि (इषायभव्यवाक्यानां षष्ठसर्गादम्ब्रोष्यरचितात्सामोधीत्यादि
गीतात्त्वोद्धृतः) सर्व्वशक्तिमन्मोक्तृस्तोत्रं नामैकविंशो ऽध्यायः ॥

समाप्तं चेदमष्टसप्तत्यधिकसार्द्धसहस्रश्लोकात्मकं मोक्तृमाहात्म्यनामकं चतुर्थं पर्व्व ॥